# संस्कृत-निबन्ध-मन्दाकिनी

डॉ० आद्याप्रसाद मिश्र

• प्रथमं संस्करणम् : १९८४

• मूल्यम् : रूप्यकशतम्

• प्रकाशक :

अक्षयवट प्रकाशनम्
२६, बलरामपुर हाउस
इलाहाबाद-२

• मुद्रक :

शाकुन्तल मुद्रणालय
३४, राय रामचरन रोड
इलाहाबाद-२

# किञ्चिन्निवेदनम्

निबन्ध-रचना नून नूतनाऽधुनिकी कला लेखनस्य। यद्यपि दशकुमारचरित-
रत-कादम्बरीप्रभृतीना गद्यकाव्याना तथा च महाभाष्यस्य, दर्शनसूत्र-तद्भाष्याणा
ाङ्करादिकृताना चानेके स्वतन्त्रप्राया सन्दर्भा आधुनिकनिबन्ध-समकक्षास्तथापि
प्रसर परिमितपरिमाण लोकोपयोगिन कमपि महत्त्वपूर्ण विषयमधिकृत्य
नबिन्दुभिर्विचारप्रस्तुतिर्यस्मिन् निबन्धनामके आधुनिके विशिष्टरचना-प्रकारे क्रियते,
नमेव नूतना विधा लेखनस्येति वक्तु शक्यते। यद्यप्यस्या लेखन विधाया
ाणमिदन्तया इयत्तया चावधारण दुष्करमेव, तथापि ते भाषा-साहित्य-सस्कृति-
धर्म दर्शन-काव्यशास्त्रसम्बद्धास्तथा च सामाजिक-राजनीतिकादिसमस्यासमाधनपरा
वितुमर्हन्ति। एव परश्शतेषु विषयेषु सम्भाव्येष्वपि कैश्चिद्विशिष्टोपयोगिनामेव
। निबन्धरचनार्थमत्र कृतम्। फलत पञ्चाशद्विषयका एव निबन्धा अस्या
न्तनिबन्धमन्दाकिनीतिनूतनकृतौ सङ्गृहीता।

कस्मिंश्चिदपि सस्कृतनिबन्ध-सङ्कलनात्मके ग्रन्थे सस्कृतभाषा, तत्साहित्य, तत्कवीन्,
ास्त्र-सिद्धान्ताश्चाधिकृत्य रचिता लेखा बाहुल्येन भवेयुरिति मनसि कृत्वा तेषा
ी सङ्ख्याऽत्र कृता। स्वराष्ट्रस्य भारतस्याखण्डतया एकात्मतया अनेकतासु
ायाश्च सरक्षणे सस्कृतभाषायास्तत्साहित्यस्य च यत सुमहान्
ऽस्माकमितिहासस्यादिमयुगादेवावर्तत, अतोऽप्येतद्विषयका निबन्धा प्राथम्य प्राधान्य
प्राप्तवन्त। एतदनन्तर स्वराष्ट्रमहत्त्वप्रख्यापनपरा राष्ट्रियतापोषकाश्च निबन्धा
यस्ता। यतो हि स्वराष्ट्रमेव सर्वाधिक महत्त्वपूर्ण गौरवास्पद च, राष्ट्रे सुरक्षिते एव
सुरक्षितास्तस्मिन्नरक्षिते चारक्षिता। यतो राष्ट्रियता राष्ट्रस्य नदी-वन-वृक्ष-पर्वत-
वर-वनस्पतिप्रभृतिषु निखिलसम्पत्सु आत्मीयताया प्रगाढप्रेम्णो दृढासक्तेश्चोदाततमो
ेऽस्ति, अत एतद्विषयका निबन्धा राष्ट्र-राष्ट्रियतयोर्निबन्धेभ्योऽनन्तरमेवोपन्यस्ता।
हि सस्कृतवाङ्मये पदे-पदे पल्लवितानि अनर्घाणि मानवजीवनमूल्यानि एव
धजीवनस्यैकरूपत्व स्थिरत्व च निश्चितत्वन्तास्तस्मात् राष्ट्रियपक्षा निबन्धास्तदनन्तर
ुता। तदनन्तर च स्वराष्ट्रस्वरूपपरिज्ञापिनी धार्मिक-सास्कृतिकाध्यात्मिकचिन्तनधारा,

# निवन्धानुक्रमणिका

# संस्कृतं नाम दैवी वाक्

सस्कृत नाम दैवी वागन्वाख्याता महर्षिभिरिति दण्डिना प्रोक्त स्वकीये काव्यादर्शनामके काव्यशास्त्रीये ग्रन्थे। अस्मिनुद्धरणे 'दैवी वाग्' इत्युक्त्वा सस्कृतभाषा परिभाष्यते, महर्षिभिरन्वाख्यातेत्यशेन च सा दैवी वाग् विशिष्यते। महर्षिभिरन्वाख्याता दैवी वाक् सस्कृतमित्युच्यत इत्यस्य तात्पर्यम्। विशेषत प्रसिद्धेन पाणिनिकात्यायनपतञ्जलिनामकाना मुनीना त्रयेण स्वीयाष्टाध्यायीतत्पूरकवार्तिकतदुभय-व्याख्यातृमहाभाष्याख्यग्रन्थत्रयनिर्माणद्वारा, अपशब्दादिदोषनिवारणपूर्वकान्यदोष-परिष्कारेण सस्कारसमन्विता भाषा सस्कृतभाषा अन्वर्थनाम्नी। पाणिनेरनु पश्चात् वार्तिककृता कात्यायनेन, तदनु च महाभाष्यकृता पतञ्जलिना परिष्क्रियमाणा क्रमेण, व्यवहृति च नीता सस्कृतनामभाक् सञ्जाता। पाणिने पूर्वमपि जातैरनेकैरन्यैरपि वैयाकरणै कृतसस्कारेय भाषासीत्। गार्ग्यव्याडिस्फोटायनशाकटायनादयो दशाधिकवैयाकरणास्तेन स्वकीयाष्टाध्याय्या नामतोऽभिहिता उद्धृतसिद्धान्ताश्च। एभि क्रमेणान्वाख्याता सतत विकासमनुभवन्ती परिवर्तमाना पौनपुन्येन व्याकरणादिसस्कारमपेक्षमाणा कालान्तरे पाणिन्यादिभि पुनरपि कृतसस्कारा बभूव। एवमृषिमुनिभिरनेकश सतत सस्क्रियाणा भाषा स्वभावत एव सस्कृतमिति अन्वर्थं यथार्थं वा नामाधिगतवती।

इय सस्कृतभाषा दैवी वागिति दण्डिनो वच। कथमिय दैवी वागित्यस्योत्तरत्वेन वक्तु शक्यते यद् विद्वासो हि देवा देववत् सत्त्वगुणबाहुल्यात्, विद्वज्जनव्यवहृता चेय सस्कृतभाषा, तस्मादिय देवभाषा, देववाणी, सुरगवी, देवगवीत्यादिभिर्नामधेयैर्व्यवह्रियते। वस्तुतस्तु प्राचीनकालादारभ्य अद्यावधि अखण्डजीवनशालिनी जीवितात्वहा सस्कृतभाषा, तस्मादेव 'दैवी'—देवानाममराणामियमिति कथ्यते। कथमन्यथा अजरैरमरैश्च देवै सह सम्बन्ध सम्पर्कं वा विनैव अमरजीवनशालिनी स्थिरप्रवाहा भवितुमर्हति। यस्य कस्यापि जीवनप्रवाहोऽवरुद्ध, यस्य वा जीवनधारा खण्डिता, कथ तस्य जीवनस्य स्थायित्वममरत्वापरनामक, कुतो वा तस्य निर्जरत्व नित्ययौवनवत्व युवशक्तिमत्वम्। अस्या पुन सस्कृतभाषाया अमरत्वे नित्यजीवितत्वे वा किमतोऽन्यद् बलीय प्रमाण यदद्यापि अनुदिन सस्कृते नाट्यकाव्यानि लिख्यन्ते, महाकाव्यानि विरच्यन्ते, गीतकाव्यानि

ग्रथ्यन्ते, कथाख्यायिकादिगद्यकाव्यानि निर्मीयन्ते, अन्यानि चानेकविधानि साहित्यिक्कार्याण्यनुष्ठीयन्ते। एवमस्या भाषाया निबद्धा विविधा विपुलवाङ्मयसमृद्धिः सर्वेषामीर्ष्याप्रदा। अतएवोच्यते, अनवच्छिन्नप्रवाहा अनवरुद्धगतिरियं भाषा अमरत्वापराभिधानदेवत्वमयी, अतश्चेयं दैवी वाक्।

एवं सत्यपि एतद्विपरीतं ये पुनः संस्कृतवाङ्मयज्ञानाभावादेव 'मृतेयं भाषा संस्कृताख्येति' भाषन्ते, ते स्वीयमज्ञानं मौढ्यमेव च केवलं प्रदर्शयन्ति। तेषां विषये केवलमिदमेव वक्तुमुचितम्—"पामरास्तु प्रजल्पन्तु संस्कृतेन मृतेन किम्। मुक्तकण्ठं प्रशंसन्ति प्रतीच्या अपि चेदिमाम्॥" इति। कथमस्या भाषाया अनवच्छिन्नप्रवाहता, कुतश्चास्या अमरतेति विचारे कृते मनसि स्फुटीभवत्येतत् तथ्यं यद् दैवगुणसम्पदभिव्यञ्जकत्वादर्पीयं दैवी। अस्यां विद्यमाना वेदा धर्मशास्त्राणि स्मृतयः पुराणानीतिहासा अन्ये चोपनिषदादिग्रन्था अध्यात्मज्ञानप्रतिपादनपराः, येषामध्ययनेनैतच्छिक्षापालनेन च जनाः सदसद्विवेकपरा देवत्वमया धर्मपरिपालना-धर्मपरित्यागद्वारेण परां शान्तिमवाप्तुं पारयन्ति, आसुरदुर्गुणपरित्यागपूर्वकदैवगुणप्राप्त्या देवत्वसमन्विता भवन्तीत्यस्यापि हेतोरियं भाषा संस्कृताख्या 'दैवी' वाक्। अत्र तु आचारस्यैव प्रथमधर्मरूपता सुस्पष्टमनेकशः प्रतिपादिता 'आचारः परमोधर्मः', 'आचारहीनं न पुनन्ति वेदाः', 'वृत्ततस्तु हतो हतः' इत्यादिविधिनिषेधोभयमुखेन। अयं च सदाचारो बहुविधो बहुत्र बहुशश्च प्रतिपाद्यतेऽनवरतं काव्यादिषु। द्वित्राण्येवोदाहरणानि पर्याप्सयन्ति।

"तृष्णां छिन्धि भज क्षमां जहि मदं पापे रतिं मा कृथाः,
सत्यं ब्रूह्यनुयाहि साधुपदवीं सेवस्व विद्वज्जनान्।
मान्यान् मानय विद्विषोऽप्यनुनय प्रच्छादय स्वान् गुणान्,
कीर्तिं पालय दुःखिते कुरु दयामेतत् सतां लक्षणम्॥"

इत्येवं सन्तो लक्षिता विवेकिना भर्तृहरिणा। 'आत्मनः प्रतिकूलानि परेषां न समाचरेद्' इति पूर्वैरप्युक्तम्।

'अन्या जगद्धितमयी मनसः प्रवृत्ति-
रन्यैव कापि रचना वचनावलीनाम्।
चेतोहरा च कृतिराकृतिरार्तहृद्या-
विद्यावतां सकलमेव गिरां दवीयः॥'

इति पण्डितराजेन जगन्नाथेनोक्त स्वकीये भामिनीविलासे।

'प्रियप्राया वृत्तिर्विनयमधुरो वाचि नियम,
प्रकृत्या कल्याणी मतिरनवगीत. परिचय।
पुरो वा पश्चाद्वा तदिदमविपर्यासितरसं,
रहस्यं साधूनामनुपधि विशुद्ध विजयते॥'

इत्येव साधुचरित चित्रित भवभूतिना स्वकीयोत्तररामचरिते।

अलमतिप्रसङ्गेन। समासेनेद वक्तु पार्यते यदस्या भाषाया एभिर्गुणैरेव एतद्भाषिण एतदध्येतार. एतदनुशीलनपराश्चैव पुरुषा देवत्वयुक्ता देवोपमा दैवगुणविशिष्टा भवितुमर्हन्ति। दैवी वाग् इय सस्कृतभाषेत्यत्र एतदपि महत्त्वपूर्ण कारणम्। अत्र यज्जीवनदर्शन दृष्ट, या जीवनपद्धतिरुन्मीलिता, यो नैतिकादर्श प्रस्थापित., यच्च ज्ञान प्रदत्त, तत् सर्व भारतस्य कृते तु कल्याणावहमस्त्येव, विश्वस्यापि कृते महदुपकारकरम्। अत ईदृश्या भाषाया, अस्या ईदृशस्य महार्घस्य महनीयस्य च वाड्मयस्याध्ययन सर्वथाऽपेक्षित, नोपेक्षितव्यम् कदापि कथमपि।

□

एतत् सर्वमेकमेव तथ्यमुन्मीलयति तच्चेद यत् प्राचीनतमयुगादारभ्य मध्ययुगान्त यावत् संस्कृतभाषा प्रचुरप्रचारा लोकप्रिया चासीत्। अस्यानेककारणेषु बहूनि पूर्वमुक्तानि। अस्या भाषाया वाङ्मये विद्यमान गम्भीर ज्ञान लौकिकपारमार्थिक, समुत्कृष्ट विज्ञान लौकिकोन्नतिकारक, नाट्यकाव्यादिक सर्वलोकाह्लादक हृदयावर्जक चाप्रतिमामिमा विदधति। अस्या स्थिररूपत्व, देशव्यापित्व, जगन्मान्यत्व, ज्ञानविज्ञानाश्रयत्व चानन्यसाधारणा गुणा। चरकार्यभटवराहमिहिरभास्करादय. स्वकालिकप्राकृतेषु निजग्रन्थान् व्यरचयिष्यश्चेत्, सर्वथा लुप्तप्रायास्तद्विद्या अभविष्यन्, यथा पैशाचीप्राकृते निबद्धा बृहत्कथा संस्कृतच्छायामात्रजीविनी इदानीम्। यथा देशव्यापिनी संस्कृतभाषा न च प्रदेशपरिमिता, तथा प्रदर्शित पूर्वम्। नैतावदेव, इय पूर्ववदेवाद्यापि कम्बोजे, ब्रह्मदेशे, नयपालदेशे, श्यामदेशे, सिंहलदेशे यवबालिसुमात्रवरुणादिद्वीपेषु चाधीयते प्रयुज्यते च। स्वगुणगरिम्णा चेय शर्मण्यादिदेशेष्वपि पदमादधाना परिलक्ष्यते। सैषा देशव्यापिनी बहुज्ञानविज्ञाननिधानभूता, साम्प्रतमपि आधुनिकविज्ञानप्रसवे समर्था संस्कृतभारती नाभ्यस्यते चेद् भारतीयै श्रद्धया, तर्हि महद् दुर्भाग्यमेतत्।

□

# संस्कृतशिक्षासंरक्षणोपायाः

सस्कृत हि निरुपम शेवधिर्भारतस्य। प्राचीनभारतीयसस्कृतेर्मूल वेदा सरहस्या., धर्मशास्त्राणि, पुराणानि, उपपुराणानि, व्याकरणनिरुक्तज्योतिषादीनि वेदाङ्गानि, गन्धर्वायुर्धनुर्वेदादय उपवेदा अस्मिन्नेव सुरक्षिता। भारतीयाना स्वोत्थानैतिह्य, वैभवप्राप्त्यर्थ तै सतत कृतस्य सघर्षस्येतिहास., अध्यात्मजगति तेषा प्रगतेरुपलब्धीना च कथा— सर्वमेतस्मिन्नेव निहितम्। एतस्य सर्वस्य ज्ञानाय, स्वधर्मतत्त्वस्य परिचयाय, आत्मतत्त्वस्य बोधाय च सस्कृतवाङ्मयस्याध्ययन न केवल वाञ्छनीयमपितु सर्वथा अपेक्षितम्। यस्मिन् सस्कृतवाङ्मये सर्वहृदयाह्लादक वाल्मीकिकृत रामायणसदृशमादिकाव्य वर्तते, यस्मिन् महामुनिना व्यासेन कृत महाभारतसदृश पञ्चमवेदस्वरूपमितिहासकाव्य वर्तते, यस्मिन् पाणिनिकात्यायनपतञ्जलीना सर्वाङ्गपूर्णा व्याकरणविषयककृतयो वर्तन्ते, यस्मिन् शुक्रवृहस्पतिकामन्दकचाणक्यसदृशाना राजनीतिविशारदाना राजनीतिप्रतिपादका ग्रन्था लभ्यन्ते, यस्मिन्नार्यभटवराहमिहिरभास्करप्रभृतीना कृतय उपलभ्यन्ते, यस्मिंश्च कालिदासभारविबाणभवभूतिसदृशाना महाकवीना हृदयाह्लादकारीणि काव्यानि राजन्ते तस्य गुणगरिम्ण विभूतेश्च का कथा ? एव सत्यपि खेदजनकमेतद् दु खावह च यत् स्वोत्पत्तिदेशे भारते एव सस्कृतमुपेक्ष्यते। यावत् सस्कृतस्य गुणगरिम्णा मुग्धा वैदेशिका सस्कृतस्याध्ययने, तत्रस्थग्रन्थाना मनने च प्रवर्तन्ते स्वीयविद्याप्रतिष्ठानेषु सस्कृतस्याध्ययनाध्यापनादेर्व्यवस्था च विदधति, तावद् वय भारतीया अस्योपेक्षा कुर्म। निस्सन्देहमियमुपेक्षा स्वराष्ट्रापकारिणी, स्वराष्ट्रविनाशिनी च।

अस्माक केन्द्रीयशासनेन सस्कृतस्य प्रचाराय प्रसाराय च, तद्वाङ्मयस्याभिवृध्यै च राष्ट्रियसस्कृतसस्थान, राज्यशासनैश्च सस्कृत-अकादम्य सस्थापिता। उत्कृष्टसाहित्यसर्जनार्थं पुरस्कारादीना, सस्कृतस्य प्रचारप्रसारादिसेवाया कृतेऽनुदानादीना च यद्यपि तद्द्वारा समुचिता व्यवस्था कृता., तथापि एतासा सस्थाना कार्यकलापो न सन्तोषावहो यतो न स परिणामावहो दृश्यते।

आधुनिकशिक्षापद्धतौ सस्कृतभाषाया शिक्षायै न किमपि स्थान प्रदत्तमस्ति। विदितचरमेवैतत्तथ्य सर्वेषा यत् त्रिभाषासूत्र राष्ट्रभाषा-अन्ताराष्ट्रियभाषा-प्रादेशिकभाषा-

णामेव समाहार समन्वयश्च लक्ष्यते स्म। अहिन्दीभाषिषु प्रदेशेषु प्रान्तीयभाषारूपेण तमिल-तेलगु-मलयालम-कन्नड-बङ्गीयभाषा अधीयन्ते स्म। राष्ट्रभाषारूपेण हिन्दी, अन्ताराष्ट्रियभाषारूपेण च आङ्गलभाषा तत्र अधीयते स्म। एवमहिन्दीभाषिषु प्रदेशेषु संस्कृतस्य स्थापनमध्यापन च शिक्षाक्रमे दुष्करमेवासीत्। हिन्दीभाषिषु दाक्षिणात्यभाषाध्ययने दुराग्रहो निधीयते स्म, तेषा शिक्षाक्रमे संस्कृतस्य प्रवेशो निषिद्ध एवासीत्। एव त्रिभाषासूत्र संस्कृतस्याध्ययने विघातकमेव, न पुन साधकमासीत्। एव सत्यपि केषुचित् प्रदेशेषु संस्कृतस्य गौरवानुरोधेन हिन्दीभाषाया पाठ्यक्रम एव न्यूनाधिकरूपेण संस्कृतस्य समावेशो विहित किन्तु न स कथमपि पर्याप्त। हिन्दीभाषिणा प्रदेशाना शिक्षाक्रमे तृतीयभाषारूपेण संस्कृतस्य स्थानमनिवार्यरूपेण करणीयम्। अहिन्दीभाषिषु प्रदेशेषु राष्ट्रभाषाया हिन्द्या पाठ्यक्रमे एव, अथवा प्रादेशिकभाषाया पाठ्यक्रमे संस्कृतस्य समाहार करणीय। देशहितस्य दृष्ट्या, राष्ट्रियान्ताराष्ट्रियक्षेत्रेषु संस्कृतस्य गौरवानुरोधेन च ईदृशी नीति स्वीकरणीया केन्द्रशासनेन, तदैव संस्कृतस्य रक्षण प्रचार प्रसार सवृद्धिश्च भवेत्, नान्यथा।

संस्कृतज्ञा अप्यस्मिन् विषये किञ्चिदनुरोद्धव्या। आधुनिकपरिस्थितौ संस्कृतभाषा निखिलेऽपि राष्ट्रे प्रचलेत् प्रसरेच्चेत्येतदर्थमेषा सामयिकी करणीया। सप्रयत्नमस्यामभिनवविज्ञानादिक सयोजनीयम्। अभिनवभूगोलादिविज्ञान कलाशिल्प-वाणिज्यादिक च, गम्भीर ज्योतिर्गणितादि गरीयो विज्ञान चापि संस्कृतविद्वद्भिरस्या भाषाया सयोजनीयम्। एव कृतेऽस्या उपयोगिता वृद्धि गच्छेल्लोकश्चैना प्रति महत्तरोत्साहेनाकृष्टो भवेत्। एवमस्या रक्षण साधु सम्पत्स्यते। प्राचीनेऽपि कालेऽस्या उपयोगिता वर्धयितुमेवमेव कृत विद्वद्भ। भगवता कृष्णद्वैपायनेन ब्राह्मणानि अनुपयुज्यमानप्रायाणि उपलभ्य पञ्चमो वेदो भारतराशि प्रतिष्ठापित। आ ब्राह्मणाद् आ च स्वकालात् यद्विज्ञान तत्सग्रहायेमा बृहत्सहिता निबध्नीयामिति मनसि कुर्वन् वराहमिहिरो ता न्यबध्नात्। पुराणान्युपपुराणानि चाग्नेयस्कन्दादीनि स्वकालिकस्थाप-त्यभूगोलादिविज्ञाननिधानानीव न्यबद्ध्यन्त। सिद्धान्तशिरोमणिप्रभृतीनि प्रबन्धरत्नानि भास्करादिभि प्रणीतानि। अतो वाग्विलासैर्वितण्डादिभिश्चामूल्य सम-यमखण्डयन्त संस्कृतविद्वास इमा भारतभारतीं वस्तुसम्पद्भि सयोज्य तद्रक्षाया स्वकीय सहयोग दद्युरिति ते सविनय सप्रश्रय च भूयोभूय प्रार्थ्यन्ते। परिरक्ष्यता संस्कृतभारती स्वदेशेऽपि देशान्तरेष्विवेति सम्बोध्यन्ते स्वार्थपरार्थोभयसाधनरूपपरमार्थनिष्ठ संस्कृतविद्वास पण्डिताश्च।

# संस्कृतभाषया लोकभाषात्वं सुनिश्चितम्

सुदूरेऽतीतकाले संस्कृतभाषैव चिरकाल यावद् बृहत्तरभारतस्य लोकभाषाऽसीदिति तथ्यमनेकै साक्ष्यै समर्थ्यते। बहुसङ्ख्यका भाषाशास्त्रिण ऋक्सहिताया प्राचीनतरमण्डलाना भाषामेव आदिमकालिकीं भाषा मन्यन्ते। इयमेव ब्रह्मणो वेदस्य, तत्सकलितमन्त्राणा तत्प्रतिपादितयज्ञाना वा इय भाषेत्यस्मिन्नर्थे ब्राह्मीत्युच्यते स्म। प्राचीनतमानामृषीणामिय भाषा दैनन्दिनव्यवहाराणामेव भाषाऽभवदिति निश्चप्रचम्। यतो हि सामान्यत सर्वो लोक स्वमातृभाषयैव स्वकीयान् भावान् प्रकाशयति प्रकटयति वा। दार्शनिकवैज्ञानिकादीना गम्भीरविचाराणा प्रकाशनस्य भाषा अवश्यमेव व्यावहारिकभाषात किञ्चिद्भिन्ना भवति किन्तु तत्कारणात् न सा काचिदपरा भाषा भवति। वैदिकानामृषीणा मन्त्रभाषाविषये त्विद तथ्य सत्यस्य समीपतर भवितुमर्हति। यतो ह्येते मन्त्राणा द्रष्टार एवासन् नैव कर्तारो, येन कारणेन गम्भीरेणापि मन्त्रार्थेन मन्त्रभाषा प्रायेणाप्रभाविता सती स्वीय स्वाभाविकत्व, मातृलोकात् प्राप्त स्व रूप नैव त्यजेत्। अवान्तरकाले प्रकृतिप्रत्ययादिकल्पनया सस्कृता सती सैव सस्कृतभाषा बभूव, यथा दण्डिनोक्तम्--सस्कृत नाम दैवी वागन्वाख्याता महर्षिभिरिति। निरुक्तस्य नैगमकाण्डे (२। २) महर्षेर्यास्कस्य 'शवतिर्गतिकर्मा कम्बोजेष्वेव भाष्यते, विकारमस्य आर्येषु भाषन्ते शव इति। दातिर्लवनार्थे प्राच्येषु दात्रमुदीच्येषु' इत्यादिलेखेन विक्रमात्पूर्वमष्टमशताब्द्या सस्कृतस्य लोकभाषात्वमनुमीयते। एवविधा प्रयोगभेदा अस्या व्यावहारिकभाषाया सत्यामेव सम्भवन्ति नान्यथा। 'भाषायामन्वध्याय च' इत्यादिलेखेनापीद सिध्यति यल्लोकव्यवहारे प्रचलिताया लोकेभाष्यमाणाया एव वाचो भाषेति नाम यास्काचार्यर्व्यवहृतम्।

परवर्तिनि काले विक्रमात् पूर्व षष्ठशताब्द्या जातेन भगवता पाणिनिना स्वकीयाष्टाध्याय्या हस्ताहस्ति[1] दण्डादण्डि,[2] केशाकेशि[3] पिबतखादता[4] खादतमोदता,[5]

१ हाथा पाई
२ डण्डेबाजी
३ बालों की नोचा नोची
४ वह क्रिया जिसमें सतत खाओ पिओ कहा जाता रहता है।
५ वह क्रिया जिसमें लगातार 'खाओ मौज करो' कहा जाता रहता है।

अहमहमिका इत्यादय प्रयोगा दत्ता । एते सर्वे अन्ये चैवविधा सामान्येन लोकव्यवहारेण सामान्यजीवनेन च सर्वथा सम्बद्धा । हस्तैर्हस्तैश्च प्रहत्येद युद्ध प्रवृत्तमिति हस्ताहस्ति । दण्डैर्दण्डैश्च प्रहत्येद युद्ध प्रवृत्तमिति दण्डादण्डि । केशेषु केशेषु गृहीत्वेद युद्ध प्रवृत्तमिति केशाकेशि । एवमेव 'मुष्टीमुष्टि' इत्यादि समासपद निष्पन्न भवति । एतानि समासपदानि बहुव्रीहिप्रकरणे स्थितेन 'तत्र तेनेदमिति सरूपे' (अष्टाध्यायी २ । २ । २७) सूत्रेण सिद्ध्यन्ति । 'सप्तम्यन्ते ग्रहणविषये सरूपे पदे तृतीयान्ते च प्रहरणविषये इद युद्ध प्रवृत्तमित्यर्थे समस्येते कर्मव्यतिहारे द्योत्ये । स बहुव्रीहि'।[१] एव पिबत-खादता-खादतमोदता अश्नीतपिबताऽऽदय समासा 'मयूरव्यसकादयश्च' इत्यत्र स्थितेन 'आदि'-पदेन गृहीता 'आख्यातमाख्यातेन क्रियासातत्ये' इत्यनेन वार्तिकेन सिद्ध्यन्ति । पिबत खादत इति सतत यस्या क्रियायामभिधीयते सा क्रिया । एवमन्येषामपि विग्रहो भवेत् । एते सर्वे प्रयोगा सर्वसामान्यजीवनव्यापारै सम्बद्धा महर्षिपाणिने काले सस्कृतस्य सामान्यभाषात्वमेव प्रमाणयन्ति । अन्यच्च, प्रत्यभिवादेऽर्थात् अभिवादनस्योत्तररूपेणा-शीर्वाद-प्रदाने स्वरस्य प्लुतत्व विहित, यथा 'भो आयुष्मान् एधि देवदत्त' एव च दूराद्धाने यथा 'सक्तून् पिब देवदत्त' अन्यत्रापि[२] च 'प्रत्यभिवादेऽशूद्रे' (८ । २ । ८३) 'दूराद्धूते च' (८ । २ । ८४) अन्यैश्च सूत्रै । सूत्रोक्ता प्लुतनियमा दैनिकव्यवहारसम्बद्धत्वात् पाणिनिकाले सस्कृतस्य दैनन्दिनभाषास्वरूपमेव प्रकटयन्ति ॥ 'पूर्व तु भाषायाम्' (८ । २ । ९८) सूत्रे 'भाषा' शब्दस्य प्रयोग छन्दश्शब्देनाभिहिताद् वैदिकसस्कृताद् भिन्न, व्यवहारे लोकैर्व्यवह्रियमाण सस्कृत बोधयितु पाणिनिना कृत । अस्य भाष्यमाणत्वादेव भाषेति नाम अभिधान वा महर्षिणा अष्टाध्याय्या प्रयुक्त, वैदिकसस्कृतस्य च कृते सर्वत्रैव छन्द इति नाम । अस्मादपि सुस्पष्ट यल्लौकिकभाषारूपेण सस्कृत पाणिने कालेऽविद्यत एव ।

पाणिनिरिव वार्तिककार कात्यायनोऽपि भाषा-शब्दस्य प्रयोग व्यावहारिक-सस्कृतभाषाया कृते एव करोति । यथा 'यरोऽनुनासिकेऽनुनासिको वा (८ । ४ ।४५) इत्यनेन सूत्रेण योऽनुनासिकविधिर्वैकल्पिक कृत आसीत्, स एव 'प्रत्यये भाषाया नित्यम्' इत्यनेन वार्तिकेन प्रत्ययस्यानुनासिके परे सति नित्य कृत कात्यायनेन । तन्मात्र चिन्मात्र, तन्मय, चिन्मयम् इत्यादिषु एतद्मुरारि एतन्मुरारि इत्यादिवत् नैव तद्मात्र तन्मात्रम् इत्युभौ प्रयोगौ भवेताम् । किन्तु 'भाषायाम्' अर्थात् व्यवहारस्य सस्कृते एवाय नियम । अस्मादिदमनुमीयते यत् वार्तिककारस्य कालमर्थात् विक्रमात् पूर्व चतुर्थशताब्दीं यावदपि

१　सिद्धान्तकौमुदीस्था सूत्रवृत्ति ।
२　आम्रेडित भर्त्सने (८ । २ । ९५) यथा, दस्यो ! दस्यो ! घातयिष्यामि त्वाम् !

संस्कृत जनभाषासीत्। विशालजनसमूहेन सतत प्रयुज्यमानत्वादेव नूतना शब्दा, पूर्वागतशब्देषु बहूनामर्थेषु परिवर्तनसङ्कोचविस्तारादयश्च घटिता, यान् प्रमाणयितु नवानि वार्तिकानि कात्यायनेन रचितानि। यथा पाणिने 'इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्याणामानुक्' (४।१।४९) इत्यनेन सूत्रेण प्रथमपट्शब्देषु केवलमानुगागम, अवशिष्टेषु चतुर्षु आनुगागम डीष् चापि विहितौ। किन्तु कात्यायनेन 'हिमारण्ययोर्महत्त्वे' 'यवाद् दोषे' 'यवनाल्लिप्याम्' इति त्रीणि वार्तिकानि रचयित्वा तत्र-तत्र अर्थभेदोऽभिहित। हिमानीत्यस्य महत् हिमम्, अण्यानीत्यस्य च महदरण्यमित्यर्थ, नैव च डीष् इतिस्त्रीप्रत्ययेन तयो स्त्रीलिङ्गत्वमात्र विवक्षित, यथा पाणिने समये भवेत्। एवमेव यवानीशब्दस्य दूषितो यव, यवनानीशब्दस्य च यवनलिपिरर्थो जातो वार्तिककारस्य समये। पाणिने समये यवनानीत्यनेन सम्भवत यवनस्त्री एव गृह्यते स्म। तदर्थं यवनीत्येव शब्द प्रयोगे आगत क्रमेण। एतावदेव विवेचन कात्यायनसमयेऽपि संस्कृतस्य जनभाषात्व साधयितुमलम् इति मनसि कृत्वा वचोविस्तराद् विरम्यते।

कात्यायनादनन्तर प्रायेण द्विशताब्दवधेरन्तरेण अष्टाध्याय्या महाभाष्यकार पतञ्जलिर्जनिं लेभे। अन्तरालेऽस्मिन् भारते यवनादिविदेशिना प्रभावे वृद्धि गतेऽपि संस्कृतभाषाया व्यवहारे ह्रासो नैव जात। इद तथ्यमनेकै उद्धरणै स्थापयितु शक्यते यद्यपि, तथापि एकेनैव पर्याप्तता-बुद्धि प्राप्स्येत इति मत्वा तदेवात्र चर्च्यते सक्षेपेण। 'अजेर्व्यघञपो (२। ४। ५६) इति सूत्रस्य भाष्ये केनचित् सूतेन[1] सह कस्यचिद् वैयाकरणस्य रोचक कथनोपकथन प्राप्यते, येन सर्वथा स्पष्ट यद् महाभाष्यकारस्य समयेऽपि संस्कृत जनभाषाऽसीत्। कश्चिद् वैयाकरणो रथमेक स्थित दृष्ट्वा पप्रच्छ- 'कोऽस्य रथस्य प्रवेता ? सारथि प्रत्युवाच—'आयुष्मन् ! अहमस्य प्राजिता' इति। यद्यपि 'अजेर्व्यघञपो (२। ४। ५६) सूत्रेण अज्धातो स्थाने 'वि' इत्यस्य नित्यविधान अघञ्-प्प्रत्ययौ परित्यज्य, एव च कर्तरि तृच्प्रत्यये कृते प्रवेतृशब्दस्य सिद्धिर्भवत्येव। तथापि स सारथ्यर्थेऽनुपयुक्तमिम मन्यमान उपर्युक्तमुत्तर ददौ। एतस्य प्रतिवाद कुर्वता वैयाकरणेनोक्तम्-'अपशब्द' इति। अस्य प्रतिवाद कुर्वता सारथिनोक्तम्—'प्राप्तज्ञो देवाना प्रिय, न त्विष्टिज्ञ। इष्यत एतद् रूपमिति। तस्य कथनस्येद तात्पर्यम्—व्याकरणशास्त्र शिष्टप्रयोगान्वाख्यानम्। स्थितस्य गतिचिन्तैव तेन क्रियते। सूत्रकारस्य

१ सारथिना

दृष्टिरादौ लक्ष्यभूते शिष्टप्रयोगे पतति, अनन्तर स तस्य विश्लेषणार्थं प्रकृतिप्रत्ययादिविषयक नियमादिक निर्धारयति। रथसञ्चालक इत्यर्थे 'प्राजिता' इति शब्दो लोके प्रचलित इति हेतोरेतस्यैव उपयुक्तत्व साधुत्व वा। 'प्रवेता' 'शब्दोऽपि' अजेर्व्यघञपो' इति सूत्रेण निष्पन्नत्वात् शुद्ध एव किन्तु लोके न तथा प्रचलित प्रसिद्धो वा यथा 'प्राजिता' इति शब्द । तस्माद् भवान् प्राप्तिज्ञ एव न पुन इष्टिज्ञस्तस्माद् 'देवाना प्रिय, अर्थात् मूर्ख । सारथेरनेन कटाक्षेण क्षुब्धो वैयाकरण आह—'अहो ! खल्वनेन दुरुतेन बाध्यामहे।' पुन कटाक्ष कुर्वन् सारथिराह—'न खलु वेञ सूत, सुवतेरेव सूत । यदि सुवते कुत्सा प्रयोक्तव्या, दु सूतेनेति वक्तव्यम्।' सुपूर्वकात् वेञधातो क्तप्रत्ययान्तो य 'सूत'-शब्द, तस्यार्थस्तन्तुवायो वा सुष्ठूत[1] वस्त्र वा, न च सारथि । यतो हि वेञ्धातुस्तन्तुसन्तानार्थकोऽस्ति, न पुन प्रेरणार्थक । सारथ्यर्थकस्य सूतशब्दस्य निष्पत्तिस्तु प्रेरणार्थकात् तुदादिगणे पठितात् षूधातो करणीयेति तस्याक्षेपस्य तात्पर्यम्। महाभाष्ये चर्चितस्य सूतस्यैवविध पाण्डित्य वस्तुतो विस्मयावहम्। एतेन महाभाष्यकारस्य पतञ्जले समये संस्कृतस्य लोकभाषात्व जनभाषात्व वा सुष्ठु प्रमाणित भवति।

कालदृष्ट्या पाणिनेरेव सामीप्य वाल्मीकेरादिकाव्य रामायण भजते। अत्रैवोल्लिखित यत् स कुशलवाभ्या लोके रामचरितस्य गान पाठ वा कारयितु रामायण प्रणिनाय। लोकश्चेत् तस्मिन् वर्णित तद् बोद्धु नाशक्ष्यत्, तर्हि श्रवणार्थमृषिर्वाल्मीकिस्तत् कथमकरिष्यत्। इदमपि तथ्य विक्रमात् पूर्व पञ्चम-शताब्द्या संस्कृतस्य जनभाषात्व स्थापयति। एतदनुकूलमेवादिककाव्यस्य भाषा-वैशद्य शैली सारल्य भावहृद्यत्व च वर्तते। अस्यैव सुन्दरकाण्डे हनुमन्मुखेन,

"अह त्वतितनुश्चैव वानरश्च विशेषत ।
वाच चोदाहरिष्यामि मानुषीमिह संस्कृताम्॥
यदि वाच प्रदास्यामि द्विजातिरिव संस्कृताम्।
रावण मन्यमाना मा सीता भीता भविष्यति॥"[2]

१ अच्छी तरह बुना हुआ।
२ वा रा, सुन्दरकाण्ड ३० १७-१८।

इत्यादिवचन न केवल तस्यैव अपितु रावणस्यापि शुद्धसंस्कृतज्ञान प्रमाणयत् तस्मिन् काले संस्कृतस्य लोकभाषात्वमेव प्रकाशयति।

अस्मिन् प्रसङ्गे इदमपि तथ्य मनसि निधातव्य यत् ईशवीये द्वितीये शतके जातो बौद्धकविरश्वघोषस्तस्मिन् काले बौद्धधर्ममुपदेष्टु, सर्वत्र देशे प्रचारयितु च स्वीय बुद्धचरित सौन्दरनन्द च महाकाव्यद्वय संस्कृतभाषयैव रचयामास। यदि तदानीं संस्कृतभाषा लोके प्रचलिता लोकप्रिया गृहीतबोधा च नाभविष्यत्, तर्हि कथ स्वचरितनायकस्य भगवतो बुद्धस्य लोकनाथानामुपदेशो लोकभाषयैव स्यादिति नीतेर्विरुद्ध तस्य चरित संस्कृतभाषयाऽरचयिष्यत्। खिष्टीये सप्तमे शतके धर्मकीर्त्यादयो बौद्धदार्शनिका पण्डिताश्च गीर्वाणगिरैव शास्त्रचर्चा चक्रु, स्वग्रन्थानपि तस्यामेव रचितवन्त। एतेन सिद्धमेतद् यद् ईशवीयसप्तमशताब्दीपर्यन्त संस्कृतस्य जनभाषास्वरूप प्रायेण सुरक्षितमेवासीत्।

इयमेव स्थिति परवर्तिकालेऽपि सातत्यमभजतेति ईशवीयद्वितीयशतकादर्वाचीने काले बाहुल्येन संस्कृते एवोपलब्धैशिलालेखैस्ताम्रपत्रलेखैर्नाटकैश्च सुष्ठु सिध्यति। यदि शिलालेखान् वाचयित्वा जना सहसैव तदर्थ नाववोधिष्यन् तर्हि किमथ ते संस्कृते लेखवद्धा अकरिष्यन्त। एवमेव लोकधर्मीणि[१] नाटकान्यपि संस्कृते लेखवद्धानि नाभविष्यन्। लोकचरितचित्रणात्मक लोकवृत्तपर च नाटक द्रष्टुमुत्सुको लोको यदि तदर्थावबोधनेऽसमर्थस्तत्कारणाच्च तदानन्दानुभूत्या मपि, तर्हि अवश्यमेव तस्य रचना लोकेनावबुध्यमानाया भाषायामेवाभविष्यत् न पुन संस्कृतभाषायाम्। एषु संस्कृतनाटकेषु केवल निम्नस्तरीयाणि पुरुषपात्रणि साधारणस्त्रीपात्राणि च प्राकृतभाषाम् प्रायुञ्जत। तैरपि संस्कृतमवश्यमेवावुध्यत अन्यथा तैस्तदुत्तर दातु कथमशक्यत।

द्वादशशताब्द्या वल्लालसेनेन भोजप्रबन्धो नाम ग्रन्थो रचित। तत्र एकस्तन्तुवायो महाराजाय भोजाय आत्मन परिचय संस्कृतश्लोकेन ददत् प्रदर्शित। स चायम्—

"काव्य करोमि नहि चारुतर करोमि

यत्नात् करोमि यदि चारुतर करोमि।

---

१ लोकस्य धर्म, माऽस्यास्मीनि लाव धर्मि, नित्ययोगे इनि। नात्र बहुव्रीहिर्येन 'धर्मादनिच् केवलात्' इति सूत्रेणानिच्च् प्रत्ययान्त रूप भवेत्।

भूपाल-मौलि-मणि-मण्डित-पादपीठ !
हे साहसाङ्क ! कवयामि वयामि यामि ॥"

इति। अनेन संस्कृतभाषासाहित्ययोरप्रतिमोन्नायकस्य महाराजस्य भोजस्यैकादशशताब्दीकस्य कालेऽपि संस्कृतभाषा लोकेषु साधारणजनेषु वा पर्याप्त प्रचलिता प्रिया चासीदित्यनुमीयते। एव वक्तु पार्यते यत् न्यूनातिन्यूनम् ईशवीयद्वादशशताब्दीपर्यन्त, सम्भवतस्तदनन्तरमपि संस्कृत लोकभाषात्वेन समस्तेऽपि भारते व्यराजत।

□

# संस्कृतिः संस्कृताश्रया

का नाम सस्कृति ? सस्क्रियते मनोऽनयेति सस्कृति। मनसोऽस्या सस्कारसम्पन्नताया शुद्धेर्वाऽनेके उपाया निरूपिता सस्कृत-वाङ्मये। ते सर्वे एव सस्कृतेरङ्गानि। ततस्तेषा सस्कृतिरिति सामूहिक नाम सार्थकम्। सस्कृताश्रयेत्यस्य कोऽभिप्राय ? सस्कृतमाश्रयो यस्या सा सस्कृताश्रया। सक्षेपेणेद वक्तु शक्यते यदस्माक सस्कृति सामान्यत समस्त एव वाड्मये, विशेषतश्च वेद-स्मृति-पुराण-रामायण-महाभारतादिषु प्रकटितस्वरूपा प्रकाशिततत्त्वा च वर्तते। एवमेतस्या स्वरूप परिचेतुमेतदाधारभूतस्य सस्कृतवाङ्मयस्य परिचय, गम्भीराध्ययन, चिन्तन च सर्वथापेक्षितम्। विविधस्यास्य वाङ्मयस्य प्रतिपाद्यविशकलनेनैवास्माक सस्कृतेराधारभूततत्त्वानामवबोध कर्तुं शक्यते। एतदग्रे सक्षेपेण प्रदर्शयितु प्रयत्यते।

धर्मैकप्राणेय भारतीया सस्कृति। धर्म एवैतस्या मुख्य तत्त्व, धर्मश्चाय श्रुतिस्मृत्युक्ताचाररूपो यथा भगवता मनुनाऽनेकश प्रतिपादितम्-'आचार परमो धर्म श्रुत्युक्त स्मार्त एव च', 'वेद स्मृति सदाचार स्वस्य च प्रियमात्मन। एतच्चतुर्विध प्राहु साक्षाद् धर्मस्य लक्षणम्' इत्यादि। लक्षण प्रमाणमित्यर्थ। वेद स्मृत्यादयो धर्मे प्रमाण, तैश्च प्रतिपादित आचार एव धर्म इति तात्पर्यम्मनोर्वचनानाम्। कोऽयमाचारो धर्माख्यो मनुना प्रोक्त इत्यस्योत्तर मनुस्मृतेर्द्वितीयेऽध्याये जीवात्मनो वैजिकगार्भिकोभयदोषपरिहारद्वाराऽऽत्मशोधन कुर्वतीना व्रत-यज्ञ-होमादिक्रियाणामभि-धाने-नैव दत्तम्— 'स्वाध्यायेन व्रतैर्होमैस्त्रैविद्येनेज्यया सुतै। महायज्ञैश्च यज्ञैश्च ब्राह्मीय क्रियते तनु ॥' (मनु २।२८) इति। अस्यार्थं कुर्वता कुल्लूकभट्टेन स्वकीयमन्वर्थमुक्तावल्यामेवमुक्तम्—' स्वाध्यायेन वेदाध्ययन, व्रतैर्मधुमासादिवर्जन, होमै सावित्रचरुहोम साय प्रातर्होमश्च, इज्यया देवर्षिपितृतर्पणादि, सुतैर्धर्मपरिणीताया भार्याया पुत्राद्युत्पादन, महायज्ञै पञ्च महायज्ञादि, यज्ञैश्च ज्योतिष्टोमादि गृहीतम्।' इमानि कृत्यान्येव सश्रद्धमाचरितानि 'परमो धर्म' सन्ति। एभिर्धार्मिककृत्यैस्तनुरर्थात् तन्ववच्छिन्नो जीवात्मा ब्राह्मी ब्रह्मप्राप्तियोग्य सम्पाद्यत इति मन्वनुसार धर्मस्य प्रयोजनम्। एषु धार्मिककृत्येषु

था मुण्डकोपनिषदि एवमुक्तम्-'प्लवा एते ह्यदृढा यज्ञरूपा अष्टादशोक्तमवर येषु र्म। एतच्छ्रेयो येऽभिनन्दन्ति मूढा, जरामृत्यु ते पुनरेवापियन्ति॥ इष्टापूर्तं मन्यमाना रेष्ठ नान्यच्छ्रेयो वेदयन्ते प्रमूढा। नाकस्य पृष्ठे ते सुकृतेऽनुभूत्वा इम लोक हीनतर : विशन्ति॥ परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृत कृतेन। द्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणि श्रेत्रिय ब्रह्मनिष्ठम्॥' (मु १।२।७, १०, १२) इति। एवमुपनिषद्भि कर्मोपासनोभयाभ्यामुच्चतरस्य ज्ञानमार्गस्य तल्लक्षणभूतस्य ात्मतत्त्वस्य ब्रह्मात्मैक्यस्य च प्रतिपादन भूयो भूय कृतम्। समस्तमपि परवर्तिवाङ् । स्मृति-पुराण-रामायण-महाभारतादिकम् अस्यैव सिद्धान्तस्य पोषकम्। ाभारतैकाशभूताया गीताया 'यामिमा पुष्पिता वाच प्रवदन्त्यविपश्चित । वेदवादरता र्थ । नान्यदस्तीतिवादिन ॥ कामात्मान स्वर्गपरा जन्मकर्मफलप्रदाम्। क्रियाविशेषबहु । भोगैश्वर्यगतिं प्रति॥ भोगैश्वर्यप्रसक्ताना तयाऽपहृतचेतसाम्। व्यवसायात्मिका द्धि समाधौ न विधीयते॥", "ते त भुक्त्वा स्वर्गलोक विशाल क्षीणे पुण्ये मर्त्यलोक शन्ति। एव त्रयीधर्ममनुप्रपन्ना गतागत कामकामा लभन्ते॥" 'आ ब्रह्मभुवनाल्लोका नरावर्तिनोऽर्जुन। मामुपेत्य तु कौन्तेय । पुनर्जन्म न विद्यते॥' इत्यादि-रूपेण नर्जन्माभावरूपस्य मोक्षस्य तत्साधनभूतस्यात्मनित्यत्वज्ञानस्य ब्रह्मात्मैक्यज्ञानस्य च भूत प्रतिपादनमभूत्। एवमिदमध्यात्मज्ञान भारतीयसस्कृतेस्तृतीय वैशिष्ट्य यदुत्तरवर्ति- ाहित्ये समस्तेऽपि प्राप्तप्रसार जातम्। अस्माक सस्कृतेराध्यात्मिकसाधना सर्वप्रधान शिष्ट्यमुपलब्धिश्च। अस्या साधनाया फलभूतो मोक्ष सर्वाधिकमहत्त्वपूर्णत्वादेव रुषार्थचतुष्टयेऽन्तिमपुरुषार्थत्वेन समावेशित । विश्वस्य कस्याञ्चिदपि सस्कृतौ स्याञ्चिदपि विचारसरणौ इयमुदात्ता आध्यात्मिकसाधना न विद्यते। परमार्थत र्वेषामात्मनामैक्यमेव 'अय निज परो वेति गणना लघुचेतसाम्। उदारचरिताना तु सुधैव कुटुम्बकम्॥' इतीदृश्या उदाततमभावनाया जन्मदात्री। इय भावना भारतीयाना णा सस्कृतेश्च कृते गौरवावहा।

भारतीयसस्कृतेरन्येषु वैशिष्ट्येष्वभिधानयोग्य, सस्कृतवाङ्मये च प्राम्मुख्येन न पुन्येन च प्रतिपादित तपो वर्तते। सुखदु खादिद्वन्द्वसहन तप इति शङ्कराचार्येणोक्तम्। स्येद तात्पर्यं यत् सुख दु खेऽविगणय्य, ताभ्यामप्रभावित, तयोरविकलो धैर्यपूर्वक क्ष्य प्राप्तये सततमुद्योगोऽभियोगश्च तपो नाम। मनीषिवर्येण मनुना प्रोक्त स्व तेरेकादशेऽध्याये– 'यद् दुस्तर यद् दुराप यद् दुर्गं यच्च दुष्करम्। सर्वं तत् तपसा

साध्यं तपो हि दुरतिक्रमम् ॥' इति। सृष्ट्यादौ अनुपलक्षितयाऽऽकाशवाण्या अक्षरं द्व्यक्षरात्मकः शब्दः सृष्ट्यर्थमुद्युक्तेन भगवता प्रजापतिपतिना ब्रह्मणा श्रुतः। तदाकर्ण्य स कालान्तरे नारायणकृपया सृष्टिज्ञानं लेभे इति भागवतादिषु अनेकशो वर्णितम्। एतत्पूर्वमपि ब्राह्मणादिषु तपोमहिमा प्रतिष्ठापितः। ऐतरेयब्राह्मणे 'चरैवेति चरैवेति चरन् वै मधु विन्दति चरन् स्वादुमुदुम्बरम्। सूर्यस्य पश्य श्रेमाणं यो न तन्द्रयते चरन् ॥' इत्युक्तम्। यजुर्वेदेऽपि 'भूत्यै जागरणम्, अभूत्यै स्वपनम्' इत्युक्तम्। अन्यत्र 'कृतं मे दक्षिणे हस्ते जयो मे सव्य आहितः' इत्युक्तम्। तप एव, अभियोग एव विजयलक्ष्म्याः प्रभविष्णु कारणमित्यर्थोऽस्याः पङ्क्तेः। परवर्तिसाहित्ये तु तस्य माहात्म्यमनेकशः प्रतिपादितम्। किरातकारस्य महाकवेर्भारवेः 'निरुत्सुकानमभियोगभाजां समुत्सुकेवाङ्कमुपैति सिद्धिरित्युक्तिः सर्वेषां विदितचरा। 'मनस्वी कार्यार्थी गणयति दुःखं न च सुखम्' इत्यत्रापि सुखदुःखे समे कृत्वा पुरुषार्थसम्पादनं लक्ष्यत्वेनावधारितम्। एवं भारतीयसंस्कृतेरिदं चतुर्थं वैशिष्ट्यं यत् तपो नाम सम्यगाचरितमिदं समस्तदुःखदैन्यादिनिवर्तकं, सकलमनोवाञ्छितदायकं, निखिलसिद्धिसम्पादकं च।

भारतीयसंस्कृतौ दानस्यापि महती प्रतिष्ठा वर्तते। दानमेव मानवं मानवं करोति। यथा बृहदारण्यके प्रजापतिस्तत्पुत्राणां च मध्ये जातादेवद्विपक्षसंवादात् स्पष्टं निष्कर्षरूपेणैवदुक्तं तत्र–'तदेतदेवैषा दैवी वागनुवदति स्तनयित्नुर्ददद इति, दाम्यत दत्त दयध्वमिति। तदेतत् त्रयं शिक्षेद्–दमं दानं दयामिति'। इदं त्रयमेव, विशेषतस्तु पुनः दानमेवाधिकृत्य प्रभूतं लिखितं संस्कृतसाहित्ये। 'तं ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेनेति वचस्तत्रैव बृहदारण्यकेऽस्मात् संवादात् पूर्वमायाति। इदमपि वचनं यज्ञेन च सह दानस्याप्यपेक्षां प्रतिपादयति चित्तपरिशुद्ध्यर्थं, या चित्तशुद्धिं विना ब्रह्मजिज्ञासा न भवति, तां च विना ज्ञानं, तेन च विना मुक्तिरसम्भवैव। भर्तृहरिणाप्युक्तम्– 'दानं भोगो नाशस्तिस्रो गतयो भवन्ति वित्तस्य। यो न ददाति न भुङ्क्ते, तस्य तृतीया गतिर्भवति'॥ इति। तर्हि नलिनीदलस्थजललववत् क्षणदृष्टनष्टं वित्तं दत्त्वा स्थिरं यशोऽर्जयेद् बुधः।

पूर्वचर्चितानामन्येषामपि च तत्त्वानां प्रतिपादकाः सन्दर्भाः रामायण-महाभारत-गीता-पुराण-स्मृत्यादिभ्यो धार्मिकवाङ्मयेभ्यः काव्यनाट्यादिभ्यश्चोद्धर्तुं शक्यन्ते। किन्तु विस्तरभयात् ततो विरम्यते। एतावन्मात्रेणोपन्यासेन नास्मिन् वि

सन्देहलेशोऽप्यवशिष्यते यदस्माकं संस्कृतिः संस्कृताश्रया यदस्माकं संस्कृतिः संस्कृतवाङ्मयं च परस्परमनुस्यूते ओतप्रोते च वर्तेते। एवमस्माकं संस्कृतिः संस्कृते प्रतिष्ठिता, संस्कृतवाङ्मये च पल्लविता। अतोऽस्या वास्तविकं ज्ञानं संस्कृतवाङ्मयस्यानुशीलनं विना सर्वथाऽसम्भवं दुःशकम् च।

□

त। सम्यक् प्रयुक्तैव गौर्वाणी सूनृता, सा बुधैस्तत्त्वज्ञै कामदुघोच्यते। दुष्प्रयुक्ता व प्रयोक्तुर्गोत्व जडत्व प्रकाशयति।

कथमीदृशी सर्वगुणसम्पन्ना कल्याणावहा सूनृतैव वाक् मुखान्निष्क्रामेत् न पुन र्वनाशिनी राक्षसी वागिति प्रश्न समुत्तिष्ठति। उन्मत्तदृप्तयोर्वाक् राक्षसीत्यनेन हाकवेरयमभिप्राय सुव्यक्तो यदुन्माददर्पक्रोधादिषु सत्सु राक्षस्येव वाक् मुखान्निर्गच्छति पुन सूनृता वाक्। एतेनेद कथित भवति यद् वाचो नियमनार्थ मनसा नियमन र्तव्यम्। यावन्मनसो रोषदर्पामर्षादयो दुर्भावा नापनीता न वा दूरीकृतास्तावद्राक्षस्येव क् मुखान्निर्गच्छेत्, न सूनृता वाक्। एव वाण्या नियमनार्थ मनसो नियमन वाण्या *धनाकृतेऽन्तःकरणस्य मनसो साधनाऽपेक्ष्यते। यावन्मनसि क्रोधो दर्पो वा विद्यते* वत् क्रुद्धो गर्वितो वा पुरुषो मधुरा प्रिया च वाच कथमुच्चारयेत् ? अनेनेद सिध्यति त् सूनृता वाक् क्रोधगर्वमदमोहादीना दमनस्य अर्थात् आन्तरिकनिग्रहस्य परिणाम । द्यपि *स्वकार्यं साधयितु धूर्ता स्वशिष्टत्वस्य विनीतत्वस्य वाऽभिनय कुर्वन्त स्वकार्य* ाधयन्तश्च लोके यदा-कदापि दृश्यन्ते, तथापि तेषामिय कृत्रिमशिष्टता आपचारिको ा विनयादि शीघ्रमेवोद्घाटितो भवति। प्रायस्तु कार्यमध्य एवोषती[1] वाचमुक्त्वा तादृशा धूर्ता स्वीयानान्तरिकान् क्रोधदर्पादिविकारान् प्रकटयन्ति, येन तेषा ास्तविकस्वरूपस्य विषये लोकस्य भ्रमो निरस्तो भवति। एव निश्चप्रचमेतद् यद् ास्तविकस्नेहप्रेममाधुर्याद्यभावे मधुरा स्नेहस्निग्धा शीतला प्रिया वाङ् मुखान्न नष्क्रामति। तस्मादेतदर्थं सद्ग्रन्थाभ्यासत सता सङ्गतश्च सतत दीर्घकालिक प्रयाम र्यात्, यतो हि साधुत्वाभावे न सूनृतवाचो भाव । साधुत्वसूनृतयो कारणकार्यभाव ामानाधिकरण्य चेति निश्चप्रचम्। इदमेव लक्ष्यीकृत्य भारविणाप्युक्तम्—

विचित्रवर्णाभरणा सुखश्रुति प्रसादयन्ती हृदयान्यपि द्विषाम्।
प्रवर्तते नाकृतपुण्यकर्मणा प्रसन्नगम्भीरपदा सरस्वती॥

अर्थात् श्रवणे सुखकरी ततश्च विरोधिनामपि हृदयान्यावर्जयन्ती विचित्रव ालिङ्कारविन्यासै शोभिता प्रसादगुणयुता अर्थगाम्भीर्यसम्भृता वाणी विचित्रवर्णभूष- ादिसमलङ्कृता शत्रूणामपि मनांसि मोहयन्ती गजगामिनी वरवर्णिनीव अकृतपुण्यकर्मणामर्थात् साधुचरितरहिताना जनाना न कदापि प्रवर्तते। एव साधुताया शिष्टताया वा साक्षात् फल येय सूनृता वाक्।

---

[1] जलाने वाली।

एतस्या फलं कामसिद्धिः, दुरितक्षयः, दैन्यनाशः, मङ्गलप्राप्तिः, यशोलाभः, यथा एतत् सर्वं भवभूते श्लोके संगृह्य वर्णितम्। तस्मात् यः कोऽपि एतत् सर्वमिच्छति स सरधेच्च स्वका जिह्वा भार्या दुश्चारिणी यथा'। कस्मादिति चेत्, 'अपशब्दपराप-वादतर्जनावमाननादिमय्या कर्कशवाग्या, दर्पमय्या उपत्या वाचः। स्वर्गतश्चक्रवर्ती सम्राट् ययाति 'नाहं देवमनुष्येषु गन्धर्वेषु महर्षिषु। आत्मनस्तपसा तुल्यं कञ्चित् पश्यामि वासव॥ (आदि ८८।२) इत्येतन्मात्राया परावमाननायुक्ताया दर्पदूषिताया वाचः उच्चारणेन तत्कालमेव स्वर्गादधः पपातेति ज्ञापितं व्यासेन महामुनिना ययातिं प्रति देवराजस्योक्त्या–

> "यदवमंस्था सदृश[1] श्रेयसश्च अल्पीयसश्चाविदितप्रभावः।
> तस्माल्लोकास्त्वन्तवन्तस्तवेमे, क्षीणे पुण्ये पतितास्यद्य राजन्॥"
> –आदि ८८।३

एतत्पूर्वं राज्याभिषेकसमये स्वपुत्राय पूर्वं दत्तस्योपदेशस्य विषये देवराजेन पृष्टो महाराजो ययातिरेवं एवमाह–

> "नारुन्तुदः स्यान्न नृशंसवादी, न हीनतः परमभ्याददीत।
> ययास्य वाचा पर उद्विजेत्, न तां वदेदुषतीं पापलोक्याम्॥
> वाक्सायका वदनान्निष्पतन्ति, यैराहतः शोचति रात्र्यहानि।
> परस्य नाममर्मसु[2] ते पतन्ति, तान् पण्डितो नावसृजेत् परेषु॥
> नहीदृशं सवननं[3] त्रिषु लोकेषु विद्यते।
> दया मैत्री च भूतेषु दानं च मधुरा च वाक्॥"
> –आदि ८६।८,११,१२

एवमेव श्रीमद्भागवतेऽपि सतीगिरिशयोः संवादद्वारेणैतमेव तथ्यं व्यासेन प्रकाश्य नीतम्। अनाहूतामनामन्त्रितामपि स्वपितुर्दक्षस्य यज्ञमहोत्सवे भागं गृहीतुं समुत्सुकां कृतनिर्बन्धां सतीं तदवमाननाभर्त्सनादिशङ्कया निवारयन् भगवान् भवो तां सम्बोधयन्नेवमाह–

---

१ सदृश् शब्द [illegible] बहु। श्रेयस तथा अल्पीयस भी द्वि. बहु के रूप हैं। ये तीनों ही शब्द अवमन्या क्रिया के कर्म होने से [illegible] में हैं। [illegible]
हैं।

२ न अमर्मसु अर्थात् मर्मस्थले

३ सवनन वशीकरणम्।

"तथारिभिर्न व्यथते शिलीमुखै शेतेऽर्दिताङ्गो हृदयेन दूयता।
स्वाना यथा वक्रधिया दुरुक्तिभिर्दिवानिश तप्यति मर्मताडित ॥"

—(भाग ४। ३। १९३)

एव सुस्पष्ट यत् सर्वप्रिया सर्वसौख्यकरी सर्वावर्जिका सर्वकल्याणावहा च सूनृत वाक्। एतद्विपरीत सर्वसौभाग्य विनाशिनी सर्वविपद् खजननी पतनगर्त निपातिनी च उपती वाक्।

# जननी जन्मभूमिश्च स्वर्गादपि गरीयसी

जननीमिव गरीयसीं गुरुतरां स्वभूमिमयोध्यां प्रति लङ्कातः प्रतिष्ठमानस्य भगवतो रामचन्द्रस्योक्तिरियं याऽत्र साकल्येनोद्ध्रियते—'अपि स्वर्णमयी लङ्का न मे लक्ष्मण। रोचते। जननी जन्मभूमिश्च स्वर्गादपि गरीयसी ॥' इति। जननी जन्मभूमिश्चेत्युभे गरीयस्यौ महीयस्यौ सम्मानार्हे पूज्ये चेत्यस्याः सक्षेपेणाभिप्रायः। कस्याविदितं तथ्यमेतद्यद् जन्मदातृत्वात्, सुतसवर्धकत्वाच्च कारुण्यमूर्तिर्माता स्वसन्ततीनां जीवनसर्वस्वम्। तत एव श्रुतिः 'मातृदेवोभव', 'मातृमान् पुरुषो वेद' इत्यादिवचनैः मातुर्गौरवं ख्यापयति। मनुस्मृतिरपि 'माता पृथिव्या मूर्तिस्तु' (२। २२६) इत्युक्त्वा तस्या महत्त्वं स्थापयति। 'माता गुरुतरा भूमेर्माता परं दैवतम्' इत्यादीन्यपि वचनानि जनन्याः सर्वातिशायित्वं कथयन्ति। अस्य महत्त्वातिशयस्य कारणेषु मीमांस्यमानेषु तथ्यमेतत् पुरः आयाति यन्माता ममत्वमूर्तिः, करुणामूर्तिः, क्षमामूर्तिश्च या स्वीयैर्दयाक्षमास्नेहशीलमाधुर्यमम-त्वादिगुणैर्भुवि दिवि अन्येषु च लोकेषु सर्वानतिशेते प्राणिनः। अतएव तस्या महिमा वाक्पथातीतो वर्तते।

जननीव जनान् जनयन्ती स्वाङ्के धारयन्ती, तान् शस्यादिभिः पोषयन्ती, स्वजलफलवाय्वादिभिश्च पालयन्ती जन्मभूमिरपि सेव सर्वेषां जनानां मान्या पूज्या आदरणीया च। अथर्ववेदस्य पृथिवीसूक्ते मातृभूमेर्गुणगानं विस्तरेण कृतं वर्तते। 'माता भूमिः पुत्रोऽहं पृथिव्याः' (अथर्व १२। १। १२) 'भूमे मातर्निधेहि मा भद्रया सुप्रतिष्ठितम्। संविदाना दिवा कवे श्रियां मा धेहि भूत्याम् ॥' (अथर्व १२। १। ६३)। इत्यादिवचनैः श्रीप्रदानाय मातृभूमिं प्रार्थ्यते ॥' 'वयं तुभ्यं बलिहृतः स्याम' अथर्व १२।१।६२) इत्यनेन तां प्रति स्वकृतज्ञता प्रदर्श्यते।'अपि स्वर्णमयी लङ्का न मे लक्ष्मण रोचते। जननी जन्मभूमिश्च स्वर्गादपि गरीयसी ॥' इति रामोक्तिरपि जनन्या जन्मभूमेश्च स्वर्गादपि गरीयस्त्वं महनीयत्वं प्रियत्वं च प्रकटयति। चतुर्दशवर्षावधिकवनवासादनन्तरं लङ्कातः प्रत्यावर्त्य स्वपूर्वजानां राजधानीमयोध्यां, तामनु

प्रवहन्तीं सरयूं च दृष्ट्वा भावविह्वलस्य रामस्य ममत्वभावाभिव्यक्ति कविकुलगुरो कालिदासस्य सारमय्या काव्यपदावल्या द्रष्टव्या–

मा सैकतोत्सङ्गसुखोचिताना प्राज्यै पयोभि परिवर्धितानाम्।
सामान्यधात्रीमिव मानस मे सम्भावयत्युत्तरकोसलानाम्॥
सेयं मदीया जननीव तेन मान्येन राज्ञा सरयूर्वियुक्ता।
दूरे वसन्त शिशिरानिलैर्मा तरङ्गहस्तैरुपगूहतीव॥
–रघु १३।६२।६३

मातृभूमेरनेनैव गौरवेणाकृष्टा महान्त पुरुषा तस्या सम्मानस्य रक्षार्थं हुतात्मानो भवन्ति, आत्मोत्सर्गं कृत्वा स्वजन्म धन्य कुर्वन्ति। अस्माक सम्पूर्ण इतिहास ईदृशाना हुतात्मनामात्मोत्सर्गगाथया गौरवमय्या परिपूर्ण। स्वमातृभूमे कृते महाराणाप्रतापसिंहस्यात्माहुति कस्याविदिता ? को न जानाति क्षत्रपतिना शिवाजीमहाराजेन स्वमातृभूम्युद्धाराय कृत दीर्घकालिक सङ्घर्षम् ?

प्रथमे स्वतन्त्रतासङ्ग्रामे स्वदेशस्य दासतापाशादुद्धार कर्तुम्बद्धपरिकरैर्नानाफड़नवीस-मङ्गलपाण्डेय-राज्ञीलक्ष्मीबाईप्रभृतिभि कृता शौर्यमयी आत्माहुतिस्तु समेषा भारतीयाना विदितचरैव। को न जानाति क्रान्तिकारिणा वीरपुङ्गवाना भगतसिंह चन्द्रशेखरआजाद-रामप्रसादबिस्मिल खुदीरामबोस-रासबिहारीघोषप्रभृतीना पावनानि पुण्यमयानि चरितानि ? स्वतन्त्रतार्पितप्राणा एते धीरधौरेया वीरवरेण्या सर्वा सुखसम्पद परित्यज्य हसन्त एव मृत्युपाशानालिलिङ्गु। समुचित गीतमेतषा यशोगीतमाधुनिकेन केनचित् कविना–

"खगा मधुरगानेन निशा नक्षत्रदीपकै।
विटपा पुष्पदानेन स्तुवन्त्येतान् गरीयस॥
उषा स्वर्गीयसिन्दूर चन्द्रिका-चन्दन शशी।
वारिदो विन्दुमुक्ताश्च वर्षन्त्येतेषु शोभना॥"

को वाऽपरिचित स्वामिदयानन्द स्वामिविवेकानन्द-बालगङ्गाधरतिलक-गोपालकृष्णगोखले-लाजपतराय मदनमोहनमालवीय-महात्मागान्धि मोतीलालनेहरू-

चित्तरञ्जनदास-जवाहरलालनेहरु सुभाषचन्द्रबोस-वल्लभभाईपटेल—राजेन्द्रप्रसाद-जयप्रकाशनारायणप्रभृतीनां पुण्यनामभिर्मातृभूमिपरायणैर्गृहीतदेशसेवाव्रतैर्महाजनैस्तत्कृते का का विपदो नानुभूता ? एते महापुरुषाः स्वजन्मभूमेः सर्वमृणं शोधयित्वा इदानीं राष्ट्रदेवालयस्य दृढस्तम्भा इव राजन्ते ॥

वस्तुतो देशभक्तिभावनैवेदृशी, राष्ट्रियभावनैवतादृशी ययोद्बोधिता उत्प्रेरिताश्च मृतप्राया अपि जनाः प्राणवन्तः सन्तः कमप्यनिर्वचनीयमुत्साहमनुभवन्ति, यस्य प्रवाहे पतितास्ते न दुःखं गणयन्ति, न विघ्नजातं विचारवीथिमानयन्ति, न सुखमभिलषन्ति, न स्वार्थं पश्यन्ति, न वाभ्युदयं विचारयन्ति। चिन्तापिशाची तु तेषां पुरः स्थातुमपि नोत्सहते। ते लक्ष्यैकचक्षुषोऽर्जुन इव 'विच्छिन्नाभ्रविलायं वा विलीये नगमूर्धनि। आराध्य वा सहस्राक्षमयशश्शल्यमुद्धरे ॥' (किरात ११।७९) इति मनसि कृतदृढप्रतिज्ञा बद्धसङ्कल्पाश्च गोलिकासमक्षमपि वैक्लव्यमननुभवन्तो धैर्यं चात्यजन्तो मृत्युं सहर्षमालिङ्गन्ति।

'चिरं जीव्यादस्मद्राष्ट्रं, चिरं स्थायिन्यस्याम्माऽस्मन्मातृभूमिः, मधु वाता ऋतायन्तामत्र मधु क्षरन्तु सिन्धवः। माध्वीर्नः सन्तु ओषधयः, मधु नक्तमुतोषसो, मधुमत् पार्थिवं रजो मधु द्यौरस्तु नः पिता। मधुमान् नो वनस्पतिर्मधुमानस्तु सूर्यः। माध्वीर्गावो भवन्तु नः। सर्वथा सर्वदा च समृद्धिशालिनी भवेदस्मन्मातृभूमिरियम्। नमो नम एतस्यै प्राणदायै सुखदायै प्राणप्रियायै मातृभूम्यै।

# प्रियोऽयं भारतो देशः

भगवत ऋषभदेवस्य ज्येष्ठ. पुत्रो गुणै श्रेष्ठो महायोगी भरत आसीद्। येन पूर्वमजनाभनाम्ना प्रसिद्धामदमस्माक वर्षमस्य राजर्षेर्नाम्ना भारतमिति व्यपदिश्यते। भागवते विद्यमानस्य जडभरताख्यानस्य प्रारम्भ एवैव चर्चा वर्तते 'भरतस्तु महाभागवतो यदा भगवताऽवनितलपरिपालनाय सचिन्तितस्तदनुशासनपर पञ्चजनी विश्वरूप-दुहितरमुपयेमे।...अजनाभ नामैतद्वर्षं भारतमिति यत आरभ्य व्यपदिशन्ति' इति। यस्य देशस्य प्राचीनपरम्परैवेदृशी यन्महायोगिनो महाभागवतस्य राजर्षेर्भरतस्य नाम्ना तस्य भारतमिति नाम तत आरभ्य सञ्जात, तस्य महिमान गरिमाणमथ च पावित्र्य को नामनरो वर्णयितु पारयेत्। यतो हि भरतानन्तर तज्ज्ञानपरम्परा सहज-जडयोगचर्या चानुसरन्तो नैके राजर्षयो ब्रह्मर्षयो देवर्षयश्चेमा भारतभूमि समलञ्चक्रु स्वजन्मभि। तैरेव महा-भागवतैरुपन्यस्ताभि सत्कर्मभक्तिज्ञानपरम्पराभिरिय भूमिर्भागवतविष्ण्वादिपुराणेषु श्रेष्ठा कर्मभूरुच्यते, यावदन्या भूमयो भोगभूमय उच्यन्ते। विष्णुपुराणे समुद्घोषितम्—

> अत्रापि भारत श्रेष्ठ जम्बूद्वीपे महामुने।
> यतो हि कर्मभूरेषा ह्यतोऽन्या भोगभूमय।
> गायन्ति देवा किल गीतकानि, धन्यास्तु ते भारतभूमिभागे।
> स्वर्गापवर्गास्पदमार्गभूते भवन्ति भूय पुरुषा सुरत्वात्॥

श्रीमद्भागवतेऽप्यस्य महिमा भारतस्य स्पष्ट वर्णित—

> कल्पायुषा स्थानजयात् पुनर्भवात् क्षणायुषा भारतभूजयो वरम्।
> क्षणेन मर्त्येन कृत मनस्विन सन्यस्य सयान्त्यभय पद हरे॥

*एवमस्माक प्रियतमस्य देशस्य परम्पराऽतिप्राचीना, अस्येतिहासश्चातिगौरवशाली।* पूर्वपौराणिकयुगीना परमभागवता अत्रिभृग्वङ्गिरःकुम्भयोनिविश्वामित्रवसिष्ठपराशरादयो ब्रह्मर्षय प्रियव्रतनाभागेक्ष्वाकुसगरमान्धातृखट्वाङ्गरघ्वम्बरीषनृगनहुषजनकादयो राजर्षय

कश्यपदक्षादयः प्रजापतयोऽन्ये च ज्ञानसिद्धा मनीषिणो मन्वादयश्चेमां भारतभूमिं सृष्टेरादिकालादेव धन्या मान्यां पवित्रां च कृतवन्तो, यथा ब्रह्मणा उक्तं भागवते[1] स्वपुत्रं देवर्षिं नारदं प्रति—

> वेदाहमङ्ग ! परमस्य हि योगमायां, यूयं भवश्च भगवानथ दैत्यवर्यः ।
> पत्नी मनोः स च मनुश्च तदात्मजाश्च, प्राचीनबर्हिर्ऋभुरङ्ग उत ध्रुवश्च ॥
> इक्ष्वाकुरैलमुचुकुन्दविदेहगाधिरघ्वम्बरीषसगरा गयनाहुषाद्याः ।
> मान्धात्रलर्कशतधन्वनुरन्तिदेवा देवव्रतो बलिरमूर्त्तरयो दिलीपः ॥
> सौभर्युतङ्कशिबिदेवलपिप्पलादसारस्वतोद्धवपराशरभूरिषेणाः ।
> येऽन्ये विभीषणहनूमदुपेन्द्रदत्तपार्थार्ष्टिषेणविदुरश्रुतदेववर्याः ॥

एते सर्वे ब्रह्मर्षयो राजर्षयो मन्वादयो मनीषिणश्चान्ये भगवतो योगमायां विदुः, विदित्वा च तामतिक्रम्य भगवच्छरणं आपुः । एते सर्वे ज्ञानसिद्धा अस्य देशस्य ज्ञानपरम्परामनवरतं पुपुषुर्दीप्त्या च चक्रुः । अस्माकं देशः अस्य सर्वाः प्रजाश्च एतेषां महात्मनां गौरवावहानि नामानि कर्माणि च न कदापि विस्मरिष्यन्ति, यत एभिरेवास्माकमितिहासो विशेषतो गौरवशाली । एतादृशो भारतदेशः कस्य प्रियो न भवेत् ।

अन्यदप्ययमस्माकं देशः सर्वथा अद्भुत एव वर्तते । अस्य नैसर्गिकं सौन्दर्यमपि अप्रतिमम् । अयमेव देशो यत्र सर्वेऽपि षड् ऋतवः क्रमेणागत्य स्वसुषमाभिरिमनलङ्कुर्वन्ति । अन्यत्र सर्वत्रैको द्वौ वा ऋतू प्रायशो भवतः, त्रयस्तु केषुचिदेव देशेषु । अस्योत्तरस्यां दिशि प्रसृतो देवभूमिर्हिमालयो नाम नगाधिराजोऽस्य मुकुटमिव विराजते । सुप्रसिद्धेनाप्यस्य कवीन्द्रेण कालिदासेन स्वकीयं कुमारसम्भवं नाम महाकाव्यमस्यैव वर्णनेन, यस्य कुमारस्य पितुर्भगवतो महेशस्य निवासोऽप्यस्यैव हिमालयस्य कैलासनामकः पर्वतोऽस्ति ।

अस्य दक्षिणस्यां दिशि विराजते हिन्दमहोदधिरस्य महिमान्वितं चरणयुगलं प्रक्षालयन्निव । नैकरागस्फुरितमणिरुचानेन दक्षिणस्मिन्विभागेऽनवरतमसङ्ख्यानि महार्घाणि रत्नानि प्रदाय रत्नाकरमिति स्वनाम स्वकर्मणा चरितार्थं क्रियते । एवंविधो रम्यो देशः

---

[1] २।७।४३-४५

कस्य न प्रिय ? यस्य देशस्य रमणीया रात्रय, शोभनानि दिनानि, स्वर्णिम प्रभात, विलम्बमयी रागरञ्जिता सन्ध्या, नक्षत्रमण्डितमुन्मुक्त नभोमण्डल, रम्या पर्वता, विमलोदका गङ्गागोदावर्यादय पुण्यसरित , मनोहारीण्यरण्यानि, उर्वरा भूभागा, अन्न-बहुलानि क्षेत्राणि, सदैव शस्यश्यामला पृथिवी सोऽयमस्माक देश कस्य प्राणेभ्योऽप्यधिकतर न प्रिय ? गरिम्णा गरिष्ठो वरिष्ठोऽयमस्माक देशो यत प्राणेभ्योऽपि प्रियतरो देशवासिना कृतेऽतएवैतस्य सम्मान रक्षितुम् एतस्य गौरव च गोप्तुमनेके वीरपुरुषा न केवलमति-प्राचीन एवापितु परवर्तिनि अर्वाचीने चापि काले हुतात्मानो बभूवु । आत्मोत्सर्गं कृत्वा ते स्वजन्म स्वनाम च धन्य कृतवन्त । एतेषु महाराणाप्रतापो मेवाडकेशरी, क्षत्रपति शिवाजिमहाराज झाँसीराज्ञी लक्ष्मीबाई, अपि च भगतसिंह चन्द्रशेखरआज़ाद-रामप्रसादबिस्मिल खुदीरामबोस-रासबिहारीघोषप्रभृतयो वीरपुङ्गवा स्वीयेनात्मोत्सर्गेण चिराय अमरा सञ्जाता । प्राणेभ्योऽपि प्रेयस स्वदेशस्य कृतेऽन्येऽप्यनेके धीरपुरुषास्तिलकगोखले गान्धी नेहरू-सुभाष राजेन्द्र-पटेलप्रभृतयश्चिर कारायां निक्षिप्ता अनन्ता असह्ययातना सोढ्वा इममन्तत स्वतन्त्र स्वाधीन च कृतवन्तो, यत 'कष्ट खलु पराश्रय' इति ते सम्यग् विदन्ति स्म ।

स्वदेशस्य मनीषिणा गुरूणाम् आचार्याणा नेतृणा शासकानाम् अन्येषा च कर्तव्यमेतद् यत्ते स्वदेशवासिना सर्वेषा बालतरुणयुवादीना हृदयेषु स्वप्रियस्य राष्ट्रदेवस्य मोहिनी मूर्ति स्थापयन्तु, येन सर्वे राष्ट्रियास्तमेव देव परम मन्यमानास्तत्परायणास्तदुपासकास्तद्भक्ताश्च भवेयुर्न च कदापि तस्य सेवातो विमुखा भवेयु । जयतु राष्ट्रदेव ।

# आदिकवेर्वाल्मीकेः राष्ट्रियभावनाविकासेऽवदानम्

राष्ट्रिय स भवति यस्य स्वकीये राष्ट्रे, तस्याचारविचारधर्मसंस्कृतिपरम्परासु, तस्याङ्गभूतेषु गिरिनदीतटवनादिभूभागेषु च दृढानुरक्ति । राष्ट्रियता न केवल भौगोलिकी भौतिकी वाऽपितु सास्कृतिकी धार्मिकी वैचारिकी चापि भवति। आ हिमालयात् लवणाम्बुधिपर्यन्त प्रसृत भारताख्यमेकमेव राष्ट्रमासीदिति समेषा प्राचीनाचार्याणा काव्यकाराणा च दृष्टि। यदा कालिदास कुमारसम्भवे "अस्त्युत्तरस्या दिशि देवतात्मा हिमालयो नाम नगाधिराज । पूर्वापरौ वारिनिधी वगाह्य स्थित पृथिव्या इव मानदण्ड " ॥ (१/१) इत्यादि वर्णयति, रघुवशे च "दूरादयश्चक्रनिभस्य तन्वी तमालतालीवनराजनीला । आभाति वेला लवणाम्बुराशेर्धारानिबद्धेव कलङ्करेखा" ॥ (१३/२) इति च वर्णयति, तदा स आसेतुहिमाचल प्रसृतमेकमेव भारतराष्ट्र वर्णयतीति प्रतीयते, यद्यपि अभिधया स एव नैव ब्रवीति। यदा मुद्राराक्षसे चाणक्यश्चन्द्रगुप्तम् "आ शैलेन्द्राच्छिलान्त-स्खलितसुरनदीसीकरासारशीताद्, आतीरान्नैकरागस्फुरितमणिरुचो दक्षिणस्यार्णवस्य । आगत्यागत्य भीतिप्रणतनृपै शश्वदेव क्रियन्ता, चूडारत्नाशुगर्भास्तव चरणयुगस्याङ्गुलीरन्ध्रभागा " ॥ इत्येव चक्रवर्तित्वाशिषा सयुनक्ति, तदापि तदेव समग्र भारतराष्ट्र तन्नाटककर्तुर्विशाखदत्तस्य दृष्टे समक्षमासीत्। एवमेव "आमूलाद् रत्नसानोर्मलयवलयितादा च कूलात् पयोधे" इत्यादिरीत्या स्वदेशसीमान सङ्केतयन् पण्डितराजो जगन्नाथोऽपि तस्यैव विशालस्य भारतस्य चित्र समक्ष समुपस्थापयति। परवर्तिनावेतौ भारतस्यैक्त्वमभिधया कथयत । यद्यपि तत्तत्कालेष्वपि समग्रे देशे एकमेव राज्य शासन वा नासीत् तथापि तत्तद्भागेषु स्थितानि राज्यानि भारतस्यैव कथ्यन्ते स्म। अनेनेद तथ्य मनःपटले अङ्कित भवति यदस्माकमय भारताख्यो देश. अस्मद्राष्ट्र वा आदिकालादेवैकमासीत् किन्तु तस्य तत्तद्भागेषु विद्यमानानि राज्यानि अनेकान्यासन्। चक्रवर्तिसम्राजामपि राज्यानि प्रायेणोत्तरापथमात्रे दक्षिणापथमात्रे वाऽसन्, नैव सम्पूर्णेऽपि भारते। चक्रवर्तिनश्चन्द्रगुप्तस्याशोकस्य वा राज्यसीमासु दक्षिणापथ नैव समाहितमासीत्। यदा हर्ष उत्तरापथस्य समग्रस्य सम्राडासीत् तदैव दक्षिणापथे पुलकेशिनो द्वितीयस्य राज्यमासीत्। एवमेकाधिकानि राज्यानि राष्ट्रैकत्वस्य दर्शकान्यस्य

वा विरोधीनि नैव मन्यन्ते स्म तदानीम्। तेषां सर्वेषां दृष्ट्या आहिमालयात् कन्याकुमारीं यावद् भारतवर्षम् एकमेवासीत्।

भारतराष्ट्रस्येदं स्वरूपं रामायणकारोऽपि द्वित्रेषु स्थलेषु प्रस्तौति। प्राचीनभारतराष्ट्रस्य विस्तारः समधिकतर एव परिलक्ष्यते तस्य काव्ये। यथादौ एव निवेदितं, शास्त्रभेदमात्रेण भारतभूमिर्विभज्यते स्मेति प्रमाणीक्रियते संस्कृतवाङ्मयेन। तस्मिन् वर्णिताः सप्तनद्यः, सप्तपुर्यः, सप्तकुलाचलाः, सप्तर्षयो, पुण्यश्लोकाः सप्त चक्रवर्तिनः राजानो वा किं साम्प्रतिकभारतराष्ट्रस्यैकस्मिन्नेव भूभागे आसन् सन्ति वा ? सर्वथा नैवम्। तथापि धर्म संस्कृतिः कुलाचार देशाचार संहितादिवर्णनप्रसंगे एतानि साकल्येनैव भारतराष्ट्रस्यैव परिगृह्यन्ते न खलु तत्तज् जनपदविशेषाणाम्।

किष्किन्धाकाण्डे एकतासूत्रे आबद्धस्य तस्यैव भारतस्य वर्णनमवाप्यते। प्लवगेश्वरस्सुग्रीवो जनकजाऽन्वेषणार्थं वानरभटान् समादिशन् प्रकारान्तरेण भारतराष्ट्रस्य विस्तारं नानानदीनदसरोवराधित्यकोपत्यकागिरिकान्तारग्रामनगरजनपदादिसमन्वितं समुपस्थापयति। अनेनादिकवे राष्ट्रियभावना स्फारीभवति। तद्यथा—

"मार्गध्वं गिरिदुर्गेषु वनेषु च नदीषु च।
नदीं भागीरथीं रम्यां सरयूं कौशिकीं तथा॥
कालिन्दीं यमुनां रम्यां यामुनं च महागिरिम्।
सरस्वतीं च सिन्धुं च शोणं मणिनिभोदकम्॥
महीं कालमहीं चापि शैलकाननशोभिताम्।
ब्रह्ममालान् विदेहांश्च मालवान् काशिकोसलान्॥
मागधांश्च महाग्रामान् पुण्ड्रांस्त्वङ्गांस्तथैव च।
पत्तनं कोशकाराणां भूमिं च रजताकराम्॥
सर्वमेतद्विचेतव्यं मार्गयद्भिस्ततस्ततः।"—४०। १९ २३

इदमस्ति तद् भारतं यत्खलु रामायणकारस्य सुष्ठु ज्ञातम्। नैतन्मात्रम्। विस्तीर्णोदधिवक्षसि शयानानि द्वीपान्तराण्यपि नाविज्ञातानि तस्य। भारतीयसंस्कृतेर्गृहभूतानि तान्यपि वर्ण्यन्ते—

"समुद्रमवगाढाश्च पर्वतान् पत्तनानि च।
मन्दरस्य च ये कोटिं संश्रिता केचिदालया ॥
कर्णप्रावरणाश्चैव तथा चाप्योष्ठकर्णका।
घोरलोहमुखाश्चैव जवनाश्चैकपादका ॥
अक्षया बलवन्तश्च तथैव पुरुपादका।
किरातास्तीक्ष्णचूडाश्च हेमाभा प्रियदर्शना ॥
आममीनाशनाश्चापि किराता द्वीपवासिनः।
अन्तर्जलचरा घोरा नरव्याघ्रा इति स्मृता ॥" (४०/२५-२८)

सीतान्वेषणसन्दर्भोऽयं भारतस्वरूपपरिज्ञानार्थं विस्मयकारि वृत्तं प्रत्यक्षीकृतमिव प्रस्तौति। कपियूथपा विनतजाम्बवत्सुषेणशतबलाख्या क्रमेण प्राचीमवाचीं प्रतीचीमुदीचीं च प्रतिष्ठन्ते। प्रत्येकदिग्वर्णनप्रसङ्गे भारतीयनदीनदभूधरजनपदादीनां यादृशं सूक्ष्मातिसूक्ष्मं वर्णनं रामायणेऽवाप्यते, तन्निश्चप्रचं विस्मयावहमेव। तेषां प्रत्यभिज्ञानमप्यद्य न सुकरं प्रतिभाति। दक्षिणापथस्य परश्शता नद्य वनपर्वतादिका प्रदेशाश्च सविशेषं वर्णिता अस्मिन् प्रसङ्गे, येनादिकवेः राष्ट्रैक्यविषयिणी भावना साधु सिध्यति। उदाहरणरूपेण केचिद् अपेक्षिताः सन्दर्भा अत्रोदिध्रयन्ते, ये सर्वथाऽवधातव्याः—

"सहस्रशिरसं विन्ध्यं नानाद्रुमलतालयम्।
नर्मदां च नदीं रम्यां महोरगनिषेविताम् ॥
ततो गोदावरीं रम्यां कृष्णवेणीं महानदीम्।
वरदां च महाभागां महोरगनिषेविताम् ॥
मेखलामुत्कलां चैव दशार्ण-नगराण्यपि।
अश्ववन्तीमवन्तीं च सर्वमेवानुपश्यत ॥
विदर्भानृषिकांश्चैव रम्यान् माहिषकानपि।
तथा वङ्गान् कलिङ्गाश्च कौशिकाश्च समन्ततः ॥
अन्वीक्ष्य दण्डकारण्यं सपर्वतनदीगुहम्।
नदीं गोदावरीं चैव सर्वमेवानुपश्यन ॥

तथैवान्ध्राश्च पुण्ड्राश्च चोलान् पाण्ड्यान् सकेरलान्।
अयोमुखश्च गन्तव्यो पर्वतो धातुमण्डितः ॥
ततस्तामापगां दिव्यां प्रसन्नसलिलां शिवाम्।
तत्र द्रक्ष्यथ कावेरीं विहितामप्सरोगणैः ॥
तस्यासीनं नगस्याग्रे मलयस्य महौजसम्।
द्रक्ष्यस्यादित्यसङ्काशमगस्त्यमृषिसत्तमम् ॥
ततस्तेनाभ्यनुज्ञाताः प्रसन्नेन महात्मना।
ताम्रपर्णीं ग्राहजुष्टां तरिष्यथ महानदीम् ॥
सा चन्दनवनैर्दिव्यैः प्रच्छन्ना द्वीपशालिनी।
कान्तेव युवतिः कान्तं समुद्रमवगाहते ॥
ततः समुद्रमासाद्य सम्प्रधार्यार्थनिश्चयम्।
अगस्त्येनान्तरे तत्र सागरे विनिवेशितः ॥
चित्रनानानगः श्रीमान् महेन्द्रः पर्वतोत्तमः।
जातरूपमयः श्रीमानवगाढो महार्णवम् ॥
नानाविधनगैः सर्वलताभिश्चोपशोभितम्।
देवर्षियक्षप्रवरैरप्सरोभिश्च सेवितम् ॥
सिद्ध-चारणसङ्घैश्च प्रकीर्णं सुमनोहरम्।
तमुपैति सहस्राक्षः सदा पर्वसु पर्वसु ॥ (४१। ८-२३)

एवं विन्ध्यपर्वतादारभ्य दक्षिणमहार्णवेऽवगाढ, देवर्षियक्षप्रवरैरप्सराभिश्च सेवित सिद्धचारणसङ्घैश्च प्रकीर्णं, नानाविधशिखरैरुपशोभित पुनश्च भगवता सहस्राक्षेणेन्द्रेणापि पर्वणि पर्वणि सेवित सुमनोहर पर्वतोत्तम महेन्द्र यावत् विस्तृत सम्पूर्णं दक्षिणापथम् अखिलं वर्ण्यते महर्षिणाऽऽदिकविना वाल्मीकिना।

एवमेव पूर्वपश्चिमोत्तरभारतस्यापि विस्तृत वर्णनमुपलभ्यतेऽस्मिन्नेव प्रसङ्गे तच्च विस्तरभयान्नैवात्रोद्ध्रियते। कचन साररूपेण एतन्मात्रमुच्यते यत् प्रतीच्या

गुराष्ट्रबाह्लीकादय स्फीता जनपदा, सरित्सरोवरादीनि पुन्नागबकुलकेतकादिवनानि, विपुलानि प्राग्ज्योतिषादीनि पुराणि विचित्राणि पशुपक्षिपर्वतह्नादीनि पश्चिमसमुद्रपर्यन्तमुपलभ्यमानानि आदिकविना वर्णितानि। एव चोदीच्या शासनन्द्रप्रस्थकुरुमद्रकम्बोजादिप्रदेशा म्लेच्छपुलिन्दयवनशकबाह्लीकादिजातय, जाधपदादवदारुवनानि, यक्षगन्धर्वैर्मिविता कैलासपर्यन्त विस्तृता हेमगर्भ-देवसखादिप वंता तदनन्तर च स्थिता ब्राह्मपतापत्यिवना सिद्धवखानसबालखिल्यन्युषिताश्रमाश्च— एतत सर्व विमध्यन्यत्त्व सम्यग् वर्णितम्। एव सम्पूर्ण भारतराष्ट्रमासेतुहिमाचलम् आब्रह्मपुत्र प्रत्यक्समुद्रम प्रसृत विस्तृत चादिकविर्वाल्मीकि समक्ष वर्तत इति सुसिद्धम्। अस्य पशुपक्षिण अस्य वनपर्वतादीन मरित्समुद्रादीन जनपदान् प्रदेशान् प्रति तस्य प्रगाढ प्रेम दृढा चानुरक्ति स्पष्टमेव परिलक्ष्यते। एव भौगोलिकवर्णनेन भारतराष्ट्रस्य समग्रतामुपस्थाप्यादिकवि प्रथमो राष्ट्रकविरपि सिध्यति। यथा महाभारत—

"अत्र ते कीर्तयिष्यामि वर्ष भारत । भारतम्।
प्रियमिन्द्रस्य देवस्य मनोर्वैवस्वतस्य च"॥

इत्युक्त्वा यथा च विष्णुपुराणे—

"उत्तर यत् समुद्रस्य हिमाद्रेश्चैव दक्षिणम्।
वर्ष तद् भारत नाम भारती यत्र सन्तति ॥
कर्मभूमिरिय स्वर्गमपवर्ग च गच्छताम्।"

इत्युक्त्वा पृथिव्या सर्वेषु देशेषु भारतस्य सर्वातिशायि महत्त्व गौरव च प्रदर्शित, तथैव रामायणेऽपि महर्षिणा वाल्मीकिना देवर्षियक्षप्रवरै सिद्धचारणसङ्घैश्च न्युषिते महेन्द्रपर्वते पर्वसु पर्वसु देवराजस्येन्द्रस्यागमन भोगवत्या पुर्या सर्पराजस्य वासुकेरच कैलासे भगवत शिवस्य यक्षराजस्य कुबेरस्य च निवास, गङ्गा नर्मदा गोदावरी कृष्णवेणी कावेर्यादीना श्रेष्ठसरिता च देवतात्व वर्णयित्वाऽस्य भारतदेशस्य सर्वश्रेष्ठत्व स्थापितम्। एव राष्ट्रियभावनाविकासे भारतस्य भौगोलिक-सामाजिक-सास्कृतिकाखण्डतास्थापने च आदिकवेर्वाल्मीकेरवदान योगदान च प्रायेण दृश्यमेवाऽन्येषा कृते।

# पर्यावरणं संस्कृतकवयश्च

यदस्मान् परितः आवृणोति, येन वयं परितः आवृतास्तत् पर्यावरणं नाम। वयं पृथिव्यां भ्रमामो विचरामो विहरामः। वयं नदीषु, निर्झरेषु, सरोवरेषु क्रीडाम, तानवगाहामहे। वनेषु पुष्पितान् फलितांश्च वृक्षक्षुपादीन्, तेषु क्रीडतो कूजतः च विविधवर्णान् पक्षिणश्च दृष्ट्वा सुखिनो भवामः। पुष्पफलौषधीनां परिमलं वहन्तमबाधगतिकं गन्धवाहं[1] सेवामहे, तस्मिन् श्वासप्रश्वासक्रिया विदध्मः। सर्वेषामुपरि प्रसृतस्य आकाशोल्लोचस्य[2] तारकहीरकखचितस्य तले खेलन्तः कूर्दन्तो विहरन्तश्च वयम् अपरिमितं सुखम् अनिर्वचनीयमानन्दमनुभवामः। एतानि सर्वाण्येव तत्त्वानि तस्य प्राणपोषकस्य पर्यावरणस्य अपरिहार्याण्यङ्गानि यत् परमेश्वरस्य सर्वजगद्विधातुः प्रकृत्याऽस्मत्कल्याणाय परितः प्रसारितम्। अस्माकं शरीराण्यपि पृथिव्यप्तेजोवाय्वाकाशाख्यैः पञ्चमहाभूतैरेव रचितानि। अतः एतानि स्वस्थ-सुरक्षितानि कर्तुमेतेषां तत्त्वानां शुद्धता पवित्रता च सर्वथाऽपेक्षिता। स्वार्थे कुसंस्कारैः कुकृत्यैः अज्ञानजन्ययोपेक्षया च यदि वयमेतानि प्रदूषयाम, पर्यावरणस्याहर्निशं शुद्धिं विदधतो वृक्षक्षुपलतापल्लवपुष्पादीनि, पशुपक्षिसरीसृपादीन्, नदनिर्झरसरित्समुद्रादींश्च नाशयामो प्रदूषयामो वा, तर्हि पृथिवीग्रहोपरि विद्यमानं जीवनमेव वयं संशयास्पदं कुर्म इति निश्चप्रचम्। अस्यां वस्तु-स्थितौ प्रतीतिश्चेदियं भवेद् यद् बहिः स्थिताः पृथिवी-जल-तेजो-वाय्वाकाशादयः सरित्-समुद्र-पर्वत-वन-वनस्पत्यादयश्च पदार्था अस्मज्जीवनशैल्या अस्मत्क्रिया-कलापैः प्रभूतं प्रभाविता भवन्ति, ते चाप्यस्मान् अस्मदस्तित्वम् अस्मज्जीवनं च तथैव प्रभावयन्ति द्वयमेव चान्योन्याश्रितं, तर्ह्येव तेष्वस्माकं प्रगाढं प्रेम अस्मास्वादरभाव उत्पद्यते येन तान् प्रत्युपेक्षाभावो विलीयेत। यस्मिन् पदार्थे स्वीयमस्तित्वमाश्रितम्, यस्माल्लोकः सुखं शान्तिं च लभते, तस्मिन् प्रेमभावो दृढासक्तिश्च स्वभावतो जायते। किन्त्वेतत्कृते द्वयोः पक्षयोः अयं कार्यकारणभावो मनसि सुप्रतिष्ठितो भवेत्। यदस्माकं पर्यावरणमस्माभिः शुद्धमप्रदूषितमक्षीणं च रक्ष्यते, तर्ह्यवश्यमेव निश्चितमेव अस्मदस्ति-

---

१ वायु

२ रत्नियता, चंदोवा।

त्वमस्मज्जीवन च एतेन परिरक्षित करिष्यते। शुद्धमप्रदूषित पर्यावरणमस्य लोकस्य स्वस्थनीरोगजीवनस्य साक्षात्कारणम् इद च तस्य साक्षात्कार्यमिति दृढो विश्वास सुदृढा प्रतीतिर्मनसि सुदृढमूला भवेत्। प्रकृतिर्मनुष्यश्च परस्पर सम्बद्धौ, एकस्य हानिरपरस्य हानौ परिणमते इति तथ्य सुविदित भवेत् सर्वेषाम्। वस्तुतो लतावृक्षक्षुपादीना पत्रेषु प्राणवायोर्वास, पर्यावरणप्रदूषणस्यापहारे च तेषामद्भुतक्षमता भवति। पुनश्च, वृक्षादिषु सत्सु पर्याप्त जलवर्षण भवति येन कृषिकर्म सुष्ठु प्रचलति। अन्यच्च, वृक्षौषधि-वनस्पत्यादीना मूलेषु जलसञ्चयनस्य प्रभूतक्षमता भवति, येन भूमेरार्द्रता सुरक्षिता वर्तते, मरुत्व भय[1] निवर्तते, उर्वरता च वर्धते। एव सति प्रकृतिमनुष्ययो पारस्परिकसहयोगेनैव सर्व समञ्जस सर्व कल्याणमय सर्व शिवात्मक भवति।

अस्माक प्राक्तनैर्महर्षिभि कविभिर्मनीषिभिराचार्यैश्च तथ्यमेतदनेकशोऽनेकप्रकारै प्राकाश्य नीतम्। यद्यपि श्रीमद्भागवत कर्मभक्तिज्ञानयोगादिप्रतिपादनपर आध्यात्मिक-ग्रन्थस्तथापि तस्मिन्नपि नैकवारमेतत सुस्पष्ट प्रतिपादितम्। एकदा वृन्दावने गाश्चारयन् भगवान् श्रीकृष्ण स्वयमेव श्रीमुखेन पर्यावरण-प्रधानभूताना वृक्षादीना महत्त्व स्वाग्रज बलराम प्रति एव निवेदितवान्—

"पश्यैतान् महाभागान् परार्थैकान्तजीवितान्।
वातवर्षातपहिमान् सहन्तो वारयन्ति न ॥
पत्रपुष्प-फलच्छाया-मूल-वल्कल-दारुभि ।
गन्धनिर्यासभस्मास्थितोक्मै[2] कामान् वितन्वते" ॥
—भागवत १० ।२२ ।३२, ३४

महर्षिणा वाल्मीकिनापि स्वकीये आदिकाव्ये वसन्त-वर्षा-शरद्-ऋतूना वर्णनद्वारेण मानवलोकस्य निरन्तराह्लादकरूपेण शोकादिनिवारकरूपेण च प्रकृतिश्चित्रिता। वसन्ते शीतशिवोदकाया पम्पाख्याया पुष्करिण्यास्तटेषु स्थिताना कूजद्-विविधविहङ्गमाना पुष्प भारसमृद्धशिखराणा पुष्पिताभिर्लताभिरुपगूढाना, शैलकन्दरनिष्क्रान्तेन सुखानिलेनान्दो-लितशाखाना कुसुमितवृक्षाणा, तस्या पद्मेन्दीवरकोकनदसुगन्धिते प्रसन्नसलिले क्रीडता हंसचक्रवाककारण्डवादीना पक्षिणा, तस्या मत्स्यकच्छपादिजलचराणा मातङ्गमृगयूथाना

१ मरुभूमि या रेगिस्तान होने का डर।
२ [illegible] गोंद भस्म [illegible]।

वन्यपशूना च यादृश मनोमोहकमालसन्तृप्तिकर च लोक श्रीराममुखेन लोकनयनातिथि कारयति कवि, स तस्याप्रतिम प्रकृतिप्रेम प्रकटयन् मानवमात्रकृते अमूल्यमिम सन्देशमावहति यत् भगवत प्रकृतेरुत्सङ्गे यादृश आनन्द आह्लाद उल्लासश्चानुभवितु, जीवनस्य समस्तशोकसन्तापादिक च विस्मर्तु शक्यते न तादृशोऽन्यत्र कुत्रापि। दृश्यताम् अय प्रकृतिलोक—

शोकार्तस्यापि मे पम्पा शोभते चित्रकानना।
व्यवकीर्णा बहुविधै पुष्पै शीतोदका शिवा॥
पतितै पतमानैश्च पादपस्थैश्च मारुत।
कुसुमै पश्य सौमित्रे! क्रीडन्निव समन्तत॥
एव विचित्रा पतगा[१] नानारावविराविण।
वृक्षगुल्मलता पश्य सम्पतन्ति ततस्तत॥
एषा प्रसन्न-सलिला पद्मनीलोत्पलायुता।
हस-कारण्डवाकीर्णा पम्पा सौगन्धिकान्विता॥
चक्रवाकयुता नित्य चित्रप्रस्थवनान्तरा।
मातङ्गमृगयूथैश्च शोभते सलिलार्थिभि॥
—किष्किन्धा १।६ १३, २८ ६३ ६५

एवमेव वालिन हत्वा सुग्रीव चाभिषिच्य माल्यवतो गिरे पृष्ठे वसतो विरहिणो रामस्य मुखेन लक्ष्मण प्रति प्रावृट्शरदोरपि चित्तसन्तर्पक वर्णन कविना कारितम्। तस्य कतिपये एवाशास्ततस्तत उद्धृत्य चक्षुषा चुलुकीक्रियन्ते—

"नवमासधृत गर्भं भास्करस्य गभस्तिभि[२]।
पीत्वा रस समुद्राणा द्यौ प्रसूते रसायनम्[३]॥

---

१ अनेक प्रकार की बोली बोलन वाले पक्षी।
२ किरणें से।
३ समुद्रों का जल तो रस है, किन्तु उसे पीकर मेघों द्वारा बरसाया गया लोककल्याणकारी जल 'रसायन' है। अन्यथा उसे पीकर पशु पक्षि वनस्पतियों का मुरझाया जगत् प्रफुल्लित एव तृप्त कैसे हो जाता।

एष फुल्लार्जुन शैल केतकैरधिवासित ।
सुग्रीव इव शान्तारिर्धाराभिरभिषिच्यते ॥
[१]कशाभिरिव हैमीभिर्विद्युद्भिरिव ताडितम् ।
अन्त स्तनितनिर्घोष सवेदनमिवाम्बरम् ॥
व्यामिश्रित सर्जकदम्बपुष्पैर्नव जल पर्वतधातुताम्रम् ।
मयूरकेकाभिरनुप्रयात शैलापगा शीघ्रतर वहन्ति ॥
क्वचित् प्रगीता इव षट्पदौघ क्वचित् प्रनृत्ता इव नीलकण्ठै ।
क्वचित् प्रमत्ता इव वारणेन्द्रैर्विभान्त्यनेकाश्रयिणो वनान्ता ॥
प्रहृष्टसन्नादितबर्हिणानि[२], सशक्रगोपाकुलशाद्वलानि[३] ।
चरन्ति नीपार्जुनवासितानि[४] गजा सुरम्याणि वनान्तराणि ॥
मत्ता गजेन्द्रा मुदिता गवेन्द्रा[५] वनेषु विक्रान्ततरा मृगेन्द्रा ।
रम्या नगेन्द्रा[६] निभृता[७] नरेन्द्रा प्रक्रीडितो वारिधरै सुरेन्द्र ॥"

—किष्किन्धा २८।१०, ११, १८, ३३, ४१, ४३

वर्षाभिरुद्भावित सरस्सरिद्वनवृक्षपर्वतादीना सुरम्य रूपमालोक्य कस्य सहृदयस्य हृदय मदोन्मत्त नेव भवति अस्य सुख चानुभवितु मन सोत्क[८] नैव जायते ? आधुनिकस्य दैनन्दिनजीवनस्य सर्वाणि दुःखानि सर्वा समस्याश्च विस्मृत्य प्रावृडो दिव्यानन्दपयोनिधौ अवगाहनेन निखिलोऽपि लोक प्रमुदितमनास्सर्वविधखेद रहितो भवितु शक्नोति । एवमेव

---

१ स्वर्णमय कोड़ों- जैसी विद्युत से मानो प्रताड़ित मेघों के गर्जन गड़गड़ाहट से युक्त आकाश मानो पीड़ा से आर्तनाद कर रहा है।
२ मयूर।
३ शक्रगोप अर्थात् इन्द्र वधूटियों से व्याकुल अर्थात् परिपूर्ण घासों वाले (वन)।
४ कदम्ब और अर्जुन के फूलों से सुगन्धित।
५ वृषभ साँड।
६ पर्वत।
७ शान्त, उद्यमहीन।
८ उत्सुक, लालायित।

शरदोऽपि नवनवं समुत्पादकरं सुरम्यं रूपं दर्शयित्वा कविः क्लान्तेऽपि मनसि जिजीविषां जागरयति–

शाखासु सप्तच्छदपादपानां, प्रभासु ताराकेनिशाकराणाम्।
लीलासु चैवोत्तमवारणानां, श्रियं विभज्याद्य शरत् प्रवृत्ता॥
मदप्रगल्भेषु च निम्नगासु, विभाति लक्ष्मीर्बहुधा विभक्ता॥
व्यपेतपङ्कासु सुवालुकासु, प्रसन्नतोयासु सुगोकुलासु।
ससारसारावविनादितासु, नदीषु हृष्टा निपतन्ति हंसा॥
रात्रिः शशाङ्कोदितसौम्यवक्त्रा, तारागणोन्मीलितचारुनेत्रा।
ज्योत्स्नांशुकप्रावरणा विभाति, नारीव शुक्लांशुकसंवृताङ्गी॥
सुप्तैकहंसं कुमुदैरुपेतं, महाहृदस्थं सलिलं विभाति।
घनैर्विमुक्तं निशि पूर्णचन्द्रं, तारागणाकीर्णमिवान्तरिक्षम्॥"

—किष्किन्धा ३०।२२ २९ ३३ ४३ ४६ ४७, ४९

अनेन विस्तृतवर्णनेनेतत् तथ्यं सुस्पष्टं भवति यदादिकविना ऋतुवर्णनद्वारेण यः प्रकृतिलोकः नदीनदपुलिनवृक्षमार्गगिरिकाननमयो हंससारसचक्रवाककारण्डवपरभृतादिविहङ्गमयः मत्तगवेन्द्रगजेन्द्रशशमृगसिंहादिमयः सर्जसप्तच्छदकदम्बकेतककर्णिकारादिमयः पद्मकुमुदकुवलयकल्हारेन्दीवरादिमयः पृथिवीजलवाय्वन्तरिक्षाकाशादिमयः सूर्यचन्द्रतारकादितेजोमयो बहुविधो वर्णितस्तस्मिन् तस्य महती प्रीतिः प्रगाढं प्रेम महांश्चानुरागो वर्तते स्म। अस्मिन् प्रवेशं प्राप्य मानवलोको धन्यजीवनः कृतकृत्यश्च भवति। अतश्च तस्य प्रकृतिलोकस्य सहयोगः सर्वथा सर्वदा सर्वत्रैवावाप्तव्यः। अयमेव तत् पर्यावरणं यन्मानवलोकेन स्वहितार्थं सुरक्षणीयं, न च प्रदूषयितव्यं कथमपि कदापि।

ऋतुसंहाराख्ये स्वकाव्ये कविकुलगुरुणाऽऽदिकवेरनुसारिणा कालिदासेनापि एवमेव मनोमोहकं वर्णनं षण्णामृतूनां कृतम्। किन्तु रघुवंशकाव्ये शाकुन्तले च मानवस्य सहचरीरूपेण यद् वर्णनं चित्रणं वा ननु परमहृदयावर्जकम्। गुरोर्वसिष्ठस्याश्रमं प्रति

इत्यादिप्रकारेण वर्णित यत् वनस्पतिभिर्वनदेवतया च सर्वाण्यलङ्कारवस्तूनि शकुन्तलोपभोगार्थं दत्तानि। अपि च, शकुन्तलाप्रस्थानसमय तस्या वियोगेनासन्नेन विह्वालाना पशुपक्षिलतादीना कीदृशी व्यथेति चित्रयते कविनैवम्–

"उद्गलितदर्भकवला मृग्य. परित्यक्तनर्तना मयूरा. ।
अपसृतपाण्डुपत्रा मुञ्चन्त्यश्रूणीव लता ॥"[1] –शा. ४।१२

एव कविना एषा व्यथा मूर्तिमतीव कृता। आधुनिकजनस्य तु एतस्मिन्सर्वस्मिन् विश्वास प्रतीतिरेव न भवेत् किन्तु क्रान्तदृष्टे कवे कृते तु सर्वमेतत् समञ्जसमेव। एकैव सर्वव्यापिनी चिच्छक्ति निखिलमपि स्वनिर्मित ब्रह्माण्डमन्तर्यमयतीति तस्या प्रथमाभिव्यक्ति. ऋताख्या निखिलमपि जगद् बध्नातीति तथ्यमेतद् भारतीयमनीषिणा कृते। ततो नाश्चर्यमेवविधासु घटनासु कर्तव्यम्। तथ्यमेतदवश्यमेव सर्वे स्वमनसि धार्यमीदृशीना घटनाना सम्बन्धे यत् तेषा कृते एव एता घटन्ते यै सर्वेषु चराचरेषु तस्या एव चिच्छक्ते प्रसार दर्शं दर्शमात्मसम आत्मीयतापूर्णश्चव्यवहार. क्रियते। शाकुन्तलेऽस्य प्रतिबन्धस्य पालन क्रियमाण दृश्यत एव–

"पातु न प्रथम व्यवस्यति जल युष्मास्वपीतेषु या
नादत्ते प्रियमण्डनापि भवता स्नेहेन या पल्लवम्।
आद्ये व कुसुमप्रसूतिसमये यस्या भवत्युत्सव
सेय याति शकुन्तला पतिगृह मर्वरनुज्ञायताम् ॥"–शा. ४।९

अतएव शकुन्तलाया प्रस्थानसमये,

"रम्यान्तर. कमलिनीहरितै. सरोभिश्छायाद्रुमैर्नियमितार्कमयूखताप. ।
भूयात् कुशेशयरजोमृदुरेणुरस्या, शान्तानुकूलपवनश्च शिवश्च पन्था. ॥"
–शा. ४।११

इत्यादिरूपा शिवात्मिका वाणी आकाशे सञ्जाता। एतत्सर्वं कालिदासकृत वर्णनमिदमेव तथ्य स्थापयति यत् सुखमयस्य कल्याणमयस्य जीवनस्य कृते लोकस्यास्य समानमहत्त्वशालिनाऽङ्गेन पर्यावरणेन सह सामञ्जस्य स्थाप्येत, बाह्यप्रकृत्या सह

---

१ मूल प्राकृतपद्यस्य सस्कृतानुवादोऽयम्, अत आर्यालक्षणमत्र न घटते।

मानवस्यात्मीयतापूर्णो रागात्मकः सम्बन्धः स्थाप्येत। एवं कृते तस्य परिरक्षणं सम्भवेत्, तद्धानिश्चावरोद्धुं शक्येत।

प्रायेण इयमेव दृष्टिर्भासभट्टिभारविभवभूतिदिङ्नागादीनामपि। यदा भासः स्वप्नवासवदत्तस्य प्रथमाङ्के 'विस्रब्धं हरिणाश्चरन्त्यचकिता देशागतप्रत्यया, वृक्षाः पुष्पफलैः समृद्धविटपाः सर्वे दयारक्षिताः' (१।१२) इत्यादिना परितस्तपोवनं सम्भावयति, यदा वा 'खगा वासोपेताः सलिलमवगाढो मुनिजनः प्रदीप्तोऽग्निर्भाति प्रविचरति धूमो मुनिवनम्'। (१।१६) इत्यादिना मुनिवनं वर्णयति, तदा तस्य दृष्टिः पर्यावरणपरिरक्षणे एव सुस्थिरा दृश्यते। एवमेव रामानुगमनादनादाराध्या शून्यतां गतामयोध्यां वर्णयन् यदा भासः प्रतिमानाटके 'नागेन्द्रा यवसाभिलाषविमुखाः सास्रेक्षणा वाजिनो, हेषाशून्यमुखा–' (२/२) इत्यादिप्रकारेण गजवाजिनां रामं प्रति आत्मीयतां प्रदर्शयति, तदा स कृतोपकारं प्रति पशूनामपि मूककार्तरयमेव ज्ञापयति, विश्वासयति च सर्वान् जनान् यत् स्नेहं समधिकतरं प्रतिस्नेहमवाप्नोति। भट्टे

"निशातुषारैर्नयनाम्बुकल्पैः पत्रान्तपर्यागलदच्छबिन्दुः।
उपारुरोदेव नदत्पतङ्गः कुमुद्वतीं तीरतरुर्दिनादौ॥"

इत्यादिवर्णने कालिदासस्य 'पीडयन्ते गृहिणः कथं न तनयाविश्लेषदुःखैर्नवैरित्यादिपङ्क्तेर्भावस्यैव प्रतिध्वनिर्लक्ष्यते येनानुमीयते यद् वृक्षादिष्वपि मनुष्येष्विव वेदनादिभावा भट्टेरप्यभिमताः। कुन्दमालाकर्तुर्दिङ्नागस्य तु लक्ष्मणद्वारेण, आर्याया जानक्याः कृते

"जातश्रमा कमल[illegible]क्ता[illegible]धिवासैः काले त्वमप्यनुगृहाण तरङ्गवातैः।
देवी यदा च सवनाय विगाहते त्वां, भागीरथि! प्रशमय क्षणमम्बुवेगम्॥
एषोऽञ्जलिर्विरचितो वनदेवतानां, विज्ञापनां क्षणमिमामवधारयन्तु।
सुप्ता प्रमादवशगा विषमस्थिता वा, यत्नादियं भगवतीभिरवेक्षणीया॥
सख्यो नद्यः स्वामिनो लोकपालाः, मातर्गङ्गे! भ्रातरः शैलराजाः।
भूयो भूयो याचते लक्ष्मणोऽयं यत्नाद् रक्ष्या राजपुत्री, गतोऽहम्॥"
—१।२२, २८, २६

इत्यादिविज्ञापना तस्येम विश्वास प्रबलतया प्रकटीकरोति यन्नदी वृक्ष शैल वनप्रदेशास्तद्देवतादयश्च सविनय विज्ञापिता सन्तोऽवश्यमव जातस्नेहा रक्षाभावसवलिता भवन्ति मनुष्या पुन प्रकाममेवविधा न भवयु । कविनाऽय विश्वास एतत्पूर्वमपि

"एते रुदन्ति हरिणा हरित विमुच्य,
हसाश्च शोकविधुरा करुण रुदन्ति।
नृत्य त्यजन्ति शिखिनोऽपि विलोक्य देवी,
तिर्यग्गता वरममी न पर मनुष्या ॥" –१।१८

इत्यादिप्रकारेण सम्यक् प्रकटित ।

एवमेवान्यैरपि सस्कृतकाव्यकर्तृभिरस्य पर्यावरणस्य सवेदनात्मक हृदयावर्जक च रूप चित्रितम्। तेषामय दृढो विश्वास आसीद् यदिदमस्माक जीवन प्रभूत प्रभावयति स्वय चाप्यस्माक जीवनशैल्या प्रभूततर प्रभावित भवति। आधुनिकजीवनस्य तु विडम्बनैवेय यदनुदिन वर्धमानाना व्यस्तताना मध्ये मानव एतावन्महत्त्वपूर्ण पर्यावरणमुपेक्षितु विवशो जात । येषा जन्मत एव पशुपक्षिजीवजन्तुनदीसरोवरवृक्ष क्षुपलतापत्रादीनि तेषा परिलघोर्लोकस्याविच्छिन्नान्यङ्गान्यभवन्, ते शिशवोऽपीदानामतेभ्य क्रमेण पृथग्भवन्तो दूरातिदूर गन्तु विवशा जाता । एतेन दिनानुदिन तेषा स्वास्थ्य दुष्प्रभावित भवेद् यत् स्वाग्र्यस्य कृते कथमपि शुभ नैवास्ति, यतो हि त एवास्माकम् भाविसन्ततय, तेष्वेवास्मदीयपरम्पराणा सरक्षणस्य भार । अत पर्यावरणपरिरक्षण सर्वेषा राष्ट्रिय कर्तव्यम्।

□

# पर्यावरणप्रदूषणस्य समस्या समाधानं च

कि नाम पर्यावरणम् ? व्युत्पत्यात्मकस्त्वर्थोऽयमेव यद् 'यदस्मान् परित आवृणोति येन वा वयमावृता परितस्तत् पर्यावरणम्'। एतदन्त पृथ्वीतल, तदुपरि स्थित वन वायुमण्डल च समाविष्टम्। सर्वे प्राणिन सर्वे च जीवाश्चराचरात्मका इद भौतिक पर्यावरण समाश्रित्यैव जीवन धारयन्ति, इद चापि तेषामनुक्षण घटमानाभिर्विविधाभिश्चेष्टाभि क्रियाभिश्च अनवरत परिवर्तमानमस्ति। द्वयमपि परस्पर घनिष्ठरूपेण सम्बद्धम्। द्वयो सम्बन्ध एतावद् गाढो घनो वा यत् कस्मिंश्चिदपि एकस्मिन् घटित महत् परिवर्तन अपरत्रापि महत् परिवर्तन घटयति।

मनुष्यस्य क्रियाकलापास्तस्य पर्यावरणमनेकप्रकारै प्रभावयन्ति। यथा, विविध-धातुपाषाणवालुकादिकृते क्रियमाणा खननक्रिया, भवनादिनिर्माणार्थमपेक्षितदारुकृते आन्वाहिकपाकाद्यपेक्षितेन्धनकृते च वृक्षाणा निपातन छेदन वा, अनुदिनवर्धमान-जनसङ्ख्याकृतेऽधिकाधिककृषियोग्यभूमेर्लाभार्थं वनाना नि.शेषीकरण समापन वा-एतत्सर्व भूमितलोपरि वर्तमाना कृषियोग्यामुर्वरा मृत्तिका प्रदूषयन्ति। इयमेव सर्वेषा प्राणिना जीवाना च जीवनाश्रयभूता ओषधी शस्यानि वनस्पतीश्च पोषयति। वनेषु नि शेषीकृतेषु वृक्षेषु च निपातितेषु नग्नत्व प्रापिताया भूमेस्तलात् सर्वा मसृणसुकुमारा चिक्कणा मृत् वर्षाजलैरपवाह्य नदीषु जलाशयेषु समुद्रेषु च पात्यते येन तस्या उर्वरता क्रमेण न्यूनान्न्यूनतरा सञ्जायते, अन्ततश्च सा मरुभूमित्वेन परिणमते। इष्टकादिनिर्माणेनापीय मृतिका सतत न्यूनता गच्छति। अस्मद्देशे जलेन क्रियमाणस्य क्षेत्रसेचनस्य दुर्व्यवस्थयापि मृत्तिकाप्रदूषण सञ्जायते। शस्यपोषणार्थं क्षेत्रेषु कुल्याभिरानीयमान जल शस्यानि रक्षति पोषयति च। किन्तु तीव्रगतिना जलप्रवाहेण सहैवानीतया वालुकामिश्रितया मृदा क्षेत्राणि शनै शनैरूषरत्वेन परिणमन्ते। विगतेषु कतिपयेष्वेव वर्षेषु अस्मद्देशे प्रभूतपरिमाण क्षेत्रफलमनेनैव कारणेनोषर सञ्जातम्। पूर्वत एव विद्यमानाया मरुभूमे सुदूरस्थप्रदेशेष्वपि अविवेकपूर्णवृक्षनिपातनेन, कुल्याभि क्षेत्रसेचनव्यवस्थया, अन्यैश्च कारणैरुर्वराभूमिरूषरत्वेन मरुत्वेन च परिणममाना

दृष्टिपथमायाति। अतः पर्यावरणस्य महत्त्वपूर्णघटकतत्त्वस्यास्य प्रदूषणमवरोद्धुं संरक्षणं च कर्तुं सर्वेषां जनानां शासनस्य च सहयोगेन उपायाः करणीयाः।

अनेकेषां जनानां भ्रान्तिरियं यद् वनसंरक्षणविधीनां सुदृढप्रवर्तनेन वृक्षाणामविवेकपूर्णं निपातनं सुखेन सरलतया निवर्तयितुमवरोद्धुं च शक्यते। यतो हि यावद् वनोत्पाद्येषु अन्नफलेन्धनादिषु आश्रितानां जनानामौलिकावश्यकतानां काप्यन्या व्यवस्था न क्रियते, कोऽपि विकल्पो न प्राप्यते, तावत् विधेरनुपालनं व्यवहरणं वा न कथमपि सम्भवम्। अत इयं समस्या न तावत् सरला ऋजुर्वा यावदापाततो लक्ष्यते। इयं पर्याप्तजटिला स्वसमाधानार्थं च राष्ट्रियस्तरे प्रयत्नं प्रयासं चापेक्षते।

यथा पूर्वमुक्तं, जलं पर्यावरणस्य द्वितीयं महत्त्वपूर्णं घटकं वर्तते। अस्मद्देशे जलस्य प्रभूतं पर्याप्तं च प्राकृतिकसाधनं वर्तते। किन्त्विदं बाहुल्येन प्रदूषितमस्ति। एकेन सर्वेक्षणेन अस्मद्देशे उपलब्धस्य समस्तस्य जलस्य प्रायेण तृतीयांश एव शुद्धोऽवशिष्टस्तु प्रदूषित एव। मनुष्यवसतीनां[1] सामूहिकोऽवकरः[2] औद्योगिकमलक्षेपापेक्षया चतुर्गुणस्य-पञ्चगुणस्य[3] वा प्रदूषणस्य कारणम्। जलधारासु एतेऽवकरा मलप्रवाहाश्च क्षिप्यन्ते पात्यन्ते वा, येन ता जलधारा विषाक्ता भवन्ति। तासां जलमुपयोगे आनीतं सदनेकेषां व्याधीनां प्रवाहिकातिसारान्त्रज्वरादीनां[4] रोगाणां च कारणं भवति। देशस्य ३११९ नगरोपनगराणां मध्ये २१७ नगरेष्वेव मलनिष्कासनाय प्रणालिका-व्यवस्था[5] वर्तते। अस्मादतस्या जलप्रदूषणसमस्याया गाम्भीर्यं महत्त्वं चाकलयितुं शक्यते। का कथाऽन्यासां जलधाराणां सर्वदेवमयीति विश्रुता श्रुतिस्मृतिपुराणादिषु, भगवच्चरणावनेजनं[6]-भूता, मुरारिचरणाम्बुजमाध्वीति वेदे लोके च विख्याता, भुक्तिमुक्तिप्रदायिनी पुण्यतोया भगवती गङ्गापि शोधानन्तरं प्रभूतप्रदूषितजला प्राप्तेत्यहो कले प्रभावः। हिमालयेषु जातानामोषधीनां सम्पर्कादौषधभूतैर्जलैराप्यायितशरीरत्वादस्या जलमनेकरोगदोषादिदूरीकरणे परमौषधमासीत्। किन्तु हा! हन्त!! स्थाने-स्थाने विशेषतश्च कर्णपुरे काश्यां,पाटलिपुत्रे, मोकामा इत्याधुनिके उपनगरे मलमूत्रादिवाहिनीभि

१ बस्ती, अबादी।
२ कूडा-करकट।
३ चौगुना पँचगुना।
४ डायरिया डिसन्ट्री, टायफायड।
५ सिवरेज सिस्टम।
६ प्रक्षालनजल।

आद्योगिकसंस्थानानां विकृत-विषाक्तद्रववाहिकाभिश्च प्रणालिकाभिः एतदपि प्रभूतं प्रदूषितं वर्तते। अतएव केन्द्रीयशासनेन किञ्चित्पूर्वं गङ्गाशोधनायोगः स्थापितो यः प्रदूषणापाकरणाय सप्रयत्नः सचेष्टश्च वर्तते। अनेनैवास्याः समस्यायाः जटिलता गम्भीरता चानुमातुं शक्यते। किन्त्वस्याः योजनायाः सर्वतो महती न्यूनतेयमस्ति यदौद्योगिकप्रदूषणावरोधार्थमस्यां न किमपि प्रभावकारि प्रावधानं वस्तुतो वर्तते। एतदभावे प्रदूषणापाकरणकार्यमत्यधिकं कठिनमपूर्णं च भवेत्।

पर्यावरणस्य तृतीयघटकं वायुमण्डलमस्ति। वायुस्तु वस्तुतः प्राण एव, जीवनमेव सर्वथा चराचरात्मकानां जीवानाम्। यद्ययं प्रदूषितो विकृतो वा भवेत्तर्हि न कोऽपि प्राणी स्वस्थो वर्तेत, सुखेन वा जीवनं यापयेत्। किन्तु इदानीन्तनी वास्तविकता तु इयमेवास्ति यन्मृत्तिकेव जलमिव च वायुरपि औद्योगिकोत्पादनेन मोटरपरिवहनेन अश्माङ्गार[1] प्रयोगेण अन्यैश्च विविधैर्मानुष्यकैः कार्यैर्विकृतः प्रदूषितश्च जातः। वायोः प्रदूषणविषये पूर्वोक्ताभ्यां द्वाभ्यामिदमतिरिक्तमधिकं वा कष्टकरं यत् प्रदूषिताद्वायोर्न किमपि त्राणं रक्षणं वा सम्भाव्यं, तस्य परिहारो न कथमपि शक्यः। स तु यादृशस्तादृश एव ग्राह्यः। जलं त्वशुद्धं प्रदूषितं वा सत् परिहर्तुं त्यक्तुं च शक्यमथवा परिशोधितं परिपूतं च सत् पेयम्। प्रदूषितजलग्रहणे न तादृशं वैवश्यं यादृशं प्रदूषितवायोर्ग्रहणे भवति। एवं सति श्वासप्रश्वाससम्बन्धिभिः अथ च फुप्फुस[2] सम्बन्धिभिरनेकैर्व्याधिभिराक्रान्तो भवति जनः। औद्योगिकसंस्थानेषु तापीयविद्युद्गृहेषु[3] च धूमप्रणालिकाभ्यो[4] निर्गच्छन्, मोटरादिवाहनेभ्यश्चुल्लीभ्राष्ट्रादिभ्यश्च[5] निष्क्रामन् धूमो वायुमण्डलं सर्वतोऽधिकं प्रदूषयति। अतो यावदूर्जोत्पादनस्यान्ये विकल्पा नैव प्राप्यन्ते, तावद् वायोः प्रदूषणं साकल्येनावरोद्धुं नैव शक्यते। साकल्येनेति पदमत्र साभिप्रायं प्रयुक्तम्। वायोः प्रदूषणापाकरणाय चर्चित उपायः निषेधपरक एव। अश्माङ्गारादीनामिन्धनानां चोपयोगनिषेधो वैकल्पिकेंधसां प्राप्तावेवाश्रितः, सा च प्राप्तिरतिकठिना समयापेक्षिणी[6] च। न च वायुमण्डलस्यानुदिनं वर्धमानं प्रदूषणं कालातिक्षेपमहिष्णु। तस्मा-

---

१ पत्थर का कोयला।
२ फेफड़ा
३ थर्मलपावरहाउस।
४ चिमनी
५ चूल्हा, भाड़।
६ समय लेने वाली, विलम्ब वाली।

न्निषेधात्मकोपायाना प्रधानतया पूरकत्वेन प्राचीनभारते प्रचुरप्रचलितमग्निहो त्रादिहोमकर्मानुष्ठान प्रस्तूयते स्म। वायुमण्डलशोधनस्यास्मादुत्कृष्टतर साधन नैव वर्तते। अग्निहोत्रविधि प्राचीनोऽप्यत्यधिक वैज्ञानिकोऽस्ति। तस्मात् प्राचीन इत्युक्त्वा नैव त्याज्योऽयम्। प्रत्युत सर्वकारेण सर्वविध प्रोत्साहनमेतस्य प्रचाराय देयम्।

एव सामस्त्येनाय निष्कर्षोऽस्य विवेचनस्य यदस्मदेश पर्यावरणप्रदूषणसमस्याया समाधानमतिकठिन वर्तमानपरिस्थितिषु। एतदर्थ जनसामान्यस्यास्मिन् विषय जागरूकता सर्वाधिकमपेक्षितास्ति। अस्मिन् महत्वपूर्ण राष्ट्रियकार्य यावत् जनताया सहयोगा न मिलति, तावत् केवल सर्वकारस्य[१] प्रयत्नेन नाधिक किञ्चित् कर्तु शक्यते। समस्येयमतिजटिलेति यथा लोका जानीयुस्तथा तथा शिक्षण सङ्घटितरीत्या करणीयम्। अपि च, प्रदूषणावरोधपूर्वकतत्समाप्तिपक्षे लोकमत निर्मातव्य सज्जीकर्तव्य च।

□

---

१ सरकार शासन गवर्नमेन्ट।

# धर्मार्थकाममोक्षाणामारोग्यं मूलमुत्तमम्

भारतीयधर्मे सम्कृतौ च धर्मार्थकाममोक्षाणा पुरुषार्थ इति सञ्ज्ञा। पुरुषस्यार्द अर्थनीय अभिलषणीय पदार्थ इति पुरुषार्थ । भारतीयविचारकाणा मतेन मानवजीवनस्य लक्ष्यत्वेनैते चत्वार एवेष्टा । सर्वमेवेष्टमेतेषु चतुर्ष्वेव समाविष्टम्। अतस्तदेव मानवजीवन सार्थक भारतीयदृष्ट्या यस्मिन्नेकाधिकाना, प्रायेण तु सर्वेषा चतुर्णा प्राप्ति तदर्थ प्रयत्नो वा क्रियते। एतेषु धर्मार्थकामाना धर्ममोक्षयोश्च यथासम्भव समन्वयो भवति किन्तु काममोक्षयोरर्थमोक्षयोर्वा समन्वय सामान्यतो न भवति। वस्तुतस्तु स एवार्थ सार्थनाम्ना य धर्मार्थमपेक्ष्यते प्राप्यते च। एवमेव 'धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ' इति गीतोक्ते कामो तदैव कामो भवेद् यदा स धर्मविरुद्धो धर्मादपेतो न भवति, धर्मेपित एव भवति। अर्थश्च धर्मातिरिक्त कामसेवनेऽप्युपयोगी भवति। अनेन प्रकारेणैतेषा त्रयाणा समन्वय सामञ्जस्य वा सर्वथा कल्पयितु शक्यते। धर्मपूर्वक न्यायपूर्वक चार्जितेनार्थेन धर्मादनपेत काम सेवित्वा तृप्तमना पुरुषो मोक्ष प्रत्यभिमुखो भवितुमर्हति, नातृप्तकाम। एवमसाक्षाद्रूपेण परम्परया वा कामस्यापि मोक्षेण सह समन्वयो भवितु शक्नोत्येव कथञ्चित्।

एतेषा पुरुषार्थानामेकैकस्मै शरीरस्वास्थ्य शरीरारोग्यमपेक्षित भवति। न केवल शरीरस्वास्थ्यमेवापितु ततोऽप्यधिक मन स्वास्थ्यमपेक्षितम्। सत्य त्विदद् यद् द्वयो स्वास्थ्य परस्परापेक्षि। शरीरस्य स्वास्थ्याय मनस स्वास्थ्य, मनसश्च स्वास्थ्याय शरीरस्य स्वास्थ्यमपेक्षितम्। यदि शरीर व्याधिना पीडित तर्हि मनोऽप्याधिना पीडित भवत्येव। एवमेव मनसि चिन्ताचिते आधिसमाकुले च कथञ्चिच्छरीरमपि रुग्ण खिन्न च जायत एव। अतो यावच्छक्य द्वयोरेव नैरुज्य द्वयोरेवारोग्य सममेवार्जनीय सममेव च प्राप्तव्य भवति। एवमुभयो स्वास्थ्योपायाश्चिन्तनीयास्ते चोपाया अवधानपूर्वकमनुष्ठेया' अस्यान्यधिकापेक्षादृष्ट्यैव महाभारतेऽस्य गणना जीवलोकस्य षट्सुखेषु कृता—

"अर्थागमो नित्यमरोगिता च प्रिया च भार्या प्रियवादिनी च।
वश्यश्च पुत्रोऽर्थकरी च विद्या, षड् जीवलोकस्य सुखानि राजन् ॥"

विचारणीय त्वेतदिदानी यत् के उपाया शारीरिकमानसिकोभयस्वास्थ्यस्य ? एतस्मादपि पूर्वमिद विचारणीय सक्षेपेण यदाधयो व्याधयश्च कथ जायन्ते ? सूक्ष्मेक्षिकया विचारे कृते प्रतिभातीद यत् सद्वृत्त शील वा स्वास्थ्यस्य मूलम्। एतद्विपरीतश्चापचारोऽतिचारश्च रोग व्याधि चामन्त्रयत । एतेऽपचारातिचारादयो भगवता चरकेण स्वसहिताया सविस्तर चर्चिता नात्र साकल्येन वर्णयितु शक्यन्ते। गीतायामेतदभावे योगसिद्धि प्रदर्शयता भगवता श्रीकृष्णेन एते सङ्केतिता अप्रत्यक्षरूपेण–

"युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु ॥
युक्तस्वप्नावबोधस्य योगो भवति दुःखहा ॥"

अयुक्त आहारो विहारो जागरण सुप्तिरन्यकर्मसु चायुक्ताश्चेष्टा च अपचारादय, एते च स्वास्थ्य घ्नन्तीति भगवद्वचसस्तात्पर्यम्। तर्हि नैरुज्याय आरोग्याय वा एते सर्वथा परिहर्तव्या । नाधिक भुञ्जीत । अर्धमुदरमन्नेन, चतुर्थं च जलेन पूरयेत् । अवशिष्ट चतुर्थ भाग रिक्तमेव धारयेत् येनानायासेन श्वासप्रश्वासवायुक्रिया भवेत्। भोजनमपि कीदृश कुर्यादित्यस्मिन् विषये प्रसङ्गतं कविपुङ्गवेन वाल्मीकिनैवमुक्तम्–'तदन्नमेव भोक्तव्य जीर्यति यदनामयम्'। अर्थात् सुपाच्यमेव भोजन कुर्यादरोगकरम्। अजीर्ण तु भोजन विषमेव। एवमेव नाधिक जागृयान्नाधिक वा स्वप्यात्। अपेक्षित[१] सम्यक्स्वापो वपुष परमारोग्याय (काव्यमीमासा)। खेदजनकेऽत्यधिकपरिश्रमे कृते शरीरापेक्षादृष्ट्या किञ्चिदधिककालिकोऽपि स्वापो नापचारो नियमोल्लङ्घन वा। नियमेनानुदिन श्रमाचरणेन स्वास्थ्यलाभो मन स्फूर्तिश्च जायते तस्मात् श्रमकादाचित्क परिहरेत्, केवल शरीरमान्द्ये[२] श्रम न कुर्यात्।

किन्तु एतेभ्य सर्वेभ्योऽपचारेभ्य कामासक्त्या कृतमत्यधिक मैथुनादिक सर्वानपचारानतिशेते। अतएव भगवता श्रीकृष्णेनाय कामस्त्रिषु नरकद्वारेष्वेकतम कथित–
"त्रिविध नरकस्येद द्वार नाशनमात्मन । काम क्रोधस्तथा लोभस्तस्मादेतत् त्रय त्यजेत् ॥"
इति। भगवदुक्त्येममात्मनो नाशान मत्वा सर्वथा परिवर्जयेत्। एव सद्वृत्तमाचरन्, सौशील्य भजमान, सदाचार चाश्रयमाण पुरुषो भगवत्कृपया अनामयोऽरोग एव वा

१ जरूरत भर।
२ शिथिलता, बीमारी।

भवति। भगवत्कृपा तु मनुष्यप्रयत्नसाफल्याय सर्वदैवापेक्ष्यते, तस्माद् भगवत समाराधन सर्वोत्कृष्ट सर्वोत्तमश्चाचार इति निश्चिनुयात्। तदेव सर्वेषामाधिव्याधीना विनाशकम्। 'ईश्वरप्रणिधानाद्वा' इतीदृश सूत्र विरच्य महर्षि पतञ्जलिर्वृत्तिनिरोधपूर्वक चित्तनिरोधसंसिद्ध्यर्थमुत्तममुपाय प्रोक्तवानिदमीश्वरोपासन प्रणिधानरूपम्।

एतेभ्योऽवरोपाया स्वास्थ्यलाभस्य नेके। यथा व्यायाम, कन्दुकादिक्रीडा, प्रातर्भ्रमणम्, प्राणायामादयश्च। व्यायामस्तु स्वास्थ्यकृतेऽनुत्तमोपाय। अनुदिनमस्य सेवनेन अपूर्वस्वास्थ्यलाभ। अनेन मनसि अपूर्वोत्साह, शरीरे चानुत्तमया स्फूर्त्या सह प्रकृष्ट बलमुत्पद्यते। गामा राममूर्तिप्रभृतयोऽस्यैव प्रभावेण अपरिमित शारीरिकबलमवापुराधुनिके काले। धावन, कूर्दन, तरण, प्रात साय भ्रमण, मल्लयुद्धम्, अन्यविधानि च शारीरिकश्रमसाधनानि व्यायामस्यानेके प्रकारा सन्ति। कन्दुकादिभि क्रीडन शारीरिकश्रमस्यात्यन्तरोचक रुचिकर स्वास्थ्यवर्धक च साधनम्। प्राणायामस्तु पुनरत्यधिक प्रभविष्णु साधन न केवल शारीरिकस्वास्थ्यबलस्फूर्त्यादिरपितु मनसश्चाञ्चल्यापाकरणद्वारेण मनोबलस्यापि। अतएव मनुना 'प्राणायामैर्दहेद् दोषान्' (मनु ६/७२) इत्याद्युक्तम्। मनस रागादिदोषान् प्राणायामैर्दहन्नाशयेदिति मनोर्वचसस्तात्पर्यम्। एव मनसश्चाञ्चल्योत्पादकाना रागादिदोषाणामपनयने मनस स्थैर्योत्पादने च प्राणायामस्योपयोगित्व सुस्पष्टम्। अतो विज्ञस्य कस्यापि योगनिष्णातस्य गुरोर्निर्देशेन प्राणायाम-प्रक्रिया शिक्षेत। अस्यानुष्ठानेन द्विगुणितो लाभ, शारीरिकस्वास्थ्य मनस्वास्थ्य च। मन-स्वास्थ्येन च पूर्वोक्तमीश्वरप्रणिधान सर्वार्थसाधक सुखेन सेत्स्यति। समासेन पुरुषार्थचतुष्टयमूलभूतस्यारोग्यस्योपलब्धये इयमेव साधनसम्पद्॥

इद तावद् विशेषतोऽवधेयमत्र यत् पूर्वोक्तस्य समस्तप्रकारकस्य व्यायामस्य कृते, प्राणायामस्य कृते च पर्यावरण पूर्णतया प्रदूषणरहित स्वच्छ च भवेत्। दूषितपर्यावरणे कृतो व्यायाम शारीरिकश्रमादिर्वा यथेष्टलाभकरो न भवति। प्रत्युत दूषितवायौ स्थाने श्वासग्रहणेन हानिरेव भवति। अतो यस्मिन् स्थाने वायुशोधका पत्रपुष्पादिसम्पन्ना लतावृक्षादय प्राचुर्येण वर्तन्ते, यत्र प्रकृति स्व-सुरम्योपादानसमन्विता भवेत्, यत्र न वायुर्न वा जलादिक दूषित भवेत्, यत्र च कोलाहलाभावो वायुश्च स्वच्छोऽनिरुद्धगतिश्च भवेत् तस्मिन्नेव स्थाने उपवनादिके उद्यानादिके वा व्यायाम प्राणायामो वा कर्तव्य। दौर्भाग्येण साम्प्रतमेतादृशस्य पर्यावरणस्य स्थानस्य वा क्रमशोऽभावो न्यूनतैव वा

जायते। अनुदिनमविवेकपूर्णवृक्षादिच्छेदेन महोद्योगप्रसारेण चास्मद्राष्ट्रियाणा स्वास्थ्य सशये पतित सङ्कटापन्न च जातम्। अतोऽस्य रक्षणार्थ पर्यावरणस्य सरक्षण सर्वथा विधेय राज्यसर्वकारेण सर्वेश्च राष्ट्रियै। पर्यावरणस्य सरक्षणेन च सर्वेषा राष्ट्रियाणा स्वास्थ्यस्य रक्षण सुकर भविष्यति। एव पर्यावरणस्य सरक्षण सर्वप्रथमाऽपेक्षाऽद्यतनजीवनस्य।

❑

# वर्षर्तुः

ग्रीष्मस्य ललाटन्तपमातपं शमयन्, जाज्वल्यमानरज-प्रसरमुपशमयन्, वसनीभवन्तं पर्वतकुलम् उद्दामदावाग्निविधुराणि काननानि च समाश्वासयन्, निदाघदाहदग्धान् पशुपक्षिणोऽन्याश्च स्थावरजङ्गमान् सकलान् मृतकल्पान् जीवान् स्वकीयाभिरमृतायमानाभिर्वारिधाराभिरुज्जीवयश्च जलदपटलरमणीयो वर्षाकालः समागतः। गिरिसन्निभैर्मेघैर्जलसम्भृतैः संवृतं नीलं नभः कीदृक् मनोहरं प्रतिभाति। सलिलातिभारं समुद्वहन्तो वारिधरा महीधराणां महत्सु शृङ्गेषु रूढा विश्रम्य विश्रम्येव इतस्ततः प्रयाणं कुर्वन्तो दृश्यन्ते। क्षणेनैव स्थूलास्थूला वर्षधारा अभीक्ष्णशो मुञ्चन्त एते बलाहकाः सर्वामिलामिमां जलौघैः प्लावयन्ति येन जलनिमग्ना भूः सर्वत्र समैव दृश्यन्ते न पुनः नतोन्नता। सत्यमेव सर्वथाऽविर्भूतप्रकाशस्य शब्दब्रह्मणि जागरितस्य भगवतो वाल्मीकेरेतद्वचो "नवमासधृतं गर्भं भास्करस्य गभस्तिभिः। पीत्वा रसं समुद्राणां द्यौः प्रसूते रसायनम्॥" इति। कथमन्यथा रसायनस्य प्रयोगेणैव सम्भावि तत्फलमस्मिन् काले दृश्येत ? तथा हि—क्वचित् शुष्कसरोदरीशायिनो[1] चिरेण निर्जीवकल्पा निद्रां गता भेकवृन्दा दरीगतवर्षावारिभिरुज्जीविताः सहसा ततो निर्गता हर्षध्वनिभिः कर्णान् प्रपूरयन्ति। क्वचिन्नववारिपरिप्लुतानि वनानि नवजातहरितिमसुषमां बिभ्रन्ति[2] विभान्ति। क्वचिन्मेघाभिकामा बलाकपङ्क्तयः परिसम्पतन्त्यः सम्मोदिता भान्ति रुचिराम्बरस्य वानवधूनां पौण्डरीकमाला इव। क्वचित् वर्षोदकाप्यायितेषु शाद्वलेषु वनप्रान्तेषु च बर्हिणः प्रवृत्तनृत्योत्सवा दृश्यन्ते, क्वचित् शुष्कप्राया विगलितपर्णाः सर्जकदम्बार्जुनकर्णिकारकोविदारादयो वृक्षाः प्रभूतं प्रफुल्ला स्वपुष्पसम्भारमिषेण स्वहृदयोल्लासमिव प्रकटयन्ति। नद्योऽपि स्वशुष्कशीर्णानि तटानि अपवाह्य सवेगं सरित्पतीनभिगन्तुं प्रवृत्ताः। किं बहुना, मधुवारिपूर्णा वनान्तभूमिरपि मत्तमयूराभिरतप्रनृत्तैरापानभूमिरिवाभाति। सकलापि भूमिः शुकप्रभेण नवशाद्वलेन

१ सूखे तालाबों के दररों या गड्ढों में लेटे हुये।
२ धारण करते हुए।

बालेन्द्रगोपान्तरचित्रितेन सुशोभिता सती गात्रसंपृक्तेन शुकप्रभेण लाक्षोक्षितकम्बलेन समलङ्कृता सुसज्जिता च नववधूरिव भाति।

सर्वथा सर्वसुखप्रदा सर्वाप्यायिनी च सुषमा वर्षर्तौ। अस्मिन् सुमनोहरे चेतश्चाञ्चल्यकरे ऋतौ भूमौ भूरिविलम्बिनो घना वर्षन्ति, पूर्वमवरुद्धप्रवाहा नद्यो वेगेन वहन्ति, मत्ता गजा स्वस्वप्रिया गर्जनैरनुप्रयान्तो नदन्ति शिखिन स्वबर्हपरिबर्हं प्रसार्य मुदा नृत्यन्ति, पूर्वं क्षुत्तृड्भ्या प्रभूत परिपीडिता प्लवङ्गमा इदानीं समाश्वास धारयन्ति। पुनरपि पीयूषवर्षी महर्षिर्वाल्मीकिरेवात्र स्मृतिपथमायाति, यस्य पदे पदे नृत्यन्तीव काव्यवाणी एकेनैव श्लोकेन एतत् सर्वमेकपदे एवाभिवक्ति—

"वहन्ति गर्जन्ति नदन्ति भान्ति ध्यायन्ति नृत्यन्ति समाश्वसन्ति।
नद्यो घना मत्तगजा वनान्ता प्रियाविहीना शिखिन प्लवङ्गाया॥"

एवमनेकगुणगणसमलङ्कृतस्यापि वर्षाकालस्यायमेको महान् दोषो यद् अभीक्ष्णवर्षोदकेन पृथिवी पङ्किला भवति, राजमार्गाश्च विक्षता सन्तो यानसम्पातायोग्या भवन्ति, एकपद्यश्च हरिततृणै समावृता काठिन्येनैव परिलक्ष्यन्ते, येन यानै पादैश्चापि जनसञ्चारो न भवति प्रायेण। प्रयत्नेन च भवति चेत् कथमपि, तर्हि खेदकर आयासकर कष्टबहुलश्च भवति। किन्तु दोषेऽप्यस्मिन्नेको गुणो लक्ष्यते, स चाय यत् यात्रायासाभावे इतस्तत परिधावनमकृत्वा गृहस्था अन्ये च जना सुखेन गृह एव निवसन्तोऽनेकान्यसम्पन्नानि कार्याणि सम्पादयितु क्षमा। परिव्राजका अप्यस्मिन् वर्षर्तौ परिव्रजनस्थगन कृत्वा चातुर्मास्य विदधति, निखिल च समय हरिस्मरणे तत्त्वज्ञानाभ्यासे शास्त्रोपदेशादिषु च यापयन्ति।

अन्यथापि ऋतुरय सर्वेषा नयनानन्दकरो महोत्सवश्च मनसो भवति। वर्षणसमारम्भसमकालमेव मुदितमनोभि कृषीवलै क्षेत्रकर्षण-बीजवपन शाल्यङ्कुरारोपणादिकृषिकर्मसम्पादनात् शीघ्र शस्याभिरामा वसुन्धरा सञ्जाता। सत्य, किं नामासाध्यमुद्योगिना कृते। अस्मिन् रमणीये काले दोलाक्रीडा बालकबालिकाना युवक्युवतीना च कृते समानरूपेण मनोरञ्जिका। एव सर्वलोकेभ्यो रोचते वर्षर्तुरयम्। सार्वदिक्कोऽयमुल्लास समुत्साहश्च सुष्ठु वर्णितो वाल्मीकिना स्वीये रामायणे—

"मत्ता गजेन्द्रा मुदिता गवेन्द्रा, वनेषु विक्रान्ततरा मृगेन्द्रा।
रम्या नगेन्द्रा निभृता नरेन्द्रा, प्रक्रीडितो वारिधरैः सुरेन्द्रः।"
"जाता वनान्ताः शिखिसुप्रनृत्ता, जाताः कदम्बाः सकदम्बशाखाः।
जाता वृषा गोषु समानकामा, जाता मही शस्यवनाभिरामा।"

एवं धन्योऽयमृतुः सर्वेषामुपकारकत्वात्, सर्वेषां सुखकरत्वादानन्दप्रदत्वाच्च॥

□

# शरदृतुः

वर्षर्ताराविलजलस्थानेऽनाविल प्रसन्न जल प्रभञ्जनस्थाने मृदुर्वायु, विच्छायचन्द्रस्य स्थाने विमलश्चन्द्र, मयूरकेकास्थाने हससारसाराव, नीलोत्पलदलश्यामैर्मेघै श्यामीकृताना दिशा स्थाने प्रकाशिता दिश, दीर्घगम्भीरनिर्घोषमेघाच्छन्नस्य नभस स्थाने मे घनिर्मुक्तमुन्मुक्त नभश्च वर्षान्तकाल शरदाख्य शसन्ति। आश्विनकार्तिकाख्यमासद्वयव्यापी ऋतुरयम्। हिंसार्थकशृधातोरदिप्रत्यये औणादिके कृते निष्पन्नोऽय शरदिति शब्द । शीर्यन्तेऽस्या पाकेनौषधय इति शरत्। शाल्यादयश्चौषधयो विपक्वा अस्मिन्नृतौ शीर्यन्ते यतस्ततोऽय शरदिति चरितार्थनामा ऋतुर्भवति।

न केवल शाल्यादय ओषधय एव शीर्यन्तेऽस्मिन् काले अपितु प्रवर्षणकालीनानि वस्त्वन्तराण्यप्यनेकानि नाश क्षय वा प्राप्नुवन्ति। तथा हि—सर्वप्रथम जलधरा लोक सुवृष्ट्या परितोष्य शुष्काणि नदीनदशतानि प्रपूर्य, दावाग्निदग्धानि वनानि पर्वताश्चाश्वास्येदानी शान्तवेगा प्रनष्टा। ततो नदीप्रस्रवणादीना, गतोत्सवाना बर्हिणा, प्लवङ्गमाना च रवा सम्प्रति सम्प्रनष्टा। ततश्च सर्जकदम्बार्जुनादीना पुष्पाणि प्रनष्टानि। एव शरदृतोरागमनसमकालमेव वर्षर्तुर्विरतसमस्तव्यापारोऽवसान गत।

का कथा शरत्कालीनाया अदृष्टपूर्वाया सुषमाया, या प्रसन्नतोयासु नदीषु, तारार्कनिशाकराणामुन्मुक्तप्रभासु, उत्तमवारणाना लीलासु, सप्तच्छदपादपाना प्रफुल्लशाखासु, हससारसानामारावेषु, विकचपुण्डरीकेन्दीवरादिभिरुपशोभितासु पद्मिनीषु, सूर्याग्रहस्तै[1] प्रतिबोधितेषु च पद्माकरेषु बहुधा विभक्ता शोभते। एवमनेकाश्रयसविभक्ता शरल्लक्ष्मीरनेकगुणा[2] सती अभ्युदयस्य परा कोटि गतेदानीम्। एव सत्यपि कमलिनीकुलवल्लभप्रभया प्रफुल्लेषु पद्माकरेषु स्थितेयमत्यधिक विभाति।

इदानीं नदीनदादिजलानि अनाविलत्वाद्विमलत्वाच्च सर्वथा सुप्रसन्नानि जातानि। भूमिरपि सूर्यातपेन नष्टपङ्का जाता। दिशश्चापि गतेषु मेघेषु प्रकाशमय्यो जाता

---

१ सूर्यकिरणों से।
२ कई गुना होकर।

नभश्चोन्मुक्तमेघत्वात् सुव्यक्त जातम्। वनान्तराण्यपि मनोज्ञगन्धमण्डितपुष्पाग्रभारा-वनताभि सुवर्णवर्णाभिरनल्पाभि शाखाभि समुद्योतितानीव प्रतिभान्ति। शरन्नदीना पुलिनानि समन्ततो हससारसचक्रवाकै कुररैश्चावकीर्णानि दृश्यन्ते, दृश्यन्ते च नदीकूलानि शरन्मारुतेन मृदुना मृदु व्याधूयमानैर्नवै कुसुमितकाशैरुपशोभितानि। वर्षाकालीनैर्महामेघै अभिवृष्टा अतश्च निर्मला गिरयश्चन्द्ररश्मिभिरनुलिप्ता इवाभान्ति। यावत् तदथ स्थिता प्रसन्नसलिला सलिलाशयाश्चक्रवाकगणैराकीर्णा कुररैश्च विनादिता विराजन्ते। एव शरद्वधू स्वकीयैरनेकविधैश्चाकचिक्यै सर्वान् जनान् चमत्कृतान् कुर्वती स्वमसाधारण सौन्दर्य प्रत्यनायासमेवाकर्षति।

शरच्चान्द्रिकायास्तत्स्नातरजन्याश्च मनोहारिण्या सुषमाया का कथा चर्चा वा क्रियेत ? ज्योत्स्नाशुकैस्सज्जिता शशाङ्कसौम्यवक्त्रा तारागणचारुनेत्रेय शारदीया रात्रि शुक्लाशुक्सवृताङ्गी सौम्यवदना सुलोचना नारीव विभाति। राति ददाति सुखमिति 'रात्रि', क्षणमुत्सव ददातीति 'क्षणदा', क्षपयति सर्वाश्चेष्टा इति 'क्षपा', रज्यन्ते कामुका अनयेति 'रजनी' इत्यादीनि निशानामानि शारदीयनिशाविषय एव विशेषत सर्वाधिक्येन च सार्थकानि। यतो हि एषा शारदी निशैव सर्वेभ्य सर्वाधिक सुख ददाति, सर्वविधाश्चेष्टा क्षपयन्ती स्वसुषमया सर्वाधिक सर्वेषा मनो रञ्जयन्ती नेत्रमनसोर्महोत्सव सञ्जाता।

एव सर्वविधसौन्दर्यसम्पदुपेतेय शरत् कविकुलगुरो कालिदासस्य कृते मनोज्ञा नववधूरिवाभाति—

"काशाशुका विकचपद्ममनोज्ञवक्त्रा
सोन्मादहसरवनूपुरनादरम्या ।
आपक्वशालिरुचिरा तनुगात्रयष्टि
प्राप्ता शरन्नववधूरिव रम्यरूपा॥" (ऋतु ३/१)

कस्य सहृदयस्य कृते नेय हृदयहारिणी, कस्य सरसमनस सुमनसोऽपि कृते नेय रसस्राविणी, कस्यान्वर्थनाम्न कवे कृते नेय सत्काव्यसृष्टिप्रेरिका ? वाल्मीकिव्यासकालिदासभारविभट्टिप्रभृतय सर्व एव कविपुङ्गवा इमामधिकृत्य सन्दर्भाणि विरचितवन्त। महाकविना भारविणा स्वकीये किरातार्जुनीयाख्ये महाकाव्ये सम्पूर्णेन

चतुर्थेन सर्गेण शरदश्छविर्वर्णिता। विहारभूमेरभिव्रज[1] सौत्सुक्यमावर्तमानाना धेनूनामतिस्वाभाविकमतश्च मनोज्ञ दृश्य दृक्पथमानीयताम्—

"विहारभूमेरभिघोषमुत्सुका शरीरजेभ्यश्च्युतयूथपङ्क्तय ।
असक्तमूधासि पय क्षरन्त्यमूरुपायनानीव नयन्ति धेनव"॥

धेनव स्वात्मजेभ्य स्ववत्सतरेभ्योऽसक्त निरन्तर पयो दुग्ध क्षरन्ति[2] ऊधासि आपीनानि[3] उपायनानीव नयन्ति। अपि च स्वरक्तचञ्चुषु कपिशवर्णा शालिशिखा बिभ्रती हरितवर्णा शुकावलिरिन्द्रधनुष शोभा बिभर्ति—

"मुखैरसौ विद्रुमभङ्गलोहितै
शिखा पिशङ्गी कलमस्य बिभ्रती।
शुकावलिर्व्यक्तशिरीषकोमला
धनु श्रिय गोत्रभिदो[4]ऽनुगच्छति॥"

महाकविना भट्टिनाऽपि स्वकीये रावणवधाख्ये महाकाव्ये द्वितीयसर्गे शरदो मनोहारि रूप प्रस्तुतम्। द्रष्टव्य तस्य रूपस्य रम्य चित्रमेकम्—

न तज्जल यन्न सुचारुपङ्कज
न पङ्कज तद् यदलीनषट्पदम्।
न षट्पदोऽसौ न जुगुञ्ज य कल
न गुञ्जित तन्न जहार यन्मन॥" इति।

धन्येय पृथिव्या जलस्य नभसो मनसश्च मालिन्यापहारिणी चारुचन्द्रिकया तापहारिणी लोकोल्लासप्रदायिनी च शरद्।

□

१ गोष्ठ (गायों के रहने का स्थान) की ओर।
२ चुआते या बहाते हुए (नपु ऊधासि का विशेषण)
३ थन
४ इन्द्र की

# वसन्तर्तुः

वसन्ति जना सुखेनास्मिन्निति वसन्ति सुखादयो गुणा अस्मिन्निति वार्थे वस्धातो झच्प्रत्यययोगे झच अन्तादेशे च वसन्त शब्द सिद्ध्यति। एतेनास्य ऋतो: सर्वप्राणिनां कृते सुखप्रदत्वमुत्कृष्टगुणशालित्व च प्रकटीभवति। वसन्तस्येयं लोकहितकारिताऽवश्यमेव जगद्गुरो शङ्कराचार्यस्यापि। मनसि प्राप्तपदा भवेत् कथमन्यथा सता साधूना सर्वोपकारकत्व वर्णयता तेन "शान्ता महान्तो निवसन्ति सन्तो वसन्तवल्लोकहित चरन्त" इत्यादिरूपेण सर्वहितकारित्वविषये वसन्त उपमानत्वेन वर्णितो भवेत् उपमान चोपमेयापेक्षयोत्कृष्टतर भवतीति सर्वेषा विदुषा विदितचरम्। एतेनोपमानभूतस्य वसन्तस्य विशिष्टा हितकारिता सुखकरता च प्रतीयते।

मधुमाधवौ वसन्त इत्युक्त्या वसन्तस्य चैत्रवैशाखाख्यमासद्वयव्यापित्वं ज्ञायते। मधुश्चैत्र, माधवो वैशाख। मधुमाधवव्यापी अय ऋतुरपि मधुरित्याख्यायते। किं मधुमासादारम्भादुताहो मधुप्रायिकत्वादथवा मधुवन्मधुरत्वादस्यैतन्नामेति न निश्चप्रचम्। एकाधिका सम्भावना भवितुमर्हन्ति। एव सत्यपि मधुमयत्व मधुत्वं वास्य न कथमपि प्रत्याख्यातु शक्यते। यतो हि 'पुष्पसमय' 'सुरभि'रित्यपर नामद्वयमस्य सम्भावनामेतां द्रढयति। सामान्यतस्तु सर्वेष्वपि ऋतुषु ततत्पुष्पाणि विकसन्ति तथापि एतदतिरिक्तस्य न कस्याप्यन्यस्य ऋतो: पुष्पसमय इति नाम भवति। तेनेद ज्ञायते यत् पुष्पाणामनेकेषामुद्भवो विशेषतोऽस्मिन्नेव ऋतौ भवति, यथा वाल्मीकिरामायणे लक्ष्मणं प्रति कृतया रामस्योक्त्याऽधोदत्तया सुस्पष्ट भवति—

पश्य रूपाणि सौमित्रे वनानां पुष्पशालिनाम्।
सृजतां पुष्पवर्षाणि वर्षं तोयमुचामिव॥
प्रस्तरेषु च रम्येषु विविधा काननद्रुमा।
वायुवेगप्रचलिता पुष्पैरवकिरन्ति गाम्॥
पतितै पतमानैश्च पादपस्थैश्च मारुत।
कुसुमै पश्य सौमित्रे ! क्रीडतीव समन्तत॥" इति।

मेघाना तोयवर्षमिव वृक्षाणा पुष्पवर्षम्, एव च मारुतस्य पतितै पतद्भि पादपस्थश्च पुष्पै क्रीडन वर्णयता वाल्मीकिना मधो[१] प्रभूतपुष्पसमृद्धि प्रकटिता। पुष्पाणा बाहुल्यात् पुष्परसस्य बाहुल्य, तस्माच्च मधुनो बाहुल्यमृतावस्मिन् सर्वथा सम्भवति। एव यदयमृतुर्मधुरित्याख्यायते, तत् सर्वथा साध्वेव।

कानि तानि पुष्पाणि यान्यस्मिन्नृतौ विकसन्ति ? असङ्ख्यान्येतानि न नाम भिर्गणयितु शक्यन्ते। तेषु कानिचित् प्रधानान्येवात्र चर्च्यन्ते। सर्वप्रथम समन्तत सुपुष्पिता कर्णिकारा स्वर्णाभूषणै सज्जिता धृतपीताम्बरा नरा इव प्रतिभान्ति। पुष्करिणीषु शुभगन्धीनि नलिनानि प्रफुल्लानि सर्वत्र स्वसुगन्ध विकिरन्ति। कामिनामत्यन्त शोकवर्धनोऽशोक स्वजघन्यकर्मणा स्वनामार्थं व्यभिचरति। पवनोत्क्षिप्तै स्वपुष्पस्तवकैरय कामिजनान् तर्जयन्निव स्थित। पवनोद्धूता पुष्पिता तिलकमञ्जरी षट्पदो मदोद्धता स्वप्रियामिव सहसाभ्येति। आम्रमञ्जर्योऽपि एन प्रभूत मदोन्मत्त कुर्वन्ति स्वोत्कृष्टसौरभेण। कुसुमशालिन एते आम्रवृक्षा विशेषत कोकिलानामाकर्षणकेन्द्राणि। आस्वादिताम्रमञ्जरीका कोकिला कषायितकण्ठा सन्त स्वकूजनेषु विश्वस्याखिलमाधुर्यं धारयन्त इव ऋतुराज वसन्त स्तुवन्त इव विराजन्ते। 'रसालास्तु रसालया' इति वक्तु सर्वथा शक्यते। पलाशा नास्मिन् विषये पृष्ठपदभाज। पल मासमश्नन्तीति पलाशा इति स्वनामार्थं स्वरक्तिम्ना चरितार्थयन्त, किञ्चित् शुकाश्चेति किंशुका इत्यपि स्वनाम तेनैव कारणेन सार्थक विदधतस्ते सकला दिशोऽनुरागरक्तिम्ना रञ्जयन्त इव प्रतिभान्ति। शाल्मल्योऽपि स्वरक्तपुष्पै एवमेव कुर्वत्यो दृश्यन्ते। समस्त परिवेश एव एभि पुष्पवृक्षैर्वसन्ते किमपि सौन्दर्यमदृष्टपूर्व, किमपि सौरभमननुभूतपूर्वं, कमपि वर्णसङ्करम्[२] अभिनव, कामपि मादकता सर्वातिशायिनी धत्ते। परिवेशेऽस्मिन् मालतीमल्लिकाकेतकीसिन्दुवारचम्पकनागकेसरमधूकवृक्षाणामपि महान् सहयोगो, येऽस्मिन् काले प्रफुल्ला स्वस्वपुष्पाणा विविधैर्वर्णै सुगन्धैर्मरन्दै सुरभितै परागैश्चोन्मादकमिम विदधति।

एतत् सर्वं दृष्टिगोचर कुर्वन्नेव कविकुलगुरु स्वकीये ऋतुसहारे वसन्तमृतु स्तुवन् एव वक्ति—

---

१ वसन्तस्य।

२ वर्णाना सङ्कर सम्मिश्रण मेलन वा।

"द्रुमाः सपुष्पाः सलिलं सपद्मं, स्त्रियः सकामाः पवनः सुगन्धिः ।
सुखाः प्रदोषा दिवसाश्च रम्याः, सर्वं प्रियं चारुतरे वसन्ते ॥" इति

स्वर्गीयरघुवंशमहाकाव्यस्य नवमे सर्गेऽस्य वसन्तस्यात्यन्तकाव्यात्मकं वर्णनं प्रस्तुतं कालिदासेन महाराजदशरथमृगयावर्णनप्रसङ्गे । तत्र विशेषतः वनस्थल्या वसन्तावतरणक्रमः, परभृतविरुतं, षट्पदादीनां गुञ्जारः, अशोकबकुलकिंशुककुरबकाणां पुष्पपल्लवादि, जलपक्षिणो हंसादयः, चन्दनसुरभिवाहो मलयानिलः—एतत् सर्वं सुचारुरूपेण वर्णितम् । द्वित्राण्येवोदाहरणानि पर्याप्तानि भवेयुः—

"कुसुमजन्म ततो नवपल्लवास्तदनु षट्पदकोकिलकूजितम् ।
इति यथाक्रममाविरभून्मधुर्द्रुमवतीमवतीर्य वनस्थलीम् ॥"
अभिययुः सरसो मधुसम्भृतां कमलिनीमलिनीरपतत्त्रिणः ।
ध्वजपटं मदनस्य धनुर्भृतश्छविकरं मुखचूर्णमृतुश्रियः ॥
कुसुमकेसररेणुमलिव्रजाः सपवनोपवनोत्थितमन्वयुः ।
त्यजत मानमलं बत विग्रहैर्न पुनरेति गतं चतुरं[1] वयः ।
परभृताभिरितीव निवेदिते स्मरमते[2] रमते स्म वधूजनः ॥" इति ।

ऋतूनां राज्ञो वसन्तस्य कविकुलगुरुकृतेयं मनसो मोहिनी वाचिकी सपर्या सर्वथा साध्वी समुचिता च । एवमन्यैरपि कविवरैरीदृशी सपर्याऽस्य विहितेत्यलमतिप्रसङ्गेन ।

□

---

१　चतुरमुपभोगक्षमम् ।
२　स्मरस्य कामस्य मतं स्मरमतम् कामाभिमतम् इत्यर्थः । मतमित्यत्र नपुंसके भावे क्तः । तस्मिन् ।

# धैर्यं हि महतां धनम्

धैर्यं हि नाम आपत्पयोधौ मग्नाना लोकाना पोत । धैर्यपोतेनापत्पयोधिं तर्तुं समर्था भवन्ति लोका । यथोक्त पञ्चतन्त्रे—

'त्याज्यं न धैर्यं विधुरेऽपि काले
धैर्यात् कदाचिद् गतिमाप्नुयात् स ।
जाते समुद्रेऽपि हि पोतभङ्गे
सायात्रिको वाञ्छति तर्तुमेव'॥ इति

साधारणजना विपद्ग्मा. सन्तो विक्षिप्ता विकला मूढचेतसश्च भवन्ति। किन्तु धैर्यधना हि साधवो भवन्ति, धैर्यं हि महता धनम्। विपत्तावेव, दु खकाले एव, नरस्य परीक्षा भवति। विपत्तौ चेत्पुरुषोऽनुद्विग्नो, बुद्धिश्च तस्य स्थिराऽविकृता च, न च कमपि विकारमनुभवति तस्य चित्त, तर्हि स एव धीर उच्यते। सुष्ठूक्त कालिदासेन कवि कुलगुरुणा स्वकीये कुमारसम्भवे—'विकारहेतौ सति विक्रियन्ते, येषा न चेतासि त एव धीरा' इति। सर्वथा हि विकारकारिणी विपत्ति सर्वसामान्याना जनानाम्। इय विकारहेतुर्येषा जनाना चेतासि न विकरोति, न क्षोभयति, नाकुलीकरोति, वस्तुतस्त एव महान्तोऽसाधारणा पुरुषा धीरा वक्तु योग्या। एतेषामेव स्थितप्रज्ञ इति सज्ञा कथिता भगवता श्रीकृष्णेन गीतायाम्—दु खेष्वनुद्विग्नमना सुखेषु विगतस्पृह। वीतरागभयक्रोध स्थित-धीर्मुनिरुच्यते॥' इति। दु खव्यतिरेकेण रागभयक्रोधादयोऽपि धियो विकारा। अत भगवता एतेऽप्यत्र सगृहीता। स्थितधी स्थितप्रज्ञो वा स एव पुरुष यस्य प्रज्ञा सर्वविकाररहिता निर्विकाराऽतश्च सर्वथा स्थिता प्रतिष्ठिता भवतीत्यभिप्राय। स्वप्रयत्नेषु दुर्दैवेन पौनपुन्येन वैफल्ये भजत्यपि धैर्यधना महान्तो न विषीदन्ति, न च स्वनिश्चितार्थाद्विरमन्ति। एतद्विपरीत क्षुद्रा पामरजनास्तु दुर्दैवहता विघ्नभयेन प्राय कार्यारम्भविषयेऽनुत्साहा मन्दोत्साहा वा दृश्यन्ते। कथमपि कृतोत्साहाश्च विघ्नविरता मध्य एव कार्यं परित्यजन्ति। किन्तूत्तमजना विघ्नै पुन पुनरपि प्रतिहन्यमाना. प्रारब्ध कार्यं

मध्ये नैव परित्यजन्ति अपितु धैर्यपूर्वकं तत् सम्पाद्यैव समाप्यैव विरतप्रयत्ना भवन्ति। साधूक्तम्– विघ्नैः पुनः पुनरपि प्रतिहन्यमानाः प्रारब्धमुत्तमजना न परित्यजन्तीति। एतादृशा धीरा एव वीरपुरुषाः। त एव सागरपर्यन्तम् प्रसृतां प्रथितां च सागराम्बरां विन्दन्ते। को न जानाति जनो जगत्यस्मिन् रघुरामादीनां सहस्रबाह्वर्जुन-पाण्डवार्जुनादीनां च लोकाधिकं चरितं, यैः सर्वा दिशः स्ववीर्येणमर्दिता विजिताश्च। नानाध्यं नाम किञ्चिज्जगत्यस्मिन्, यद् धीराः साधयितुं न प्रभवन्ति। न किमपि दुष्करं दुर्लभं वा, यद् धीरपुरुषाः कर्तुं लब्धुं किन्तु दुर्लभा एतादृशा जन्म, उक्तं हि–

> 'यस्य न विपदि विषादः
> सम्पदि हर्षो रणे न भीरुत्वम्।
> तं भुवनत्रयतिलकं
> जनयति जननी सुतं विरलम्॥ इति।

'धैर्यं हि महतां धनम्' इति गरीयसी उक्तिरन्यैरपि बहुभिः वचोभिः समर्थ्यते। सर्वजनहितमुपदिशता हितोपदेशकारेण महतां लक्षणेषु धैर्यं सर्वप्रथमं परिगणितम्–

> विपदि धैर्यमथाभ्युदये क्षमा
> सदसि वाक्पटुता युधि विक्रमः।
> यशसि चाभिरुचिर्व्यसनं श्रुतौ
> प्रकृतिसिद्धमिदं हि महात्मनाम्॥ इति।

खेदयास्तमययोरुभयोरपि कालयोः ताम्रवर्णान्वितम् एकरूपताम् अङ्गीकुर्वता सहस्रकृताऽपि पतनाभ्युदययोर्महतामेकरूपत्वं साम्यं वा वर्ण्यते–

> उदेति सविता ताम्रस्ताम्र एवास्तमेति च।
> सम्पत्तौ च विपत्तौ च, महतामेकरूपता॥ इति।

स्वराज्याभिषेकमङ्गलमध्य एव वनवासवार्ता श्रुत्वापि रघुवंशमणिः श्रीरामचन्द्रो विषादं न भेजे, व्याकुलमना न बभूव, मूढचेतस्त्वं न प्राप। अनेनास्यानुपम धैर्यशीलत्वं दृष्टिपथमायाति। धीरतायाः तस्य नास्ति तुला उपमा वा लोके। गोस्वामितुलसीदासेन स्वकीये रामायणे भगवतो रामस्येदृश्येव सुखदुःखयोरेकरूपताऽभिव्यञ्जना मुखश्रीश्चित्रिता–

'प्रसन्नतां या न गताभिषेकम्।
तथा न मम्लौ वनवासदुःखतः ॥ इति।

एभ्यः सर्वेभ्यः समर्थकवचनेभ्यः पूर्वतो विद्यमानं तद् मनुवचनं मौलिकं प्रामाणिकं च समर्थकं धैर्यस्य यद् धर्मस्य लक्षणरूपेण मनुस्मृतावागतम्—

'धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः।
धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम् ॥

इति। अत्र धर्मस्य दशतत्त्वेषु धैर्यार्थको धृतिशब्दः प्राथम्यं भजते येन तस्य प्राधान्यं सूच्यते। अस्मात् स्पष्टमेतत् तथ्यं यन्मनोर्दृष्ट्या धर्मस्य तत्वेषु यत् स्थानं धृतेर्धैर्यस्य वा वर्तते, न तदन्येषां नवानाम्।

तस्माद् धृतिरेव सर्वाभ्यो विपद्भ्यो विपन्नान् जनान् तारयितुं क्षमेति मनसि कृत्वा सैव सर्वथा समाश्रयणीया। सुखदुःखादीनां तु चक्रं सततं चलत्येव, कदापि सुखं कदापि च दुःखमायात्येव। यः सम्पदि सुखे च हर्षं, विपदि च विषादं परित्यज्य उभयावस्थयोर्धीरः सन् भगवत्परः स्वकार्यमेव कुरुते, प्रभ्वाश्रितः प्रयत्नमेव सततमाश्रयते, स नियतमेव क्रमेण विपज्जलधिं धृतिपोतेन तर्तुं समर्थो भवति। यतो हि धृतिरेव सर्वेषां प्रयत्नानां मूलम्, समस्तानां समुद्योगानां निदानम्।अधीरमनसा विपत्तीर्निवारयितुम् न कोऽपि प्रयत्नः समुद्योगो वा साधयितुं शक्यते। तस्माद् धैर्यमेव सर्वथा समाश्रयणीयं भवति सर्वेषां कृते, येन विना नरोऽद्वितीयोऽसहायो वा भवति। केन नरो सद्वितीयो भवतीत्येव यक्षेण पृष्टो धर्मराजो युधिष्ठिरः उत्तररूपेण 'धर्मेण' इति प्रत्याह। विदितचरमेवैतत् तथ्यं सर्वेषां विदुषाम्।

# परोपकाराय सतां विभूतयः

सतां साधूनां सज्जनानां वा विभूतयः परेषामुपकारायैव भवन्ति, अनर्घ्याधिगतान्यपि तेषां सर्वाः सम्पत्तयो निःस्वार्थभावेन परार्थमेवोपयुज्यन्ते इत्यस्याः सूक्तेरभिप्रायः। अस्य तथ्यस्य निदर्शनानि एतस्याः पूर्वभागगतासु तिसृषु पङ्क्तिषु दत्तानि। तामिस्त्विह सम्पूर्णः श्लोक ईदृशोऽस्ति—

> पिबन्ति नद्यः स्वयमेव नाम्भः, स्वयं न खादन्ति फलानि वृक्षाः।
>
> नादन्ति सस्यं खलु वारिवाहाः, परोपकाराय सतां विभूतयः॥

इति। दृष्टिपथमानीतायां प्रकृतौ नदीवृक्षवारिवाहानां परोपकारकार्याणि कवेः पुरः सद्य एवोपतिष्ठन्ते। पुण्यसरितां शिशिरमधुरं पयस्ताभिः स्वयं न पीयतेऽपितु तपनोष्मतप्तैः भृशं पिपासुभिः प्राणिभिरेव। पादपाः स्वयमेव सुमधुराणि स्वफलानि नैव खादन्ति, अपितु मनुष्यपशुपक्षिण एव। एवमेव जलदानेन सस्यानि पोषयन्तो वर्धयन्तश्च वारिभारवहनक्लान्ता वारिवाहाः स्वयमेव तानि नादन्ति अपितु क्षुत्क्षामकण्ठा बुभुक्षिता मनुष्यपशुपक्षिण एव। एतस्माज्ज्ञायते यदचेतसामपि विभूतयो निःस्वार्थभावेन परार्थमेव भवन्ति। किम्पुनः सचेतसां मतिमतां मनुष्याणाम्। कविकुलगुरोः कालिदासस्य यक्षोऽपि इदमेव तथ्यं मेघस्य पुरः स्थापयन् स्वसाहाय्याय स्वार्तिप्रशमनाय च तमेवमभ्यर्थयते—'आपन्नार्तिप्रशमनफलाः प्रायशो ह्युत्तमानाम्' इति। ये उत्तमपुरुषाः, ये महात्मानः, सन्तः तेषां विभूतीनामधिकांशो दुःखिनामार्तिप्रशमनायैवोपयुज्यते॥

किमत्र महात्मत्वं मतिमत्त्वं वेत्यस्य प्रश्नस्योत्तररूपेण वक्तुमिदं शक्यते यद् जन्मवतां जीवितं नाम जगत्यस्मिन् चतुःपञ्चषाण्यहानीति विचारणा मतिमत्त्वस्यैव लक्षणं, तदनन्तरं तस्मादेव कारणात् पलायेव चिरेण क्रियमाणः परेषां सेवा उपकारो वाऽवश्यमेव महात्मत्वमेव सूचयति उपकर्तुः। कियत् समीचीनं सुन्दरं च कथितं कल्हणेनास्मिन् विषये स्वकीयकृतौ राजतरङ्गिण्याम्—

> 'अयमवसर उपकृतये, प्रकृतिचला यावदस्ति सम्पदियम्।
>
> विपदि सदाऽभ्युदयिन्याः पुनरुपकर्तुं कुतोऽवसरः॥'

अतएव क्षेमेन्द्रेणाप्युक्तम्--

'परोपकारशून्यस्य धिङ् मनुष्यस्य जीवितम्।
जीवन्तु पशवो येषां चर्माप्युपकरिष्यति॥'

इति।श्रीमद्भागवतेऽपि अस्य प्रबलं समर्थनं लभ्यते। तस्य दशमस्कन्धे आगतः एकः ईदृशः प्रसङ्गो यदेकदा भगवान् देवकीनन्दनो गोपैः परिवृतः सहाग्रजो गाश्चारयन् वृन्दावनाद् दूरं गतो तिग्मे निदाघार्कातपे स्वाभिः शीतलच्छायाभिरातपत्रायितान्[1] द्रुमान् वीक्ष्य व्रजवासिनो गोपानेवमाह--

"पश्यैतान् महाभागान् परार्थैकान्तजीवितान्।
वातवर्षातपहिमान् सहन्तो वारयन्ति नः॥
अहो एषां वरं जन्म सर्वप्राण्युपजीवनम्।
सुजनस्येव येषां वै विमुखा यान्ति नार्थिनः॥
पत्र-पुष्प-फल-च्छाया-मूल-वल्कल-दारुभिः।
गन्धनिर्यासभस्मास्थितोक्मैः कामान् वितन्वते॥
एतावज्जन्मसाफल्यं देहिनामिह देहिषु।
प्राणैरर्थैर्धिया वाचा श्रेय एवाचरेत् सदा॥

इति। अस्मिन् सन्दर्भे वृक्षाणां परेषां निःस्वार्थोपकारस्य सेवायाश्च कीदृग् मनोहरं कियदुत्कृष्टं च वर्णनं भगवता कृष्णेन कृतम्। भगवद्वचोऽनुसारमेते वृक्षाः परार्थैकान्तजीविताः, अतश्चैते महाभागाः सन्ति। एते स्वयं वातवर्षातपहिमान् सहमाना अस्मत् तान् निवारयन्ति स्वाभिः शीतलच्छायाभिः। छायादानातिरिक्तं ते पत्र पुष्प-फलमूलगन्धनिर्यासत्वग्दार्वादीन् बहूनन्यानप्युपयोगिपदार्थान् अस्मभ्यं निर्मूल्यमेव प्रयच्छन्ति। अहो सर्वप्राण्युपजीवनमेषामेव जन्म वरम्, येषां पार्श्वाद् अर्थिनो याचका विमुखा नैव यान्ति। एवमेव समेषां प्राणिनां विशेषतस्तु सचेतसां मनुष्याख्यप्राणिनामेतावदेव जन्मसाफल्यं यद् वाचा बुद्ध्या वित्तैः प्राणैश्चापि प्राणिनां सदा श्रेय एवाचरेदिति। उपकारविषये वेदसम्मितानि उपदेशवचांसि भगवतो वासुदेवस्य, यानि जीवन-साफल्येप्सुभिः सर्वैरेव श्रेयस्कामैः पुरुषैः सर्वथा सर्वदा चानुष्ठेयानि।

---

१ आतपात् त्रायन्ते इति आतपत्राणि छत्राणि, तानीवाचरन्तीति आतपत्रायन्ते, क्त्।

एतादृशान्येव वचनानि वाल्मीकिरामायणे सुग्रीवस्यापि, यानि स सीताविचय-प्रसङ्गे उत्तरदिशं प्रतिष्ठमानं वानरयूथपं शतबलिं प्रत्युक्तवान्—

"कृतं हि प्रियमस्माकं राघवेण महात्मना।
तस्य चेत् प्रतिकारोऽस्ति सफलं जीवितं भवेत्।
अर्थिनः कार्यनिर्वृत्तिमकर्तुरपि यश्चरेत्।
तस्य स्यात् सफलं जन्म किमुनः पूर्वकारिणः।"
(किष्किन्धा. ४३/ ६, ७)

आदिकवेर्भगवतो वाल्मीकेर्निश्चितं मतमेतद्यत् स्वोपकारमकर्तुरपि अर्थिनः कार्यं सम्पाद्य जन्म सफलं क्रियेत। येन पुनः पूर्वं स्वोपकारः कृतस्तस्यार्थिनस्तु प्रत्युपकारकार्यमवश्यमेव कुर्यादिति तथ्यकथनं नापेक्षते। अस्मिन्नेव प्राणिनः सर्वविधं हितं निहितम्।

ये सन्तः, ये महात्मानो मनीषिणस्तेषां तु जीवनं परार्थमेव भवति। ये परार्थभवकाः[1], ये परभृतो[2], वस्तुवस्त एव सन्तः। करुणापराः सन्तस्तु स्वभावत एव परोपकारनिरताः अनभ्यर्थिता एव परहितेषु परायणा भवन्ति। अतएव मतिमता भर्तृहरिणा सतामयमेव गुणो विशेषतः कीर्तितः—

"मनसि वचसि काये पुण्यपीयूषपूर्णा-
स्त्रिभुवनमुपकारश्रेणिभिः प्रीणयन्तः।
परगुणपरमाणून् पर्वतीकृत्य नित्यं
निजहृदि विकसन्तः सन्ति सन्तः कियन्तः॥"

इति। मनुष्याणां प्रथममध्यमाधमाख्यासु तिसृषु कोटिषु प्रथमा भवमानास्त एवोक्ता भर्तृहरिणा, ये स्वार्थं परित्यज्य परार्थघटकाः परकार्यसाधकास्ते च सत्पुरुषाः—

'एके सत्पुरुषाः परार्थघटकाः स्वार्थं परित्यज्य ये' इत्यादि। अन्येऽपि मनीषिणो भगवत्कृष्णद्वैपायनस्य सर्वाणि पुराणान्यवगाह्य तेषामिममेव सारं निष्कर्षं वा समुद्घोषितवन्तः—

१ परार्थं भवो जन्म येषां ते।
२ परान् बिभर्तीति परभृत (भृधातु+क्विप् कर्तरि)

'अष्टादश-पुराणेषु व्यासस्य वचनद्वयम्।
परोपकार पुण्याय पापाय परपीडनम्'॥

अर्थात् पुण्यस्य साधनेषु परोपकार एव सर्वोत्तम। दधीचिशिविकर्णादीना महापुरुषाणा नामानि भारतीयैतिह्येऽमराणि यै परार्थं क्रमेण स्वास्थीनि स्वशरीर स्वप्राणभूते कुण्डले च सहर्षं दत्तानि। सत्यमेवोक्त 'परोपकाराय सता विभूतय' इति।

# अविवेकः परमापदां पदम्

सवर्थाऽवितथा सूक्तिरिय महाकवेर्भारवे किरातार्जुनीयाख्ये महाकाव्ये प्राप्यते। कृष्णावच प्रेरितेन भीमेन कौरवै सह युद्धाय पुन पुन प्रेरितस्य युधिष्ठिरस्य त प्रत्येव सारगर्भिता सूक्तिर्या साकल्येनेदृशी—

'सहसा विदधीत न क्रियामविवेक. परमापदा पदम्।
वृणते हि विमृश्यकारिण गुणलुब्धा. स्वयमेव सम्पद.॥'

युधिष्ठिरस्य कथनस्य तात्पर्यमिदमेव सक्षेपेण यदविवेकोऽविमृश्यकारित्वमापद पर पदम्। अतोऽविमृश्य फलाफले, अविचार्य च साफल्यवैफल्ये न कदापि सहसैव किमपि कार्य कुर्यात्। सहसा कृत कार्य न केवल न स्वेष्टसाधकमपितु अनिष्टमनेकविधमामन्त्रयते। सम्पत्तयस्तु विमृश्यकारिणा विमर्शगुणैराकृष्टास्तानेव भजन्ते न पुनरविवेकिन.।

विच् पार्थक्यार्थो धातुस्तस्माद् भावार्थे घञ्प्रत्यये कृते विवेकशब्द. सिध्यति सदसद्विवेचनम् इष्टानिष्टपार्थक्यज्ञान, श्रेयप्रेयसोश्च विभाजनमेवास्यार्थ। ये विवेकयुक्तास्त एव पण्डिता। यतो हि सदसद्विवेकिनी बुद्धिरेव पण्डा, सा सञ्जाताऽस्येति पण्डित। गुणवदगुणवद्वा कार्य कुर्वता पण्डितेनादावेव तस्य परिणामोऽवश्यमेव यत्नपूर्वकमवधारणीय। न पुनरेव कृत चेत्, वेगेनैवानुष्ठित चेत् किमपि कार्य, तर्हि तस्य दुष्परिणामोऽवश्यम्भावी स च हृदये निखात शल्यमिवाजीवन हृदय पीडयति चित्त दुनोति, मानस क्लिश्नाति। अतएव स्वकीये नीतिशतके भर्तृहरिणोक्त यत्

'गुणवदगुणवद्वा कुर्वता कार्यमादौ
परिणतिरवधार्या यत्नत पण्डितेन।
अतिरभसकृताना कर्मणामाविपत्ते-
र्भवति हृदयदाही शल्यतुल्यो विपाक.॥'

अथ सदसद्विवेक. इयमिष्टानिष्टविभेदबुद्धि केषुचित्तु जन्मत एव पौर्वभविकसत्संस्काराद् भवति। तेष्वय विवेक. स्वल्पेनैवाभ्यासेनायासेन च तथैव प्रबुद्धो भवति यथा सुप्तो जन लघुनैवायासेन। यथा निसर्गत. प्रतिबिम्बनशक्तिसम्पन्ने मणौ अल्पमात्रयैव शाणोल्लीढे सति सा शक्ति प्रोद्दीप्ता भवति, तथैव पुरुषे निसर्गतो विद्यमाना विवेकशक्तिरपि। किन्तु पूर्वकालेष्वकृतपुण्यकर्मणा जनाना विषये नैतत् सत्यम्। सस्कारदौर्बल्यात् तद्गुरुजनैस्तेषु तस्याधानाय सतत सुमहान् प्रयास करणीयो भवति। येषा बालकाना मातापित्रादयो गुरुजना दीनातिदीनदशाया वर्तमाना किञ्चिदधिक कर्तुमसमर्थास्तान् प्रति सर्वकारस्य विशेषोत्तरदायित्व वर्तते। महाराजदिलीपस्य गुणान् कीर्तयन् कविकुलगुरु स्वकीये रघुवशे एतस्य साधु वर्णन करोति—

'प्रजाना विनयाधानाद्रक्षणाद् भरणादपि।
स पिता पितरस्तासा केवल जन्महेतव ॥'

इति। एव नैसर्गिकाहार्यरूपेण विवेकसहिता सर्व एव सस्कारा द्विविधा। विवेकस्य कृते पुन सविशेषो यत्न करणीयो यतो हि स एव मूल सर्वासा सिद्धीनाम्। यत् किमपि कार्यं विवेकपूर्व देशकालोपकरणादेरौचित्यानौचित्य विचार्य, शक्यत्वाशक्यत्वादि च तस्य सुष्ठु चिन्तयित्वा क्रियते तदेव सिध्यति, स्थायि च सत्फल ददाति। उक्त हितोपदेशे—'सुचिन्त्य चोक्त सुविचार्य यत् कृत, सुदीर्घकालेऽपि न याति विक्रियाम्' इति।

यद्यपि कालिदासेन विशेषरूपेण प्राचीननवीनकाव्यान्यतरग्रहणविषये तयोर्गुणदोषपरीक्षणस्यापेक्षाऽभिहिता तथापीद परीक्षण समानरूपेण जीवनस्य प्रत्येक-महत्त्वपूर्णकार्यस्यारम्भावसरे कर्तव्यमिति हि नीति। यो हि एवविधपरीक्षणेऽसमर्थ स एव मूढ सदसद्विवेकशून्यश्च, स एव परेषा प्रत्ययेन बुद्ध्या वा कार्यं करोति। यतस्तस्य पार्श्वे कस्यापि कार्यस्य करणीयत्वाकरणीयत्वविषये विवेकाभावेन कोऽपि प्रत्ययो निश्चयो वा न भवति। उक्त हि कालिदासेन मालविकाग्निमित्रे—

पुराणमित्येव न साधु सर्वं, न चापि काव्य नवमित्यवद्यम्।
सन्त परीक्ष्यान्यतरद् भजन्ते, मूढ परप्रत्ययनेयबुद्धि ॥ इति।

राजनीतिरहस्यानि तु परमनिगूढानि मतिमतामपि कृते, किमुत मन्दबुद्धीनाम्। अतो यो नृपतिर्मतिमान् विवेकी वा नैव भवति, स केन साधनेनोपायेन वा तानि रहस्यान्यवगाढु -

ज्ञातु च समर्थो भवेत्। असमर्थश्चावश्यमेव पराजितो भवेत्, कालान्तरे स्वराज्यश्रिय च परैरपहारयेत्। किन्तु यदि स विवेकेन बुद्ध्या च सम्पन्नस्तर्हि स स्वशत्रोरशुभाविन भूयासमात्मनश्च चिरभाविनमल्पीयास क्षययोग विचार्य उपेक्षते। एतद्विपरीत शत्रोश्चिरभाविनमल्पीयासमात्मनश्चाचिरभाविनमहीयास क्षययोग विगणय्य स प्रतीकार करोति। दुर्योधन स्वाविवेकेनैतत् सर्वमविचार्यैव स्वनिर्बन्धकारणादेव पाण्डवेभ्य सूच्यग्रमात्रामपि पृथ्वीं दातु नाङ्गीचकार। एतस्य परिणामस्वरूप महाभारताख्य तुमुल युद्ध कौरवपाण्डवयोर्मध्ये बभूव, यस्मिन् स सकुटुम्ब सपरिजन ससैन्यश्च हत। यदि स हठ परित्यज्य विवेकेन कार्यमकरिष्यत्तर्हि दुरन्तोऽय नाभविष्यत्। प्रत्युत सुखेनाय परिहार्योऽभविष्यत्। किन्तु दुर्योधनस्याविवेकोद्भवाद्हठादेव स परिहारो न हि समभवत्।

यत्तु पूर्वं श्रेयप्रेयसोर्विभाजन सदसतो पार्थक्य वार्तो विवेकशब्दस्य कृतस्तद्वैपरीत्येन चाविवेकस्यापार्थक्यरूपोऽर्थ, तयोर्लाभालाभौ एतत्पर्यन्त व्यावहारिकजीवने एव प्रदर्शितौ। इदानीं पारमार्थिकजीवनेऽपि अविवेकान्महती विनष्टिर्विवेकाच्च मानवजीवनप्राप्तेर्वास्तविकी पारमार्थिकी वा महत्युपलब्धि सक्षेपेणैव प्रस्तूयते। प्रेतमनुष्यस्य सत्ताऽसत्ताविषयिणीं विचिकित्सा[१] दूरीकर्तु प्रयतमानो मृत्युदेवो यमो जगति अपृथग्रूपेण विद्यमानयो श्रेयप्रेयसोर्मध्ये विवेकसम्पादनस्य पार्थक्यसाधनस्य वाऽपेक्षां कथयति, उद्घोषयति च यच्छ्रेयसो ग्रहीतैव पुरुषो धीरो बुद्धिमान् यतो हि तस्यैव ग्रहीतु कल्याण भवति। एतद्विपरीत य प्रेयो वृणीते स तु मन्द पुरुषार्थात् हीयते भ्रश्यति। यमस्य वचन कठश्रुतौ ईदृश वर्तते—

अन्यच्छ्रेयोऽन्यदुतैव प्रेयस्ते उभे नानार्थे पुरुषं सिनीत।
तयो श्रेय आददानस्य साधु भवति हीयतेऽर्थाद्य उ प्रेयो वृणीते॥
श्रेयश्च प्रेयश्च मनुष्यमेतस्तौ सम्परीत्य विविनक्ति धीर।
श्रेयो हि धीरोऽभिप्रेयसो वृणीते, प्रेयो मन्दो योगक्षेमाद् वृणीते॥
(कठ १, २, १, २)

---

१ विचिकित्सा सशय।

अत्र 'सम्परीत्य विविनक्ति' इति वचन सर्वथा महत्वपूर्णं, यतोहि अत्रैव सम्यग्विचारस्य विवेकहेतुत्वेनोद्घाटन भवति। 'सम्परीत्य' अर्थात् सम्यग्रूपेण परित सर्वत इत्वा गत्वा प्रविश्य पुर. उपस्थितस्य पदार्थस्य विषये सर्वप्रकारेण विचार्य श्रेय प्रेयसी विविनक्ति, तयोर्विवेक पार्थक्य वा करोतीत्यर्थ । सम्यग्विचारेण विना विवेको नैव जायते नैव उत्पद्यते इति यमस्य वचनस्य तात्पर्यम्। यस्य कस्यापि विषयस्य ग्रहणाद्वरणाद्वा पूर्वं स्वरूपतस्तत्त्वतो वा तस्य विचार. कर्तव्य. किमय कल्याणकर. उताहो नेति। यो हि विषय प्रेयान् इन्द्रियेभ्यो रुचिकरस्तदपेक्षया यो हि श्रेयान् आत्मकल्याणकर. स एव वरणीय इति हि निर्गलितार्थ । अयमेव सिद्धान्त । अयमेव साधनमार्गो यमनुसृत्य साधको विवेकवैराग्यमुमुक्षादिभि क्रमेण सम्पन्न सन् नित्य स्वरूपमात्माख्य वेदान्तादिभ्य श्रुत्वा, अनुकूलतर्कैर्मत्वा, निदिध्यास्य चान्ततो विजानाति, विज्ञाय च वीतशोको भवति। यथोक्तं बहुश –'तमेव विदित्वाऽतिमृत्युमेति नान्य. पन्था विद्यतेऽयनाय' 'अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति' इत्यादि। ईदृश हि माहात्म्य विचारजन्यस्य विवेकस्य। ईदृश हि बल विचारमूलकस्य विवेकस्य। परमपुरुषार्थस्य मोक्षाख्यस्यायमेव विवेक परम्परया कारण भवति। अनेनैव मानवजीवनस्य साफल्यम्। अस्य चाभाव एवाविवेको यो हि मानवस्य सर्वतोऽधिकमनिष्ट विदधाति, अन्ततश्च पुरुषार्थात् त भ्रंशयति। तस्मादविवेक परित्यज्य विवेक एव श्रेयोऽर्थिभिराश्रयणीयो नाविवेक तज्जन्यो निर्बन्धश्च।[१]

---

१ हठ, दुराग्रह।

# सन्तोष एव पुरुषस्य परं निधानम्

प्रस्तुता उक्तिर्महामतेर्भर्तृहरे श्लोकस्यैकस्यान्तिमश्चरण, स चेदृश—

"सर्पा पिबन्ति पवन न च दुर्बलास्ते
शुष्कैस्तृणैर्वनगजा बलिनो भवन्ति।
वन्यै फलैर्मुनिवरा क्षपयन्ति काल
सन्तोष एव पुरुषस्य पर निधानम्॥"

अन्तिमे चरणे सन्तोषस्य महत्त्व प्रतिपादित, शेषभागे तस्य निदर्शनानि पुर स्थापितानि। एतैरिद तथ्य प्राकाश्य नीत यन्न केवलमुदात्तवृत्तय प्रबुद्धचेतना मानवा एवापितु अहिगजादयोऽवरा अपि प्राणिन सन्तोषमनुतिष्ठन्तो दृश्यन्ते।

यद्यपि प्रवृत्ति-निवृत्त्युभयमार्गानुसारिणामेव कृते सन्तोष सुखावहो मनशान्ति-हेतुत्वात्, तथापि निवृत्तिपरायणाना कृतेऽस्यात्यन्तिक महत्त्व, महानुपयोगश्च। अष्टाङ्गयोग विवृण्वता महर्षिणा पतञ्जलिना यमानन्तर नियमाख्यस्य द्वितीयाङ्गस्य पञ्चप्रकारेषु द्वितीय सन्तोष एवोक्त—'शौचसन्तोषतप स्वाध्यायेश्वरप्रणिधानानि नियमा' (योग. २/ ३२) इति। सूत्रस्यास्य भाष्य कुर्वता श्रीव्यासदेवेन 'सन्तोष सन्निहित-साधनादधिकस्यानुपादित्सा' इत्युक्तम्। अस्यायमर्थ—स्वपार्श्वे यत् किञ्चित् साधन सन्निहित तस्मादधिकमुपादातुमनिच्छा, तेनैव यथा-कथञ्चिन्निर्वाह एव सन्तोषोऽभिधीयते। प्रकारान्तरेणायमेवार्थ ईश्वर-गीतायामेवमुक्त—'यदृच्छालाभतो नित्यमल पुसा भवेदिति। ता निष्टामृषय प्राहु सन्तोष सुखलक्षणम्॥' इति। यदृच्छातो दैववशात् प्रारब्धाद्वा यत् किञ्चिल्लभ्यते तेनैव याऽलम्बुद्धिर्य पर्याप्तताभावो भवति, *स एव सन्तोष स च सुखात्मको भाव इत्यस्य तात्पर्यम्। सन्तोषादनुत्तम सुख लभ्यत* इति तथ्य योगसूत्रकारेण सूत्रान्तरे एवमुक्तमस्ति—'सन्तोषादनुत्तमसुखलाभ' (योग. २/ ४२) इति। अविद्यमानमुत्तम यस्मात् तदनुत्तममुत्कृष्टतममित्यर्थ। सन्तोषाद् अर्थात् तृष्णा-क्षयाज्जायमानस्य सुखस्योत्कृष्टतमता प्रतिपादयता योगभाष्यकारेण 'यच्च कामसुख

लोके यच्च दिव्य महत् सुखम्। तृष्णा क्षयसुखस्यैते नार्हत षोडशी कलाम्॥" इत्यय श्लोक उद्धृत। सत्यमेवैतद् यत् न किमप्यैहिकमामुष्मिक वा सुख सन्तोषजन्यस्य सुखस्य षोडशाशसममपि भवितुमर्हति।

वास्तविकसुखस्य कृते तृष्णाया क्षय सर्वथाऽपेक्षित। अतएवाजीवम रतिसुखमन्यच्चापि बहुविध सुख भुक्त्वापि वार्धकेऽप्यनिवृत्ततृष्णेन महाराजेन ययातिना पुनरपि रतिसुखमुपभोक्तु स्वयौवनप्रदानाय ज्यैष्ठ्य-क्रमेण यदुस्तत्प्रत्याख्यातेन च तेनान्ये त्रयोऽपि पुत्रा क्रमेण प्रार्थिता। तैरपि प्रत्याख्यातोऽन्तत कनिष्ठ पञ्चम पूरु, दानवराजस्य वृषपर्वण कन्याया स्वपत्नीभूताया शर्मिष्ठाया जात, तदर्थमनुरोध। पूरुस्तस्य याचना स्वीकुर्वन्नात्मन पूर्णं यौवन पित्रे ययातये ददौ। तेन च यौवनेन वर्षसहस्र रत्यादिसुख महाराजो ययातिर्बुभुजे, तथापि तृप्ति नाधिजगाम, अतृप्त एव ववृते। अतृप्तो ययातिर्यदाह वर्षसहस्रभोगानन्तर, तत् सर्वथा स्मरणीय वास्तविकसुखमीप्सुभि सर्वैरेव सत्पुरुषै। तदेवम्—'या दुस्त्यजा दुर्मतिभिर्या न जीर्यति जीर्यताम्। ता तृष्णा सन्त्यजन् प्राज्ञ सुखेनैवाभिपूर्यते॥' इति। काव्यलोक-रविणा भारविणा स्वकिरातार्जुनीयस्यैकादशे स्वर्गे स्थिते इन्द्रार्जनयो सवादे इदृश एव भावोऽभिव्यञ्जित— "श्वस्त्वया सुखसवित्ति स्मरणीयाऽधुनातनी। इति स्वप्नोपमान् मत्वा कामान् मा गास्तदङ्गताम्॥" इति। अधुनातनी अर्थात् साम्प्रत वर्तमाना सुखसवित्ति अर्थात् कामादिभोगजन्यसुखस्यानुभूति श्व एव स्मरणीयाऽतीतकाला भविष्यतीति कामान् भोगान् जागतिकान् स्वप्नोपमान् क्षणदृष्टनष्टान् मत्वा, तदङ्गता तत्साधनता मा गा तत्साधनमात्र न भव। जीवने कामोपभोग एव न सर्वं, काम-जयस्तृष्णा-क्षयएव सर्वथा स्पृहणीयो येन वास्तविक नित्य सुख लभ्येतेति तात्पर्यमस्य श्लोकस्य।

एतावतैव विवेचनेन प्रवृत्तिमार्गिणा लौकिकानामपि कृते सुखलाभार्थं तृष्णा-परित्यागस्यापेक्षा प्रतिपादिता भवति। वस्तुतस्तु तृष्णा-पिशाच्या अनुन्मुक्त कोऽपि सातिशय सुख प्राप्तु नार्हति। अनयैव तृष्णया लोभादिना चाकुलात्मानोऽतृप्तमनसो जना नैकानपराधान् अहर्निश कुर्वन्ति। सापराधवृत्तिका एव जना समाजस्य शान्ति भङ्क्त्वा सर्वत्राशान्तेरेव साम्राज्य स्थापयन्ति प्रसारयन्ति च। एतादृशा अवाञ्छनीया जना समाजस्य राष्ट्रस्य च शत्रव। एभ्यो मुक्त सन्नेव समाज शान्ति सुख चानुभवितुमर्हति। अतो लौकिकाना प्रवृत्तिपरायणानामपि कृते तृष्णाया सावधित्व

सान्त्वं वा सर्वथाऽपेक्षितम्। केवलं दाने तपसि पाठने च सन्तोषो न कर्तव्य इति नयज्ञाः कथयन्ति। तेषामयं दृढो विचारो यत् 'सन्तोषस्त्रिषु कर्तव्यः स्वदारे भोजने धने। त्रिषु चैव न कर्तव्यो दाने तपसि पाठने॥' इति। वस्तुतस्त्रयाणां त्रयाणां यौ द्वौ वर्गौ कृतौ सन्तोषासन्तोष विषयत्वेन, तावुपलक्षणमात्रे। कथनस्याभिप्रायः एतन्मात्रो यदशुभकर्मणां सम्पादने एवालम्बुद्धिः वाञ्छनीया, न पुनः शुभकर्मणाम्। तेषु तु असन्तोष एव कल्याणावहः।

किन्तु सर्वथा दुष्करस्तृष्णात्यागः। दुस्त्यजा हि तृष्णा कामदि-विषयिणी, यतः सर्वमेव जीर्यति किन्तु 'तृष्णैका तरुणायते'। कथं सा जीर्णाभवेद् यतो हि 'तृणीकरोति तृष्णैका निमिषेण नरोत्तमान्'। सत्यमेतत्, तथापि सत्सङ्गेन सच्छिक्षया सदभ्यासेन च शनैः शनैरियं तृष्णा क्षीयमाणा वशे कर्तुं शक्या कथञ्चित्। करणीयं चेद सर्वेषामेव कृते, येन व्यक्तिः समाजश्चापि शान्त्या सुखेन च जीवनमतिवाहयताम्।

तृष्णाक्षयेण शनैः यदृच्छालाभसन्तुष्टता मनसि पदं लभते, येनान्यानपेक्षा जायते। तदा भगवदेकपरायणः परलोकापेक्षया स्थिरेण चित्तेन भगवन्तमेव केवलं चिन्तयेद्। यथोक्तमनेकशः 'अन्ते नारायणस्मृतिरिति'। श्रीमद्भागवते भगवतो नारायणस्य गुणश्रवणं, कीर्तनमनुक्षणं स्मरणं च शुकदेवेन अभयमिच्छते परीक्षिताय परमकर्तव्यत्वेन विहितम्—

"तस्मादेकेन मनसा भगवान् सात्वतां पतिः।
श्रोतव्यः कीर्तितव्यश्च स्मर्तव्यश्चेच्छताऽभयम्॥"

इति। भागवतस्य पारमार्थ्येनिदमेवोपदिष्टं भगवता वैय्यासिकिना शुकदेवेन राजर्षये विष्णुराताय परीक्षिताय द्वादशस्कन्धे कथाया अन्ते—

"कथा इमास्ते कथिता महीयसां, विताय लोकेषु यशः परेयुषाम्।
विज्ञानवैराग्य-विवक्षया विभो! वचो-विभूतीर्न तु पारमार्थ्यम्॥
यस्तूत्तमश्लोक-गुणानुवादः सङ्गीयतेऽभीक्ष्णममङ्गलघ्नः।
तमेव नित्यं शृणुयादभीक्ष्णं, कृष्णेऽमलां भक्तिमभीप्समानः॥"
—भाग XII. ३।१४, १५

एव सन्तोष-कल्पतरु सन्तुष्टस्य तृष्णा-पिशाच्यारुन्मुक्तस्य भोगगर्धाया परिमुक्तस्य च साधुपुरुषस्य कृते श्रवण-कीर्तन-स्मरणादिना साधनेन भक्तिज्ञानादिद्वारा समाधि-सत्फल फलति, जीवन च मङ्गलमय धन्य च करोतीति सर्वथा स एव निखिलकल्याणमूलत्वात् सर्वैरेव श्रेयस्कामैराश्रयणीय ।

□

# न हि सत्यात् परो धर्मः

मानवजातेस्तदुद्धारार्थं धर्ममुपदिशता भगवता मनुना 'धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः। धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम्' इत्युक्तम्। विचारवीथिमानीतेऽस्मिन् लक्षणे सुस्पष्टमेतत् तथ्यं यद् धर्मस्य मूलभूतान्याधारभूतानि वा दश तत्त्वानि सन्ति येषु सत्यमप्येकम्। मनुनाऽन्यत्र व्याहृताभिरुक्तिभिरिदं सत्यं दशस्वपि प्राधान्यं लभते, यथा—

> 'यमो वैवस्वतो देवो यस्तवैष हृदि स्थितः।
> तेन चेदविवादस्ते मा गङ्गां मा कुरून् गमः॥
> यस्य विद्वान् हि वदतः क्षेत्रज्ञो नाभिशङ्कते।
> तस्मान्न देवाः श्रेयांसं लोकेऽन्यं पुरुषं विदुः॥'—मनु ८।९२, ९६

इति। सर्वसंयमनाद् यमः परमात्मा, योऽन्तर्यामिरूपेण हृदि तिष्ठति। यदि यथार्थकथने तेन सहाविवादस्तर्हि तेन यथार्थकथनेन सत्याभिधानेनैव मानवः कृतकृत्यो निष्पापस्तथा च पापनिर्हरणार्थं धर्मक्षेत्रकुरुक्षेत्रगमनस्य गङ्गास्नानस्य वा न काप्यपेक्षा। सर्वमाभ्यन्तरिकं जानन् क्षेत्रज्ञोऽन्तर्यामी सत्यं वदतः यस्य पुरुषस्य नाभिशङ्कते सत्यमेव वदत्ययमनृतमिति, तस्मादन्यं श्रेयांसं प्रशस्ततरं पुरुषं देवा न जानन्ति। दशस्वङ्गेषु सत्यस्यैव प्राधान्यमितीदं तथ्यं 'सत्यं ज्ञानमनन्तं ब्रह्म' इति श्रुतिरपि समर्थयति। ब्रह्मैवास्य जगतः परमार्थस्तदेव निखिलब्रह्माण्टनिकायस्य परमतत्त्वं केन्द्रबिन्दुरिति वा। इममेव केन्द्रबिन्दुं परितः समस्तेयं सृष्टिः परिभ्रमति घूर्णते वा। तद् ब्रह्म श्रुतिवचनानुसारं सत्यरूपं सत्यात्मकं वा वर्तते। एवं दशसु धर्माङ्गेषु सत्यस्य प्राधान्यं सुस्पष्टम्। सन्तो महान्तः इदमेव 'सत्यं' स्वमुखादुच्चारयन्ति, इदमेव स्ववचसा प्रकाशयन्ति, इदमेव सूक्ष्मेक्षिकया प्रकटयन्ति। यत इदं सद्भ्यः प्रकटितं भवति, तस्मात् सद्भ्यः प्रभवतीति सत्यम् (सत् + यत्) इति चरितार्थं नामास्य भवति।

अन्यथापि तथ्यमेतत् पुर. स्फुरति। सर्वेषु चतुर्युगेषु आदिम कृतयुग वर्तते। सर्वेषु चतुर्षु अस्यैव प्राधान्यमित्यनेकश. श्रुतिस्मृतिपुराणादिषु वर्णितम्। भागवते प्रथमस्कन्धे धर्मपरीक्षितयो सवादे 'धर्मस्य तप शौच दया सत्यमिति चतुष्पादा, कलौ स्मयसङ्गमदैस्त्रिभिरधर्मांशैस्तप शौचदयाख्यास्त्रय पादा पूर्वम् भग्ना इदानीमवशिष्ट सत्याख्य चतुर्थमपि पादमनृतेनैधितोऽधर्मरूप कलिर्महीतुमिच्छतीत्यादि' वस्तुजात विवृत वर्तते—

'तप. शौचं दया सत्यमिति पादा. प्रकीर्तिता.।
अधर्मांशैस्त्रयो भग्ना. स्मयसङ्गमदैस्तव॥
इदानीं धर्म ! पादस्ते सत्य निर्वर्तयेद्यत.।
त जिघृक्षत्यधर्मोऽयमनृतेनैधित. कलि.॥'

इति। एतेन सवादेन स्पष्टमेतद् यत् सत्याख्य धर्माङ्ग त्रिष्वपि युगेष्वक्षतमासीत्, असत्येनैधिते कलियुगे एवैतस्य क्षय प्रारब्ध। एतमवरोद्धुमेव विष्णुरातो राजर्षि परीक्षित कलेर्निग्रह कृतवान् यस्य प्रतिशोध कलिरनन्तकाले चकार। एव सत्य त्रिष्वपि युगेषु समृद्धमासीत्। किन्तु प्रथमयुगस्य कृतातिरिक्तसत्यापरनामता तस्मिन् युगेऽस्य प्राधान्ये सबल सुदृढ च प्रमाणम्। एव 'न हि सत्यात् परो धर्म इत्युक्ति सर्वथा प्रमाणोपेता। सम्भवत. इदमेव कारण येन श्रौत 'सत्यमेव जयते' इतीद वाक्यमस्माक केन्द्रीयशासनस्य मुद्रासु प्रतिमानवाक्यरूपेणाङ्कितम्। चित्रकूटे भरतस्य प्रत्यावर्तननिवेदन प्रत्याचक्षाणो विपदा विरामो लोकाभिरामो रामस्त प्रत्येवमूचे—

'सत्यमेवेश्वरो लोको सत्ये धर्म सदाश्रित.।
सत्यमूलानि सर्वाणि सत्यान्नास्ति पर पदम्॥'

इति। वस्तुत. सत्ये एवाय लोक प्रतिष्ठित। अयोध्या प्रतिनिवृत्तऽसत्यप्रतिज्ञो भविष्यामीति मनसि कृत्वैव स भरतस्य निवेदन प्रत्याचख्यौ।

सत्यमेव जयते नानृतमिति मुण्डकवाक्य पूर्वमुद्धृतम्। ततोऽग्रेऽपि उक्तम्—'सत्येन पन्था विततो देवयान.' इति। अन्यत्रापि मुण्डके एवमुक्तम्—'सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यग्ज्ञानेन ब्रह्मचर्येण नित्यम्। इति। अन्येष्वप्युपनिषत्सु सत्यस्य महिमा प्रायश: वर्णित.। यथा प्रश्नोपनिषद षष्ठे प्रश्न सत्यस्य महत्त्वम् प्रतिपादितम्। तत्रारम्भ

एव सुकेशाहिरण्यनाभयोश्चर्चा। अस्यामनृतकृतानिष्टवर्णनेन सत्यस्य महत्त्व व्यतिरेकमुखेन प्रकाशितमस्ति। भरद्वाजगोत्रीय सुकेशाभिधानमृषिम् परब्रह्मनिष्ठ हिरण्यनाभनामा कौसल्यो राजपुत्र परब्रह्मजिज्ञासया उपसन्न। स तमुपैत्यैव प्रश्न पप्रच्छ—'षोडशकल भारद्वाज ! पुरुष वेत्थ'। स तमब्रवीत्—'नाहमिम वेद। यद्यहमिममवेदिष, कथ ते नावक्ष्यमिति। समूलो वा एष परिशुष्यति योऽनृतमभिवदति। तस्मान्नार्हाम्यनृत वक्तुम्'। स तूष्णीं रथमारुह्य प्रवव्राज। अनेन ज्ञायते यत् तस्मिन् अतिप्राचीने काले जना सत्यमेव वदन्ति स्म, काम तेन सत्यभाषणेन स्वस्याल्पज्ञत्वमज्ञत्व वा प्रकटीभवेत्। तेऽनृताद् भृश भीता आसन्।

स्वयोगसूत्रेऽष्टाङ्गयोगस्य यमनामक प्रथमाङ्ग विवृण्वता महर्षिणा पतञ्जलिना द्वितीयभेदरूपेण सत्यस्यैव गणना कृता 'अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमा' इति। सत्याख्यस्य द्वितीययमस्य रहस्यमुद्घाटयता योगभाष्यकारेण व्यासदेवेनैवमुक्तम्—'सत्य यथार्थे वाङ्मनसे[1]। यथादृष्ट यथानुमित यथाश्रुतम् वाङ् मनश्च। परत्र स्वबोधसङ्क्रान्तये वागुक्ता, सा यदि न वञ्चिता भ्रान्ता वा प्रतिपत्तिवन्ध्या वा भवेदिति। एषा सर्वभूतोपकारार्थ प्रवृत्ता, न भूतोपघाताय। यदि चैवमप्यभिधीयमाना भूतोपघातपरैव स्यात् न सत्य भवेत् पापमेव भवेत्। तेन पुण्याभासेन पुण्यप्रतिरूपकेण कष्टतम प्राप्नुयात्। तस्मात् परीक्ष्य सर्वभूतहित सत्य ब्रूयात्' (योग २।३०) इति। अनेन सन्दर्भेण नैकानि तथ्यानि सत्यविषयकाणि विवृतानि। सर्वप्रथम तु इदमेव यत् सर्वथा वस्तुस्वरूपानुसारि 'मनो ऽर्थात् मनःकृतम् ज्ञानञ्च च 'वाक्' अर्थात् स्वबोधस्य ज्ञानस्य वा परत्र सङ्क्रान्तये प्रयुक्त वचन सत्यमित्यभिधीयते। द्वितीय त्विद यद् यदीद वचन परान् वञ्चयितु भ्रामयितु वा न प्रयुक्त, न चेद बोधसङ्क्रान्तावसमर्थ तदैवैतत् सत्य वचो, नान्यथा। तृतीय तथ्यमिद यदेवविषयमपि वचन यदि सर्वभूतहितयुक्तमेव न च भूतोपघाताय, तर्ह्येव तत् सत्य नान्यथा। भूतहिंसापरक सत्यवचन न पुण्यमपितु पुण्याभास एव पापमेव। तद्वक्तु कृते कष्टकारक नरकादिप्रापकम्। तस्मात् सर्वभूतहित परीक्ष्यैव हितकारक हिंसाद्यकारक वचो ब्रूयात्। अनेन भाष्येणेदमपि तथ्य सुस्पष्ट भवति यद् योगसूत्रकारेण सत्याख्यात् द्वितीययमात् पूर्वमेव प्रथमस्थानेऽहिंसाख्यस्य यमस्य ग्रहण स्थापन चाऽहिंसायुक्तस्यैव सर्वभूतहितसमन्वितस्यैव सत्यवचनस्य सत्यत्वेन ख्यापनदृष्ट्या कृतम्। एव योगसूत्र तद्भाष्ययोरनुसारेण सत्यस्य

१ वाक् च मनश्चेति वाङ्मनसे (द्वि. द्वन्द्व, समासान्तोऽच्प्रत्यय)

सत्यत्वमहिंसाश्रितमहिंसामूलकमस्ति। एव सत्यमहिंसाया पृथक् कर्तुं नैव शक्यते इति निष्कृष्टोऽर्थ, निर्गलितार्थ।

'सत्य ब्रूयात् प्रिय ब्रूयान्न ब्रूयात् सत्यमप्रियम्।' इति प्रसिद्ध मनुवचनमपीद तथ्य समर्थयति। भगवता श्रीकृष्णेनापि श्रीमद्भगवद्गीताया वाचिक तपो विवृण्वता प्रिय हितमेव च सत्य सहान्यै गृहीतम्— 'अनुद्वेगकर वाक्य सत्य प्रियहित च यत्। स्वाध्यायाभ्यसन चैव वाङ्मय तप उच्यते॥' (गीता १७।१५) इति। प्रियमेव सत्य 'सूनृतम्' उच्यते। सु इत्यनेन शोभित प्रिय वा व्यज्यते। ऋतमिति सत्यार्थकम्। सूनृता वाच प्रशसता भवभूतिना परोक्षत सत्यस्य प्रियकरत्वमेव विधीयते उत्तररामचरिते। तत्र तेनैव कथितम्—



'काम दुग्धे विप्रकर्षत्यलक्ष्मी कीर्तिं सूते दुष्कृत या हिनस्ति।
शुद्धा शान्ता मातर मङ्गलानां, धेनुं धीरा सूनृता वाचमाहु॥'

इति। सूनृता वाच 'धेनुम्' इत्युक्त्वा कविना तस्या हितकारित्वमेव प्रकटीकृतम्। 'मातर मङ्गलानाम्' इति वचनेन तदेव समर्थ्यते।

सत्यस्यापरिमित प्रभावो भवति। तस्मादेव महाभारते सत्यस्य महिमा एव गीयते—

'अश्वमेधसहस्र च सत्य च तुलया धृतम्।
अश्वमेधसहस्राद्धि सत्यमेव विशिष्यते॥'

इति। भागवतेऽपि अन्यै सह सत्यस्य माहात्म्य प्रतिपादितम्—

'गोभिर्वेदैश्च विप्रैश्च सतीभि सत्यवादिभि।
अलुब्धैर्दानशूरैश्च सप्तभिर्धार्यते मही॥'

यजुर्वेदेऽपि 'इदमहमनृतात् सत्यमुपैमि' (यजु. १।५) इत्युक्तम्। इक्ष्वाकुवशीयस्य महाराजहरिश्चन्द्रस्य सत्यपूत पावन चरित कस्य विदुषोऽविदितचर, य सत्यस्यैव कृतेऽपरिमिता यातनामाजीवन सेहे। महाराजो दशरथोऽपि स्वसत्यवचनस्य रक्षार्थमेव प्राणातिप्रियस्य रामस्य वनगमन स्वीचकार, तद्विरहव्यथामसह्या सोढुमक्षमश्चान्तत स्वप्राणान् दुस्त्यजानपि तत्याज। एव भारतीयैतिह्यादनेकान्याख्यानानि सत्यपालनस्य

निदर्शनरूपेणोद्धर्तुं शक्यन्ते किन्त्वनपेक्ष विस्तर लभेत निबन्धोऽयमिति मनसि
तस्माद्विरम्यते।

अत्र केचिदेव प्रत्यवतिष्ठन्ते—अनृतमेव व्यवहारनिर्वाह
जीविकोपार्जनोपयोगित्वाच्च सर्वथाश्रयणीयम्। वाणिज्यादिक तु सत्येन कथम
नैव शक्यते, तस्मिंस्तु अनृताश्रयग्रहणमनिवार्यं भवति। अनृताश्रयेणैव
धनसग्रहश्च सम्भवत.। लोकोऽप्येतस्मादेव कारणात् असत्यमनृत वाऽश्रयते
च भुञ्जानो दृश्यते। तस्मात् सुखसमृद्ध्यर्थमसत्यमाश्रयणीयमेवेति। वस्तुतस्तु म
तथ्योपेत यथार्थं वा। योऽपि जनो भौतिकसुखादिलिप्सयाऽन्धीकृतोऽनृत
धनमर्जयितु सङ्ग्रहीतु च, स किञ्चित्कालपर्यन्तमेवाभ्युदयमनुभूयाचिरादेव
पतितोऽपरिमित कष्टमनुभवति। दु खोदर्का[१] विपदन्ता हि सम्पदोऽनृताश्रयि
शाश्वत सिद्धान्त ज्ञात्वा श्रेयस्कामस्तमाद्विरमेत्। सम्पदा स्थैर्यं, विभूतीना स्थि
सत्यमार्गानुसरणेनैव सुशकम् इत्यल बहूक्त्वा।

□

# क्रियासिद्धिः सत्त्वे भवति महतां नोपकरणे

रवे रथस्यैकमेव चक्रम्, तस्य सारथिर्गरुडाग्रजोऽरुणोऽपि विकलचरण, तस्याध्वापि उदयाचलादारभ्यास्ताचलपर्यन्त प्रसृतत्वादतिदीर्घ । एव सत्यपि रविरपारस्य नभस पार प्रतिदिनमेव याति। अनेन सिध्यति यन्महता क्रियासिद्धिस्तेषा सत्त्वे साहसे तेजसि पराक्रमे चाश्रिता नोपकरणेषु बाह्येषु। सर्वोपकरणहीनोऽपि राम स्वसत्त्वेनैवापार पारावारमुत्तीर्य दशाननसदृशमरातिं सकुल सकुटुम्ब यमपुरी प्रेषयामास। स्वसहजसौजन्यवशाद् दिनत्रयमनुरुध्यमानोऽपि प्रियाविरहिणे आत्मने मार्गं दातुमनुनाथ्यमानोऽपि समुद्रो यदा रामस्याभ्यर्थनामुपेक्षितवान् तदा स स्वसत्त्वस्यैवाश्रय जग्राह। भगवत आदिकवेर्वाल्मीके स्फीतया वाचा विचित्रमेव चित्रित तत् सत्त्व रामायणे साकारमिव सञ्जातम्--

"चापमानय सौमित्रे । शराश्चाशीविषोपमान्।
समुद्र शोषयिष्यामि पद्भ्या यान्तु प्लवङ्गमा ॥
अथाक्षोभ्यमपि क्रुद्ध क्षोभयिष्यामि सागरम्।
वेलासु कृतमर्याद सहस्रोर्मिसमाकुलम्।
निर्मर्याद करिष्यामि सायकैर्वरुणालयम् ॥"
(वा रा ६ । २१ । २२ २४)

इति। विषमावस्थितेऽपि दैवे विरुद्धेऽपि विधौ रामो स्वसत्वाद् भ्रष्टो नैव बभूव। परिणामश्च तस्य भव्य एव बभूव। विषाक्तैराशीविषोपमै शरैर्विद्धो व्याप्तविषज्वालान्तर सजलचरो वारिधिर्भृश विकलो रामस्य शरणमाययौ। अन्ततस्तस्यानुमत्या नलनीलादिसाहाय्येन समुद्रोपरि सेतुर्बद्ध येन निखिलापि ऋक्षवानरसेना समुद्रमुत्तीर्याप्रतिमप्रतापस्य राक्षसराजस्य स्वर्णमयी लङ्कामभिययौ जिगाय च। सकल च राक्षसकुलमवधीत्। एतत् सर्व सत्त्वस्यैव माहात्म्य यस्योत्तम निदर्शन रामस्य सम्पूर्णमेव जीवनम्। रामस्यैवानुयायी भक्तशिरोमणिर्हनुमानपि ऋक्षराजेन जाम्बवता स्वाप्रतिमबलविषये स्मारित उद्बोधितश्च सत्त्वमेवाश्रित्य उत्प्लुत्य समुद्रमुततार सीतायाश्चान्वेषणे तत्परोऽन्ततोऽशोकवाटिकाया तच्छोधरूपे स्वप्रभुकार्ये साफल्य लेभे।

ध्रुवस्याख्यानं भारतीयेतिहासस्यात्यन्तगौरवशाली अध्यायो यमधीत्य कस्य भारतीयस्य रोमाञ्चो न भवेत्। तस्य स्वरूपे व्यक्तौ वाऽन्यायविरोधिन्यास्तस्या युद्धालुवृत्तेर्दर्शनं भवति तस्यास्तेजस्विताया साक्षात्कारो जायते या सृष्टेरादित एवास्मद्देशस्यामूल्यो निधि । अस्मादेव कारणात् ध्रुवस्याख्यानं भारतीययूना तद्बालकाना च मनस कृते विशेषरूपेण प्रेरणास्पदम्। स्वायम्भुवमनो पुत्रस्योत्तानपादस्य सुनीतिसुरुची इत्याख्ये द्वे जाये आस्ताम्। तयो सुरुचि राज्ञ प्रेयसी, न पुन सुनीति । तस्या एव पुत्रो ध्रुव आसीत्। एकदा सुरुचे पुत्रमुत्तमाख्यमङ्कमारोप्य लालयन् नृपतिरारुरुक्षन्त ध्रुव नाभ्यनन्दत्। तथा च चिकीर्षन्त सपत्न्या सुत ध्रुव राज्ञ शृण्वत एव अतिगर्विता सुरुचि सेर्ष्यमेवमाह—'वत्स । अन्यस्त्रीगर्भसम्भृतत्वान्न त्व नृपतेरङ्कमारोढुमर्हसि। दुर्लभार्थविषयकस्तव मनोरथो वस्तुतो मनोरथमात्रम्। यदि स्वमनोरथ वस्तुत्वेन परिणत द्रष्टुमिच्छसि तर्हि भगवन्त सर्वकामप्रपूरयितारमीश्वर तपसाऽराध्य तदनुग्रहेण मत्कुक्षि प्रविश। मत्पुत्ररूपेण चोत्पन्न सन् स्वमनोरथ प्रपूरय साधय च' इति। मातु सपत्न्या स्वविमातुर्दुरुक्तशल्येन निशितेन विद्धो दुर्वाक्सर्पिण्या दष्टो ध्रुवो दण्डहतोऽहिरिव रुषा श्वसन् सन्नवाच पितर हित्वा प्ररुदन् मातु सकाश जगाम। सा च सपत्न्या दुरुक्त पौरमुखान्निशम्य भृश विव्यथे, सान्त्ववचनैश्च पुत्र समाश्वासयन्ती एवमूचे—

> 'माऽमङ्गल तात ! परेषु मस्था भुङ्क्ते जनो यत् परदु खदस्तत् ॥
> आतिष्ठ तत् तात विमत्सरस्त्वमुक्त समात्रापि यदव्यलीकम्।[१]
> आराधयाधोक्षजपादपद्म यदीच्छसेऽध्यासनमुत्तमो यथा'
> (भाग ४।८।१७,१९)

मातुरीदृश सञ्जल्पितमाकर्ण्य तेजस्वी बालो ध्रुव आत्मनाऽऽत्मान नियम्य पितु पुरात् तत्क्षण निश्चक्राम। अहो ! तेजस्वित्व सत्त्ववत्त्व च मानभङ्गममृष्यतो मानिनो बालराजपुत्रस्य ध्रुवस्य, येनोत्प्रेरित सन् स सुकुमारोऽपि बाल्य एव पितर पितु राज्य तस्य राजपुरमन्यच्च राजपरिवर्हमशेषम्[२] एकपदे एव परित्यज्य भगवतो ब्रह्मपुत्रस्य नारदस्योपदेशेन सर्वेषा शरणभूतस्य भगवतोऽधोक्षजस्य हरेरभय शरण गतवान्। वन गतस्य तस्य सकाश न किमप्युपकरणमासीत्। सुदृढसङ्कल्पद्वितीय सत्त्वैकाश्रय उत्साह-सम्पन्न स तपस प्रथमे मासे कपित्थबदराशनो, द्वितीये शीर्णैस्तृणपर्णादिभि कृताहारस्तृतीयेऽब्भक्षश्चतुर्थे वायुभक्षो जितश्वासश्च, पञ्चमे ब्रह्म ध्यायन् अचल

१ मात्रा समा मातुर्वा समा ममाता, तया। यद् अव्यलीक निष्कपटमुक्त तत् त्व तात। आतिष्ठ अनुतिष्ठ कुर्वित्यर्थ ।
२ समस्त राजसी साज सामान।

थाणुरिव पदैकेन तस्थौ। सर्वतो मन आकृष्य हृदि भूतेन्द्रियाशय भगवन्त हरिं ध्यायन् ापर किञ्चिदद्राक्षीत्। तस्मिन् प्राण तद्द्वार च निरुध्यानन्यया धिया विश्वात्मान ध्यायति ति लोका निरुच्छ्वासनिपीडिता सञ्जाता येषा कष्ट निवारयितु प्रार्थितो हरिस्तपस ण्मासाभ्यन्तर एव तस्मै दर्शन दत्वा सर्वलोकनमस्कृतमृषिभ्य उपरि स्थित तद् भ्राजिष्णु द ददौ यद्गतो जनो नावर्तते।

भारतीयेतिहासस्य गौरवमयमेतदाख्यान येन सत्त्वस्योत्साहस्य सुदृढसङ्कल्पस्य च हिमा सर्वतोऽधिक सर्वबाह्योपकरणानामुपरि च प्रतिष्ठापित। एवमेव चान्यान्यपि हूनि आख्यानोपाख्यानानि सत्त्वमाहात्म्यप्रतिष्ठापकान्युपलभ्यन्तेऽस्मद्देशस्येतिहासपुरा-ादिषु काव्यादिषु च। अतो बाह्योपकरणाना चिन्ता विहायान्तःकरणबलस्यैव वृद्ध्यै न्ता कुर्यात्। आन्तरिकोपकरणानि सत्त्वसङ्कल्पादीनि एव सप्रयास वर्धयेत्। न कदापि नसत्त्वो निरुत्साहो भ्रष्टतेजा वा भवेत्। उत्कृष्टसत्त्वेनैव उद्रिक्ततेजसैव अन्यायस्य ीकारो विरोधो वा कर्तुं शक्यते। तेनैव सर्वा क्रिया सिध्यन्ति, सर्वाणि कार्याणि म्पद्यन्ते, सर्वे च मनोरथा परिपूर्णा भवन्ति। तस्मादन्यायस्य प्रतिकारार्थं स्वाभिमानस्य ार्थं स्वमनोरथस्य च सिद्ध्यर्थं सत्त्ववतैव भाव्य पुरुषेण, अन्यथा निस्सारत्वात् पदे दे तृणवत् [1]लघीयस्त्वमुपेक्षा चानुभूयेते तेन। यथोक्त किरातकारेणा—

"शक्तिवैकल्यनम्रस्य निस्सारत्वाल्लघीयस।

जन्मिनो मानहीनस्य तृणस्य च समागति ॥"– (११। ५९)

एव निष्कर्षरूपेण वक्त शक्यते यत् सत्त्ववानेव पुरुषो ध्रुव इव स्वीयेनामितसत्त्वेन गौर्येण च स्ववशयान् सारवत्तरान् गुरूश्च करोति, पुरुषरत्नत्वात् स्वजन्मना वसुध मन्वर्थां करोति, स्वशुभेण यशसा इन्दुमण्डलमपि ह्रेपयति।[3] धन्यतम एतादृशो ाहापुरुष।

□

लघुता, हल्कापन।
वसूनि रत्नानि धत्ते इति वसुधा।
लज्जित करते हैं [ह्री + णिच् = ह्री + पुक् + ह्री लट् प्र पु बहु]।

## कृतं मे दक्षिणे हस्ते जयो मे सव्य आहितः[१]

मानवजीवनस्यैकमतिगूढं रहस्यमुद्घाटयन्तीव श्रौती सूक्तिर्यथार्थमनुसियमाणा जीवनसाफल्यस्य मार्गं प्रशस्तं करोति। तच्च रहस्यमिदमेव यद् दक्षिणेन कर्मकुशलेन हस्तेन कर्माणि कुरु, वामे हस्ते प्रयोजनसिद्धिरूपो जयः स्वयमेवाहितो भविष्यति। कृतजययोः कर्मसिद्ध्योर्वा कारणकार्यरूपः सम्बन्ध इति तथ्यं यथाऽस्याः पङ्क्तौ ऐकान्तिकत्वेन निश्चितत्वेन चोन्मीलितं न तथा अन्यत्र। यथा कारणे सति तत्कार्यमवश्यम्भावि, तथैव कृते अर्थात् कर्मणि सति तत्फलं प्रयोजनसिद्धिरूपमवश्यम्भावि। सर्वा जागतिकसिद्धयः प्रयत्नेनैव, सततमभियोगेनैव, निरन्तरकृतेन समुद्योगेनैव प्राप्यन्ते। कथमन्यथा 'शरीरनिरपेक्षस्य दक्षस्य व्यवसायिनः। बुद्धिप्रारब्धकार्यस्य नास्ति किञ्चन दुष्करम्।' इत्यादिवचनं श्लिष्टं भवेत्। इदमेव तथ्यं व्यतिरेकमुखेनापि 'निरुत्साहस्य दीनस्य शोकपर्याकुलात्मनः। सर्वार्था व्यवसीदन्ति व्यसनं चाधिगगच्छति॥' इत्यत्रापि प्रकटितम्। तस्मादस्य तथ्यस्यापलापो न कथमपि कर्तुं शक्यते। अर्जुनं तपसे समुत्साहयन्त्या द्रौपद्या यत् 'निरुत्सुकानामभियोगभाजां समुत्सुकेवाङ्कमुपैति सिद्धिः।' (किरात. ३।४०) इत्युक्तं, तत् सर्वथा साधु। 'पूर्वमपि सतताभियोगेनैव त्वया सर्वेषुराजपुत्रेषु सर्वाधिकं निष्णातत्वं धनुर्विद्यायामवाप्तम्, इदानीमपि शत्रुजयकारणभूतं पाशुपतास्त्रमवाप्तुं स एव मनोभियोगः स एव समुद्योगोऽपेक्षितः' इति कृष्णावचोऽभिप्रायः। एवं चेद् 'कृतं मे दक्षिणे हस्ते जयो मे सव्य आहितः' इति श्रौतं वचः सार्वकालिकेभ्यः सार्वदेशिकेभ्यश्च मनुष्येभ्यः शाश्वतं सन्देशमिमं वहति—

'सुवर्णपुष्पितां पृथ्वीं विचिन्वन्ति नरास्त्रयः।

शूरश्च कृतविद्यश्च यश्च जानाति सेवितुम्॥' इति।

अस्यायमेवाभिप्रायो यच्छूरः कृतविद्यः सेवकः इत्येते त्रय एव तां पृथ्वीं विचेतुमन्वेष्टुं सफला भवन्ति यस्यां सुवर्णपुष्पाणि जायन्ते। अर्थात् एते त्रय एव प्रभूतं धनमुपार्जयन्ति स्वशौर्येण, स्वविद्यया स्वसेवया च, न पुनरलसाः कायरा विद्याविहीनाश्च। यजुर्वेदस्य

१ (अथर्व ७।५०।८)

ऋषिस्तु ततो बहुपूर्वमेव तदभिप्रायकं वचो मनुष्याणामुपकारायोक्तवान्–भूत्यै जागरणम-भूत्यै स्वपनमिति। सतत जागरूक एव भूतिमैश्वर्यमवाप्नोति न पुन सुप्त। अनयो श्रौतवचसो समर्थकमैतरेयब्राह्मणस्य तद्वचो यस्मिन् सतताभियोग एव, निरन्तरश्रम एव, अनारतक- र्मैव जीवनस्य सिद्धान्त प्रतिपादित–'चरैवेति चरैवेति', 'चरन् वै मधु विन्दति चरन्स्वादुमुदुम्बरम्। सूर्यस्य पश्य श्रेमाण यो न तन्द्रयते चरन्॥' इति। सूर्यो रात्रिन्दिव प्रयाति, वायुरपि अहर्निश वाति तत एव सदागतिश्च उच्यते। ग्रहा उपग्रहाश्चापि निरन्तर चलन्ति। नैते कदापि क्लान्तिमनुभवन्ति, तन्द्रा वा। तस्मादेतेऽस्माकमादर्शभूता पूज्याश्च। एतानि श्रुतिवचासि मनुस्मृतिरपि समर्थयति 'यद् दुस्तर यद् दुराप यद् दुर्ग यच्च दुष्करम्। सर्व तत् तपसा साध्य तपो हि दुरतिक्रमम्॥' इति। (मनु ११) मनोयोगपूर्व स्वकार्यसिद्धये कृत. सततसमुद्योग एव तप, यथा भगवत्पादशङ्कराचार्येण स्वभाष्ये उक्त 'सुखदु खादिद्वन्द्वसहन तप' इति। सुख-दु खेऽविगणय्य, ताभ्यामप्रभावित सन् धैर्यपूर्वक स्वलक्ष्यसिद्धये सततमभियोगस्तप इत्यस्य वचसस्तात्पर्यम्। मानवमनसो वृत्तीना सरीक्षको भर्तृहरिरपि 'मनस्वी कार्यार्थी गणयति न दु ख न च सुखम्' इत्युक्तवान्। मनोऽचञ्चल सुदृढ च कृत्वा कस्याश्चिदपि सिद्धे. कृते कृत कर्म समुद्योग प्रयत्नो वा तप., तच्च तपोऽवश्यमेव समाचरणीय सर्वैरेव जनैरिति निष्कर्ष।

ये खलु साधनसम्पन्नास्तैरपि सिद्धिप्राप्त्यर्थं तपश्चरणीय, प्रयत्नो विधेय., समुद्योग करणीय.। स्मरणीयमत्रेद यत् साधनाना साह्येन सिद्ध्यर्थं कृत. किञ्चिदल्पोऽपि समुद्योग. कर्मकर्तु कृते साफल्य सम्पादयति। किन्तु सिद्धिप्राप्तौ सतताभियोगस्यैव[१] प्रमुखकारणत्व, न पुन साधनानामुपकरणाना च। यतो हि धैर्यपूर्वक कृते पराक्रमे एव सिद्धिर्निवसति, ये चैव कर्तु क्षमास्ते एव महान्त। ये च सिद्ध्यर्थं साधनेषूपकरणेषु वा विशेषेणाश्रितास्ते सामान्यजना। यद्यपि विद्यार्थिना कृते पुस्तकान्यपेक्षितानि तथापि तेभ्योऽप्यधिकमपेक्षितो मनोयोगपूर्वक विद्याभ्यास एव। एकलव्यस्तु गुरोरप्यभावे सङ्कल्पस्य दृढतया कृतया सततसाधनयैव महान् धनुर्धरो जात इति को न जानाति। भगवान् श्रीराम कपिसाहाय्यमात्रेण रावणसदृश महापराक्रमिण चक्रवर्तिन राजान सकुल हत्वा तस्य स्वर्णमयी लङ्का विजित्य विभीषणाय ददाविति सर्वेषामेव विदितचरम्। भोजप्रबन्धकार. श्लोकेनैकेन कार्यमेतच्चर्चयन् श्रीरामस्य पराक्रमयुक्त समुद्योगमेव स्तौति प्रस्तौति च–

---

१ तत्परता।

'विजेतव्या लङ्का चरणतरणीयो जलनिधि-
विपक्ष.पौलस्त्यो रणभुवि सहायाश्च कपय ।
पदातिर्मर्त्योऽसौ सकलमवधीद्राक्षसकुल,
क्रियासिद्धि सत्त्वे भवति महता नोपकरणे ॥'

इति। एवमेव साफल्यार्थं पराक्रमैकाश्रयण गृह्णतामुद्योगिनामन्यान्यपि उदाहरणान्युपस्थापयितु शक्यन्ते।

यद्यप्यस्माक दौर्भाग्येनेदानीमपि अस्मद्देशे श्रमस्य वास्तविकी प्रतिष्ठा नास्ति, श्रमिणश्चात्र हेयदृष्ट्या दृश्यन्ते, तथाप्यस्माक कृषका श्रमिकाश्च समस्तेऽपि विश्वे कृष्युत्पादनसवर्धनविषये स्वप्रतिमान प्रतिष्ठापितवन्त। अस्मिन् तेषा सततभियोगे निरन्तरश्रमश्चैव सविशेषकारण, यद्यप्युर्वरकाद्युपकरणान्यपि कारणानि सन्त्येव। विदेशिशासने तु वराका भारतीयकृषका प्रायेण साधनविहीना एवासन्। यद्यपि विगतेषु कतिपयवर्षेषु भारतसर्वकारेण कृष्युपकरणाना सुलभता किञ्चिद् विहिता तथापि उन्नतदेशापेक्षया तान्युपकरणान्युर्वरकादीनि अल्पीयास्येवेदानीमपि। एव सत्यपि महान्तमुद्योगमाश्रयमाणा कृषका पूर्वतश्चतुर्गुणमन्नमुत्पाद्य विदेशिनामपि प्रशसार्हा जाता। एवमेवास्माक श्रमिका अपि महतायासेन बहुमूल्यानि बहूनि यन्त्राणि यन्त्रोपकरणानि अन्यानि च महार्घाणि पण्यान्युत्पाद्य स्वदेशनिर्यातवर्धने तथा च विदेशिमुद्राजने महान्त योग महत्त्व साहाय्य कृतवन्त। एतेन सिद्ध्यति यदुद्योगेनाभियोगेन, सततकर्मणा असाध्य नाम न किञ्चिद् वर्तते जगत्यस्मिन्। तस्मात् 'चरैवेति' 'चरन् वै मधु विन्दति' इत्यादिश्रुति स्मार स्मार सर्वै सर्वदा समुद्योगपरैरेव भाव्यम्। मध्विति पद मानवजीवनस्याखिलानि भोगोपकरणानि सङ्केतयदपि तस्य वास्तविकीं सर्वविधा सफलतामुपलक्षयति। यावानभियोगो भौतिकभोगोपलब्धयेऽपेक्षितस्ततोऽप्यधिकोऽभौतिकाध्यात्मिकोपलब्धयेऽपेक्षित। स्व कृते[१] सति जयो निश्चित, सिद्धिर्ध्रुवेति निष्कर्ष। आदिराजस्य भगवतो मनोर्वचनमास्ते पर प्रमाणम्—

"आरभेतैव कर्माणि श्रान्त श्रान्त पुन पुन।
कर्माण्यारभमाण हि पुरुष श्रीर्निषेवते॥" इति।

□

---

१ 'कृत' कर्म इत्यर्थ।

# विधिरहो बलवान्

विधिर्भाग्य भजनीयमर्थात् भोक्तव्य वस्तु। अनेनैव ज्ञायते यत् पूर्वजन्मकृतानि तानि कर्माण्येव विधिर्यैरिद जन्म प्रारब्ध कृत वा। अर्थात् फलोन्मुख फलदानोद्यत प्रारब्धफल वा कर्मैव विधिर्नाम। तस्मात् प्रारब्धमित्यपि तस्य पर्यायेष्वेक। यत प्रारब्धस्य भोग विना नाशो नैव भवति यतश्च तस्य फलमनिवार्यं नियत च, अतो नियतिरित्यपि तस्य पर्याय। यत कृतकर्मणामनिवार्यं फल 'फलमत उपपत्ते' इतिवेदान्तसिद्धान्तानुसार परमात्मदिष्टमेव, परमेश्वरनियन्त्रितमेव मिलति, तस्माद् देवेन कृत दैवमिति दिष्टमिति चापि विधे पर्यायौ। 'पूर्वजन्मकृत कर्म तद् दैवमिति कथ्यते' इति सर्वथा साधु परिभाषित दैव विधिर्वा। एवविधाया वस्तुस्थितौ विधेर्भाग्यस्य वा बलीयस्त्व सुसिद्धम्। नैतद् विवादस्य विषय। अस्मादेव कारणादस्मिन् विषये मनीषिणामृषिमहर्षीणाम् आचार्याणा कवीना चानेका उक्तयोऽनादिकालेभ्यो लोके प्रचलिता। यथा–

'विधौ विरुद्धे न सुधा सुधाकरे
न हेम हेमप्रभवे गिरावपि।'
'भाग्यानि पूर्वतपसा खलु सञ्चितानि
काले फलन्ति पुरुषस्य यथैव वृक्षा।'
'अथवा भवितव्यानां द्वाराणि भवन्ति सर्वत्र'
'शुभं च विदधात्यशुभ च जन्तो
सर्वङ्कषा भगवती भवितव्यतैव।'

इत्याद्या। एव स्पष्ट यद्वर्तमानजन्मनो घटना वृत्तानि वा पूर्वतो निर्धारितानि। तान्यवश्यमेव घटेयु।

किन्तु यदि विधिर्दैव वा कर्मण एव फल, तर्हि भाविभाग्यमुत्कृष्ट कर्तुमस्मिन् जन्मनि भव्यानि कर्माणि करणीयान्येव। पुनश्च 'शरीरयात्रापि च ते न प्रसिद्ध्येदकर्मण',

'नहि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत्। कार्यते ह्यवश. कर्म सर्व प्रकृतिजैर्गुणै ॥' इत्यादिभगवदुक्ते कर्मास्य जीवनस्याधार एव सिद्ध्यति। एतद्विना न किञ्चित् सेत्स्यति। 'न हि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगा' इति सत्योक्ति.। कर्मणोऽनुष्ठानेन शरीर मनश्च स्वस्थे तिष्ठत। समयस्यापि सदुपयोगो भवति। न स व्यर्थमेव याति। एतस्मात् कारणात् कर्मणोऽपि महत्त्व न न्यून, कथमपि समधिकमेव। अतो विधेर्दैवस्य वा चिन्ता विहाय शूरा विक्रमैकपरायणा. पुरुषार्थमात्राश्रयिण कर्मैव विदधति, तस्मिन्नेव च विश्वसन्ति। एव कर्मपक्षधरास्तस्यैव प्राधान्य स्थापयन्ति। विधे प्राधान्य स्थापयन्तो भाग्यवादिनस्तु एवमवतिष्ठन्ते यद् यद् दिष्ट तदवश्यमेव प्राप्यते। तस्मिश्च विरुद्धे सुधाकरेऽपि सुधा न प्राप्यते, न च हेमगिरौ हेम। वस्तुतस्तु कस्यापि कार्यस्य पञ्चविधकारणेषु 'दैव चैवात्र पञ्चमम्' इति गीतोक्तेर्दैवमप्येक यस्यापलापो नैव कर्तु शक्यते। नीतिविदा पञ्चतन्त्रकारेणापि एवमेवानेकश सिद्धान्तितम्। तत्राप्येका सुप्रसिद्धा उक्तिरीदृशी—

> 'शशिदिवाकरयोर्ग्रहपीडन
>
> गजभुजङ्गमयोरपि बन्धनम्।
>
> मतिमता च विलोक्य दरिद्रता
>
> विधिरहो ! बलवानिति मे मति ॥'

इति एव सत्यपि एतत्तु तावदवश्यमेव स्वीकरणीय यदप्रत्याख्येयस्याऽपि दैवस्य दिष्टस्य वा फल प्राप्तुम् प्रयत्नो विधेय एव, समुद्योग करणीय एव। अस्मिन् विषये महाभारतस्य स्पष्ट साक्ष्य लभ्यते। अनपत्यतादु खपरीत महाराज पाण्डुमाश्वासयन्त. ऋषय एवमूचु—'अस्ति वै तव धर्मात्मन् ! विद्मो देवोपम शुभम्। अपत्यमनघ राजन् ! वय दिव्येन चक्षुषा। दैवोदिष्ट नरव्याघ्र ! कर्मणेहोपपादय॥ (आदि ११९। २३ २४) इममुपदेशमनुसरन्नेव स पञ्च पाण्डवान् पुत्रत्वेन लेभे। किन्तु कर्ममात्रमुद्योग तावलम्बमानो स राजा अपत्यं अपि नालप्स्यत् कथमपि, यदि भाग्येऽपत्यं नैव लिखिताऽभविष्यत्। एव भाग्यस्य सहायकमेव कर्म, तस्य पूरकमेव न पुन. प्रधानम्।

किन्तु एतद्विरुद्ध विरुद्धपक्षिणो 'दैवमविद्वास प्रमाणयन्ति' इत्यादि वचासि प्रमाणयन्तो प्रत्याचक्षते यत् तन्द्रापिशाचीगृहीतानामुदरम्भरीणा कर्मभीरूणा कृते एव भाग्यस्य दैवस्य वा प्राधान्यम्। सत्य तु इदमेव यत् गुरुणा कृते पुन. सदपि तद्

नगण्य स्यादित्येव सती नीति। यत् कथमपि निवारयितु नैव शक्यते, तदर्थं किमर्थं क्रियेत चिन्ता ? सत्कर्मणा सदुद्योगेन पूततपसा च तद् यदि सर्वथा निष्फल मोघ वा कर्तुं न शक्यते तदपि तस्य कटुफल किञ्चिन्न्यून क्रियेतेति सम्भाव्यम्। न सम्भाव्य चेत्, तथापि न कापि हानि। पुरुषार्थे कृते, दुर्दैवे फल दत्त्वा नष्टे सति तस्य पुरुषार्थस्य शुभम् फल त्ववाप्स्यत एव। कृत कर्म फलमदत्त्वा न नश्यतीति सिद्धान्त। तत सत्त्वापाश्रयिणा न कोऽपि हेतुर्विषादस्य दैववैपरीत्येऽपि। सुष्टूक्त नीतिज्ञेन केनचित्—

'विषमावस्थिते दैवे पौरुषेऽफलता गते।
विषादयन्ति नात्मान सत्त्वापाश्रयिणो नरा'॥

इति। एव सर्वप्रकारै कार्यकरणे न कापि हानि सुष्टूक्त पञ्चतन्त्रे—

'उद्यमेन हि सिद्ध्यन्ति कार्याणि न मनोरथै।
नहि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगा॥'

इति अन्यत्रापि 'नास्त्युद्यमसमो बन्धु कुर्वाणो नावसीदति' इत्युक्तम्। आदिकविना वाल्मीकिनापि—

'निरुत्साहस्य दीनस्य शोकपर्याकुलात्मन।
सर्वार्था व्यवसीदन्ति व्यसन चाधिगच्छति॥

इत्युक्तवता दैन्यराहित्येनोत्साहपूर्वक कर्मानुष्ठातुमेव प्रेरिता सर्वे। नैतावदेव, तेन सुस्पष्टमुद्घोषित यद्—

'विक्लवो वीर्यहीनो य स दैवमनुवर्तते।
वीरा सम्भावितात्मानो न दैव पर्युपासते॥'

एतस्मात् सर्वस्मादिदमेव प्रमाणित भवति यत् सत्यपि दैवे न प्राधान्य तस्मै देयमपितु वीर्यमुत्साह चाश्रित्य दैन्यराहित्येन कर्मैवानुष्ठेयम्। यतो हि तस्मिन्ननुष्ठिते विधौ विपरीतेऽपि यत्किञ्चित् फल तु लभ्येतैव। पुरुषार्थाभावे पुन विधौ विपरीते न किञ्चिदपि फल लभ्येत इति सत्य, किन्तु इदमपि सत्य यत् विधौ अविपरीतेऽपि पुरुषार्थाभावे न प्रारब्धस्य सम्पूर्णं फल लभ्येत। यथा पूर्वमुक्त, यन्नियत, यद् दिष्ट,

# विद्या ददाति विनयम्

यस्य सन्नीतिप्रतिपादकस्य श्लोकस्यकाशत्वेन वर्तते पङ्क्तिरिय स ईदृशोऽस्ति–

'विद्या ददाति विनय, विनयाद्याति पात्रताम्।

पात्रत्वाद् धनमाप्नोति, धनाद् धर्मस्तत सुखम्॥'

इति। अस्मिन् श्लोके कारणकार्ययोरेका परम्परैवोद्घाटिता, सा चेदृशी–'विद्या विद्वत्सु विनयमानयति, विनयश्च तेषु पात्रता धनाद्यर्हताम्। विनयसम्पन्नाश्च पुरुषा पात्रत्वाद् धनादिक प्राप्नुवन्ति, धनेन च दानयज्ञादिसम्पादन कुर्वन्तस्ते धर्मं पुण्यमर्जयन्ति, पुण्येन च इह परत्र च सुख लभन्ते' इति। एव विद्यया प्राप्तव्यस्य विनयस्य अर्हतया, तस्याश्च धनार्जनेन सह सम्बन्धकथनेन स्पष्टमेतद् यद्वक्तु समग्र कथन व्यावहारिक जीवनमेवाधिकृत्य कृतम्। धनादिना यज्ञदानादिद्वारा धर्मार्जनमपि प्रत्येक सस्कारसम्पन्न पुरुष इच्छत्येव। यतो हि भोजनवसनावासादिषु धनव्यय कृत्वा यथेह जीवन सकर सुखमय भवति, एव दानयज्ञादिषु धनव्ययेन पुण्य धर्म वाऽर्जयित्वा अत्रैव परत्र चापि सुख लभ्यते। एव स्पष्ट [illegible]नयोऽत्र स्वब्धत्वाभावो, य शिक्षित्वा नर शिष्टो भवति, सभ्यश्च मन्यते। सभा[illegible]ति सभ्य, सभार्हत्वे च विनयस्य साक्षाद्धेतुत्वम्। अविनीतस्य विद्या मृतपुरुषस्य कुसुममालेवाशोभा करत्वादकिञ्चित्करत्वाच्च निष्फलेव। यथोक्तमाचार्यक्षेमेन्द्रेण–

'व्यसो कुसुममालेव विद्या स्तब्धस्य निष्फला॥'

इति। एव विनीते एव, शिष्टे एव जने धनार्जनयोग्यता तत्पात्रता भवतीत्युक्तम्। एव धनेन सम्बद्धत्वाद उद्धृते श्लोके कथिता विद्या अपरा व्यावहारिकजीवनसम्बद्धेति सुव्यक्तम्।

'अलसस्य कुतो विद्या अविद्यस्य कुतो धनम्।

अधनस्य कुतो मित्रममित्रस्य कुतो बलम्॥'

इत्यस्मिन्नपि श्लोकेऽपरैव विद्या चर्चिता वर्तते।

इयमपरा विद्या वेदापवेदेषु, वेदाङ्गादिषु, तदुपजीविषु पुराणेतिहासादिग्रन्थेषु, नाट्यकाव्यादिषु च प्राय वर्णिता चर्चिता च। अस्या भिन्ना परा विद्याऽपि वर्तते यया तदक्षरमविनाशि ब्रह्माधिगम्यते। इय विशेषेणोपनिषत्सु चर्चिता तदनुसारिषु गीतादिषु च। नेय लौकिकी अपितु पारलौकिकी पारमार्थिकी च। आत्मविषयिणी इय, तस्मादात्मविद्या अध्यात्मविद्या चाप्युच्यते। सर्वासु उपनिषत्सु तदुपजीविषु स्मृतीतिहासपुराणाद्यशेषेषु चेय सविस्तरमुपदिष्टा व्याख्याता च। मुण्डकोपनिषदि द्वयोरेव विद्ययो स्पष्ट प्रतिपादन कृतम्—द्वे विद्ये वेदितव्ये—परा चैवापरा च। तत्रापरा ऋग्वेदो यजुर्वेद सामवेदोऽथर्ववेद शिक्षा कल्पो व्याकरण निरुक्त छन्दो ज्योतिषमिति। अथ परा यया तदक्षरमधिगम्यते (मुण्डक. ११४५) इति। एवमेव छान्दोग्येऽपि द्वे एवोक्ते उपदेशायोपसन्नस्य नारदस्य—'यद्वेत्थ तेन मोपसीद, ततस्ते ऊर्ध्व वक्ष्यामीत्युक्तवति सनत्कुमारे, स होवाच-ऋग्वेद भगवोऽध्येमि यजुर्वेद सामवेदमाथर्वण चतुर्थमितिहासपुराण पञ्चम वेदाना वेद, पित्र्य राशि, दैव, निधि, वाकोवाक्यमेकायन, देवविद्या, ब्रह्मविद्या[1] भूतविद्या क्षत्रविद्या, नक्षत्रविद्या, सर्पदेवयजनविद्याम्—एतद् भगवोऽध्येमि। सोऽह भगवो मन्त्रविदेवास्मि नात्मवित्। श्रुत ह्येव मे भगवदृशेभ्यस्तरति शोकमात्मविदिति। सोऽह भगव शोचामि, त मा भगवान् शोकस्य पार तारयत्विति। (छान्दोग्यो. ७१२,३)।

द्वे अप्येते विद्ये वेदितव्ये इति मुण्डकसन्दर्भे कथितम्। यतो हि द्वे एवोपयोगिन्यौ। द्वयोरेवोपयोगमधिकृत्याभिहितानि वचनानि नाकुलीकर्तव्यानि। 'विद्या ददाति विनयम्' इत्यादिश्लोको लौकिकीमपरामेव विद्या स्तोतु कथित। एवमेव,

> विद्या नाम नरस्य रूपमधिक प्रच्छन्नगुप्त धन,
> विद्या भोगकरी यश सुखकरी विद्या गुरूणा गुरु।
> विद्या बन्धुजनो विदेशगमने विद्या परा देवता,
> विद्या राजसु पूज्यते नहि धन विद्याविहीन पशु ॥
> मातेव रक्षति पितेव हिते नियुङ्क्ते,
> कान्तेव चाभिरमयत्यपनीय खेदम्।

१ ब्रह्मन ऋग्यजुःसामाख्यस्य विद्या ब्रह्मविद्या, शिक्षाकल्पच्छन्दश्चितय। (शा भा)

लक्ष्मीं तनोति वितनोति च दिक्षु कीर्तिं,
किं किं न साधयति कल्पलतेव विद्या ॥

इत्यादिभिरपि श्लोकैः सैव स्तुता। ईशोपनिषदो नवमतो मन्त्रादारभ्यैकादश मन्त्रपर्यन्तं विद्याऽविद्ययोः प्रकरणं वर्तते, ते च–

'अन्धं तमः प्रविशन्ति ये अविद्यामुपासते।
ततो भूय इव ते तमो य उ विद्यायां रताः ॥
अन्यदेवाहुर्विद्यया अन्यदाहुरविद्यया।
इति शुश्रुम धीराणां ये नस्तद्विचचक्षिरे ॥
विद्यां चाविद्यां च यस्तद्वेदोभयं सह।
अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते ॥'

इति। अत्र विद्यारताः जना अविद्यानिरतजनापेक्षया भूय एवाधिकतरमेव अन्धं तमः प्रविशन्तीत्युक्तम्। विद्येति च भूयोऽन्धतमसप्रवेशश्चेति परस्परविरुद्धं वचो, न पुनः श्लिष्टं युक्तं वा। सर्वापीह विद्या प्रकाशकारिणी, प्रकाशमयान् लोकान् प्रवेष्टुमेवाश्रीयते, परयात्मविद्यया युक्तः आत्मवित्तु शोकमोहादिकं तरतीति उपर्युद्धृतया छान्दोग्यश्रुत्या स्पष्टमेव। अतो भाष्यकारः शङ्कराचार्योऽविद्याम् अग्निहोत्रादेर्वैदिककर्मणो वाचकं,विद्यां च देवताज्ञानस्य नत्वात्मज्ञानस्य वाचकं गृह्णाति। 'यस्यै देवतायै हविर्गृहीतं स्यात् तां मनसा ध्यायेद् वषट्करिष्यन्' इति हि ब्राह्मणवाक्यम्। तस्माद्देवताज्ञानं विना कथं देवताध्यानं मनसा सम्पद्येत, तस्मिश्चासम्पन्ने कथं तद्देवताकमग्निहोत्रादि कर्म सुष्ठु सम्पद्येत, तदभावे च कथं तस्य सम्पूर्णं फलं प्राप्येत। अतएव श्रुत्या विद्याऽविद्ययोः समुच्चयोऽत्र प्रतिपादितः। यो हि यजमानो यजनीयदेवतास्वरूपं वेदशास्त्रादिभ्यो ज्ञात्वा सविधि अग्निहोत्रादिकं सम्पादयति, स तेन "कर्मणाऽग्निहोत्रादिना निसर्गेण स्वभावेन वा प्राप्तं स्वाभाविकं कर्म ज्ञानञ्च मृत्युशब्दवाच्यम् उभयं तीर्त्वातिक्रम्य, 'विद्यया' देवताज्ञानेन 'अमृतं' देवतात्मभावम् अश्नुते प्राप्नोतीत्यर्थः" (शां. भा.)। यतो हि देवता अमरास्ततो देवतात्मभावप्राप्तिः श्रुत्याऽमृतत्वप्राप्तिरुच्यते एतच्च सर्वथा समञ्जसं सङ्गतं सुश्लिष्टं च। नात्र विद्या आत्मज्ञानं, न चात्रामृतत्वप्राप्तिः नित्यात्मप्राप्तिर्मोक्षप्राप्तिर्वा।

वृहदारण्यकश्रुतावापि 'अन्धं तमः प्रविशन्ती'त्यादिको मन्त्रः पुनरावृत्तः। तत्रापि श्री-शङ्कराचार्यस्य भाष्यमेतदेव तथ्यं प्रकटीकरोति—'अन्धमदर्शनात्मकं तमः संसारनियामकं प्रविशन्ति—येऽविद्यां विद्यातोऽन्यां साध्यसाधनलक्षणामुपासते कर्मानुवर्तन्त इत्यर्थः। ततो भूय इव—तमः प्रविशन्ति य उ विद्यायामविद्यावस्तुप्रतिपादिकायां कर्मार्थायां त्रय्यामेव विद्यायां रताः। विधिप्रतिषेधपर एव वेदो नान्योऽस्तीति उपनिषदर्थानपेक्षिण इत्यर्थः।' (वृहदा. शा. भा. ४४१०)। एवं तर्हि सुसिद्धं यत् त्रयीविद्यापि अग्निहोत्रादिकस्य देवकर्मण एव प्रतिपादिका। तत्र प्रतिपादितं तत्रदेवताज्ञानमपि तस्यैव वैदिककर्मणः साधकम्। न च तेनात्मभावप्राप्तिर्मोक्षो वा भवति। तदर्थं तूपनिषत्सु अनेकशः प्रतिपादितमात्मविषयकं ज्ञानमेवापेक्ष्यते। आत्मा तु मुख्यतया उपनिषदामेव प्रतिपाद्यो विषयः अतएव सौपनिषद इति स उच्यते, 'तं त्वौपनिषदं पुरुषं पृच्छामी'त्याद्युक्ते। उपनिषत्सु आत्मप्राप्त्युपायत्वेनात्मज्ञानमेवानेकशः कथितमस्ति। 'नान्यः पन्था विद्यतेऽयनाय', 'न कर्मणा न प्रजया धनेन त्यागेनैकेऽमृतत्वमानशुः' (महानारायण), 'भूतेषु भूतेषु विचित्य[१] धीराः प्रेत्यास्माल्लोकादमृता भवन्ति' (केन. II. ५), अरा इव रथनाभौ कलाः यस्मिन् प्रतिष्ठिताः। तं वेद्यं पुरुषं वेद यथा मा वो मृत्युः परिव्यथा' (प्रश्न. VI. ६) इत्यादीनि औपनिषदवचांसि एतत् समर्थयन्ति। इदमेवात्मज्ञानं परा विद्या। इदं ज्ञानं सर्वं कर्म तत्फलं च भस्मसात् कृत्वा जीवात्मानं नित्यशुद्धबुद्धमुक्तस्वभावे सच्चिदानन्दस्वरूपे प्रतिष्ठापयति। यथोक्तमुपनिषत्सारभूतायां श्रीमद्भगवद्गीतायामपि—

'यथैधांसि समिद्धोऽग्निर्भस्मसात् कुरुतेऽर्जुन।
ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते तथा'॥

इति। 'सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते' इत्यपि। अध्यात्मज्ञानस्योत्पादयित्री परा विद्या नापरा त्रयी विद्या। यस्य ईशश्रुतिस्थितमृत्युपदवाच्यं नैसर्गिकं स्वाभाविकं वा ज्ञानं, तस्य तु आत्मज्ञानोत्पादे शक्तिरेव कुतः? इयमेव परा विद्या चिरकालमुपासिताऽऽत्मज्ञानं प्रबोधं वा जनयति। अस्यैव च प्रबोधस्य सहजन्माऽऽन्तरिको विनयो यो ज्ञानं विना क्षणमपि स्थातुं नार्हति। यथोक्तं कालिदासेन रघुवंशे लक्ष्मणशत्रुघ्नोत्पत्तिप्रसङ्गे—

१ विज्ञाय साक्षात्कृत्य इति शाङ्करभाष्ये।

'ततो लक्ष्मणशत्रुघ्नौ सुमित्रा सुषुवे यमम्।
सम्यगाराधिता विद्या प्रबोधविनयाविव॥'

ति। अत्र विद्यापदेन परैव विद्या गृह्येत, प्रबोधस्य तयैव नियततयोत्पादितत्वात्। वरकालमुपासितेयमात्मविद्या कालान्तरेऽवश्यमेव आत्मप्रबोध तदनन्तर विनय ोत्पादयति। अप्रबुद्धस्य कुतो ह्ययमान्तरिको विनय यतो ह्यय सर्वषामान्तरिकरिपूणा ाणा कामक्रोधलोभमोहमदमात्सर्याणा विनयोऽपहारो दूरीभावो वा।

लौकिकसुखसमृद्ध्यादेरर्हताया पात्रताया वोत्पादयित्री विनयपदवाच्या या नम्रता ौकिकज्ञानसम्पादयित्र्या सामान्यविद्याया प्रथमपरिणामरूपेणोक्ता 'विद्या ददाति विनयम्' त्यादि, तस्या अपि नाल्पम् महत्त्वमुपयोगित्व चेति तु आदावेवोक्तम्। यतो हि नङ्ख्यातीता जना लौकिकास्ते च प्रायेणार्थकामाविति द्वावेव पुरुषार्थो मन्यन्ते मानवजीवनस्य, तदर्थमेव च प्रयतन्ते। एतयो सिद्धौ लौकिकविद्याया महत्त्वमकथनीय या लोकयात्राया सौकर्यार्थं नैकान् दया-क्षमा-स्नेह-मैत्री-कार्यचातुरी विवेकादीन् गुणान् विद्याधारिपु जनेपु जनयति। एतयैव विद्यया ज्ञायते तथ्यमेतद् यत् स्वकृतस्याधर्मस्य परिणामत्वेन सर्वा समृद्धय आशुविनाशिन्य, एतद् ज्ञात्वैव च जनास्तृतीय पुरुषार्थं धर्माख्य विद्यार्जितधनादिभि साधयितुमिच्छन्ति प्रयतन्ते च। एतस्यैव पृष्ठे ाध्यात्मिकजीवनस्य सस्थापना सरचना च कालान्तरे भवितुमर्हति। एवमुभयरूपैव विद्या ानवस्यानल्पोपकारकरी। यो यस्या पात्र स तामेवाश्रयते तदर्थं प्रयतते च। तादृश एव यत्नो वस्तुत श्रेयस्करोऽपि। अपात्रस्य प्रयत्नो न केवल मोघो निष्फलो वाऽपितु अकल्याणकरोऽपि। तस्मात्परविद्याकृते सता सङ्केन सर्वप्रथम पात्रतैवोपार्जनीया। गुरुणाऽपि अपात्राय विद्या कदापि न देया। यतो हि अपात्राय दत्ता सा गुरुशिष्ययोरुभयोरपि निन्दाकारण भवति। पात्रापात्रविवेकस्य महत्त्वमनेनैव तथ्येन ज्ञातव्य यत् तृणादिक भक्षयित्वा गौर्दुग्धामृत प्रसूते, यावद् दुग्धामृत पीत्वा सर्पो विषम्। सम्यक् प्रकटितमेतत् ग्था केनापि विवेकिना—

"पात्रापात्रविवेको हि धेनुपन्नगयोरिव।
तृणात् सजायते क्षीर, क्षीरात् सञ्जायते विषम्"॥

अतएव श्रुतिस्मृत्यादिपूक्तम्—

"विद्या ब्राह्मणमेत्याह, शेवधिष्टेऽस्मि रक्ष माम्।
असूयकाय मा मा दास्तथा स्या वीर्यवत्तमा॥" (मनु २/१११)

इति। एव सुस्पष्टमेतत् तथ्य यदपात्राय दत्ता विद्या वीर्यवती वरदायिनी च नैव भवति तत्त्व नव प्रकाशयति नैवोद्दीपयति। एव स्वप्रयोजनस्य स्वोद्देश्यस्य वा साधने [illegible] चासफला भवति। तथा सति तस्या दानेन को लाभ ?

□

# सतां सङ्गो हि भेषजम्

सर्वजनहितोपदेशकारिणा हितोपदेशाख्यग्रन्थकृता समेषा हितार्थं सता सङ्ग विदधतोक्तम्—

"सङ्ग सर्वात्मना त्याज्य स चेत् त्यक्तु न शक्यते।
स सद्भि सह कर्तव्य, सता सङ्गो हि भेषजम्"॥

सङ्गो राग आसक्ति। यस्मिन् रागो भवति कस्यापि स तेनैव सम गच्छति तस्यैव सङ्गतिमिच्छतीति सर्वस्यैवानुभव। तत सङ्गशब्द साह्यार्थकोऽपि[१] भवति। किन्तु कस्यापि जनस्य, प्राणिनो, वस्तुनो वा साह्यप्राप्तेरिच्छाया प्रयत्ने च मूलभावना तस्मिन् राग एवास्ति। इदमेव मनोवैज्ञानिक तथ्य मनसि निधाय हितोपदेशकारेणेदृशी उक्ति कृता। अस्या अभिप्रायस्तु स्पष्ट एव, तथाप्येतस्या व्याख्या कथञ्चिदपेक्ष्यत एव। *रागात्मकत्वात् सङ्गो बन्धनकारी, अतोऽय सर्वथा परित्याज्य।* किन्तु यतो भगवत्सङ्गो मोक्षकारी, तस्मात् स प्रयत्नपूर्वक सर्वात्मना करणीय एव। अय च भगवत्सङ्गो महत्तमैकान्तपरायणाना महात्मना सङ्ग विना नैव भवति। तस्मात् सता महात्मना सङ्ग 'प्रथम महता सेवा' इति भागवतोक्ते सर्वत प्रथम करणीय सर्वैरेव कल्याणेप्सुभिर्मङ्गलाशसुभिश्च। स च भेषजमिति किमु वक्तव्यम्। यथा हि भेषज सर्वानामयान्[२] सर्वान् रोगान् सर्वान् व्याधींश्च दूरीकृत्य क्रमेण पौर्विक स्वास्थ्य पुन प्रापयति येन रोगी प्रकृतिमापन्नो भवति, तथैव सतसङ्गोऽपि जगत परमप्रकृते परमात्मनो दूरापेताना, दुरितादिष्वसत्कर्मसु अनारत निरताना मूढग्राहाणामसताम् आत्मानात्मविवेकमुत्पाद्य तथा च समस्त मौढ्यदोष दूरीकृत्य आत्मविषयकेण श्रवणमननिदिध्यासनादिद्वारेण आहोस्वित् भगवच्छ्रवणकीर्तिनस्मरणादिनवधाभक्तिद्वारेण तत्त्वज्ञान सम्पाद्य शनै परा प्रकृति परमात्मान प्रापय्य भवव्याधि निवर्तयति। *जीव एव 'स्वस्थ' स्वस्मिन् आत्मरूपे ब्रह्मणि स्थितो भवन्* परमपुरुषार्थं

१ 'सह' इत्यस्य भाव साह्यम् (साथ)। साह्यम् अर्थो यस्य स साह्यार्थक।
२ आमया रोगा।

मोक्ष परमानन्दरूपमवाप्नोति। इदमेव रहस्य विवेकिभि कविभिस्तत्त्वज्ञैर्मनीषिभिश्च 'सङ्ग सता किमु न मङ्गलमातनोति' 'सता हि सङ्ग सकल प्रसूयते', 'सत्सङ्गति कथय किन्न करोति पुसाम्' इत्यादिभिरनेकै प्रकारैरुद्घाटितम्।

सता सङ्गेनोच्चादुच्चतरमुच्चतम च स्थान प्राप्तवतामैतिह्येषु सर्वोत्कृष्ट ब्रह्मपुत्रस्य देवर्षिपदमारूढस्य भगवतो नारदस्यैतिह्यम्। श्रीमद्भागवते (स्क १, अ ५) सरस्वतीतटे विषण्णस्य व्यासस्य नारदस्य च मध्ये घटित सवाद सन्दृब्धो यस्मिन् नारदो दासीपुत्रत्वादारभ्य देवर्षित्वप्राप्तिपर्यन्त स्वीय निखिलमेवैतिह्य प्रकटीचकार। ऐतिह्यमिदम् सता सङ्गस्यैव महिमान प्रभाव च प्रकटयति। सप्तर्षीणामुपदेशेन दस्युकर्मणि पापान्धे निरतो वाल्मीकिरपि परस्वापहरणादिक परित्यज्य सत्कर्मणि प्रवृत्त। तपश्चरणेन शनै शनै उच्चादुच्चतर स्थान प्राप्नुवनन्तत आविर्भूतब्रह्मप्रकाशो, नारदेन निवेदितो लोकपावन रामचरित वर्णयितु रामायण प्रणिनाय। लौकिकसस्कृतस्य तदेवादिम काव्य बभूव, स चादिकवि। आधुनिककालेऽपि सत्सङ्गस्य पावनप्रभावस्योदाहरण स्वामि विवेक.. य स्वामिरामकृष्णपरमहसस्य सङ्गेन कृपया च नास्तिकात् कुतार्किकाच्च नरेन्द्र आस्तिक स्वामिविवेकानन्दो जात। स न केवल स्वदेश एवापितु विदेशेष्वपि हिन्दु विशेषतश्च वेदान्तदर्शनस्य विजयध्वजमुच्छ्रापयामास। एवमन्यान्यप्युदाहरणानि वर्तन्ते सत्सङ्गस्य महीयास महिमान प्रभाव च दर्शयितुम्।

नाय प्रभाव सचेतस्सु मनुष्येष्वेवापितु कीटपतङ्गादिष्वपि परिलक्ष्यते। अतएव आश्रमेषु सार्वभौममहिंसादिक महाव्रतमनुतिष्ठतामृषीणा मुनीना च सत्सङ्गस्य प्रभावे निवसत्सु मृगमयूरादिषु पशुपक्षिष्वपि दृश्यत एव। अस्य प्रभावस्य चित्र सस्कृतकवीना नाट्यकाव्यादिषु, पुराणादिषु च बहुशो लभ्यते। ईदृशमेक वर्णनम् जाबाल्याश्रमे तपश्चरता मुनीना लभ्यते बाणकृतकादम्बर्याम्—' अहो प्रभावो महात्मनाम् अत्र हि शाश्वतिकमपहाय विरोधमुपशान्तात्मानस्तिर्यञ्चोऽपि तपोवनवसतिसुखमनुभवन्ति। तथा हि-अयमुत्सृज्य मातर केसरिशिशुभि सहोपजातपरिचय पिबति कुरङ्गशावक सिंहीस्तनम्। इदमिह कपिकुलमपगतचापलमुपनयति मुनिकुमारकेभ्य स्नातेभ्य फलानि किं बहुना, तापसाग्निहोत्र-धूमलेखाभिरुत्सर्पिणीभि अनिशमुपपादितकृष्णाजिनोत्तरासङ्गा इव फलमूलभृतो वल्कलिनो निश्चेतनास्तरवोऽपि सनियमा इव लक्ष्यन्ते, किं पुन सचेतना प्राणिन' इति। धन्य सत्सङ्गस्य विस्मयकारी महिमाऽयम्।

किन्तु केचिद् विचारकम्मन्या एतद्विध चित्रणमस्वाभाविकमवैज्ञानिक च मन्यन्ते। ते एतद्विरुद्धमिम तर्क प्रस्तुवन्ति यत् सिंहमृगयो सर्पमयूरयोर्वा प्रकृतिकृत शाश्वतिको वैरभावो विरोधो वा न कथमपि दूरीकर्तुं त्याजयितु वा शक्यते। कपिकुलमपि स्वभावगत चापल परित्यज्य मुनिकुमारेभ्य फलान्युपनेतु नैव शक्नोति। वाग्विलासमात्रमेतत् कवीनाम्। ते तु राज्ञ शूद्रकस्य सभामण्डपे शुकेन पञ्जरस्थेन कृता स्वस्ति भवते राजन्, इत्यादि वच-प्रस्तुतिमपि सर्वथाऽसम्भवाम् मन्यन्ते। ते भारतस्येतिहासस्येमा सुप्रसिद्धा घटनामपि विस्मरन्ति यद् भगवन्त बुद्धमुपागत सिंहस्तस्य स्नेहनिष्यन्दिन्या दृष्ट्याऽप्यायितस्सन् तस्याकस्मिकसङ्गमेनोपशान्तात्मा तत्पुर स्वपुच्छ धुन्वन् निभृतमपगतस्तदाश्रमात्। नेयमैतिहासिकी घटना कस्यापि कवेर्वर्णितसदृशस्य काव्यात्मको वाग्विलासोऽपितु तथ्यात्मिका यथार्था च। वैज्ञानिकविश्लेषणप्रियास्तार्किकम्मन्या किमुत्तर दातु शक्नुवन्ति *विषयेऽस्मिन्। वास्तविकता त्वियमेव यज्जगतो जीवनस्य* चानेकानीदृशानि तथ्यानि वृत्तानि[1] वा यानि निगूढानि रहस्यात्मकानि च, न तेषामुद्घाटन विज्ञानस्य वा, मनोविज्ञानस्य वा, तर्कस्य वा साहाय्येन कर्तुं कथमपि शक्यते। यदि नवमस्य सिक्खगुरोस्तेगबहादुरमहोदयस्य ससर्गमात्रात् शुष्कप्राया वाटिकापि हरितिमान[2] प्राप्ता, यदि भगवतो बुद्धस्य सत्सङ्गात् अङ्गुलिमालो नाम लुण्ठाक परिवर्तितमना साधुभाव प्राप्तो, यदि च वाल्मीकिरादिकवि सप्तर्षिसङ्गात् लुण्ठाकवृत्तिं विहाय रामे रमणपरो जातस्तर्हि बाणादिसदृशाना सत्सङ्गमाहात्म्यवर्णनापर वर्णन कथ तथ्यादपेत काव्यात्मक वाग्विलासमात्र वाऽवास्तविक वाऽसम्भाव्य वा मन्तु शक्यते। ईदृश्यो घटना वस्तुत असामान्या, असामान्यकारणैरसामान्यपरिस्थितिष्वेव घटन्ति न सामान्यपरिस्थितिषु। प्राप्तसिद्धयोऽभेदबुद्धयो भगवद्रूपा सन्तश्चासामान्या एव, तत्सङ्गजाता परिस्थितयोऽपि असामान्या एव। तास्वेव सहजा प्रवृत्तयो वा, प्राक्तनासस्कारा वा परिवर्तनमनुभवन्ति। तत्र न किमपि आश्चर्यं, न वा कोऽपि सन्देह कर्तुमुचित।

*निष्कर्षो निर्गलितार्थो वा अयमेव वक्तु पार्यते* यत् लोकेऽस्मिन् नैव सत्सङ्गादधिकतर कल्याणकारि हितकर वा मानवस्य किमपि वर्तते। तस्मात् स एव यथा कथञ्चित् प्राप्तव्यो येन मानवजीवन-प्राप्तेर्वास्तविको लाभ प्राप्येत, जीवन सर्वथा सफल धन्य च भवेत्।

---

१　घटना।
२　हरियाली।

## गुणाः पूजास्थानं गुणिषु न च लिङ्गं न च वयः

महाकवेर्भवभूतेरमरनाट्यकृतेरुत्तररामचरितस्य चतुर्थेऽङ्के कञ्चुकिमुखात् 'पौरजानपदा नाग्निशुद्धिं प्रतियन्तीति दारुणमनुष्ठितं देवेन' इति श्रुत्वा 'अलाऽयमग्निनामास्मत्प्रसूतिपरिशोधने' इति जानकीजनकेन जनकेन राजर्षिणा सीरध्वजेन सरोषमुक्ते त्रिलोकीमङ्गल्या ज्ञानवृद्धया भगवती अरुन्धती तद्वचः समर्थयन्ती एवमाह—

> शिशुर्वा शिष्या वा यदसि मम तत्तिष्ठतु तथा
> विशुद्धेरुत्कर्षस्त्वयि तु मम भक्तिं द्रढयति।
> शिशुत्वं स्त्रैणं[1] वा भवतु ननु वन्द्यासि जगतां
> गुणाः पूजास्थानं गुणिषु न च लिङ्गं न च वयः॥

इति। शिशुरपि स्त्र्यपि स्नुषापि जानकी स्वविशुद्धेरुत्कर्षान्न केवलं ममैव वन्द्याऽपि सर्वेषां जगतामपि, यतो गुणवत्सु गुणा एव केवलं पूजास्थानं सम्मानकारणं वा, न पुनस्तेषां लिङ्गं वयो वेति तस्या भगवत्याः कथनस्य तात्पर्यमेतच्च सर्वथा सत्यमिति प्रतिपादयितुं प्रयत्यते।

सामान्यतस्तु सुन्दरं वपुः, शुभ्रो वेषः, उच्चकुले च जन्मेत्येतद् सर्वं गुण एव अनेन च सम्मानः स्नेहश्चापि प्राप्यत एव। किन्तु यावद्बाह्यसौन्दर्यमान्तरिकगुणगणैर्नान्वितं यावच्चोत्तमकुलं विद्यावृत्ताभ्यां न समन्वितं तावदेतेन सर्वेण प्राप्तः स्नेहः सम्मानश्च विच्छिन्नकालावस्थाय्येव, न चिरकालिकः। वेषादिगौरवेण वाग्व्यादिमाधुर्येण वा केवलेन यदि जना आकृष्यन्ते न पुनः विद्याविभूत्यापि चारित्र्यबलेनापि च, तर्हि शनैः शनैर्गलितयाथार्थ्यानां जनानां चेतसि कालान्तरेऽनुरक्तिस्थाने विरक्तिः, सद्भावने श्रद्धास्थाने घृणा, आकर्षणस्थाने औदासीन्यं चोत्पद्यते। तस्मादान्तरिका गुणा एव वास्तविका एव च प्रयत्नेनोत्पाद्याः क्रमेण। पातिव्रत्यस्य परां कोटिं प्राप्ता भगवती जानकी भगवत्या अरुन्धत्या अपि कृते पूज्यासीत्, किं पुनः जगतां कृते। स्वतपोबलेन, प्रकर्षेण धर्माचरणेन च भगवती पार्वत्यपि न केवलमृषिमण्डलीनां कृतेऽनुकरणीयादर्शा जाताऽपितु

---

१ स्त्रीत्वम्

तिवतानां पतिदेवतानां सत्स्त्रीणां मध्ये प्रथमां कोटिं प्राप्तवती, स्वपतिरूपेण मृत्युञ्जय गवन्तं शिवं च। पत्युरप्रतिमं प्रेम प्राप्य सा भगवतः शिवस्य शरीरे एवाक्षुण्ण थानमधिगतवतीत्येतत् सर्वं गुणानामेव प्रभावः परिणामश्च। तत्र न तस्याः स्त्रीत्वं न ा तस्या अल्पवयस्कत्वमवरोधकं जातम्। परवर्तिकालेऽपि अनेकाः स्त्रियः स्वगुणगरि- णैव लोके प्राप्तयशसो जाताः। अम्भृणपुत्री वाग् आम्भृणी सुप्रथितस्य वाक्सूक्तस्य द्रष्ट्री बभूवातिप्राचीने काले। उपनिषत्सु स्वज्ञानार्थं सुप्रथिता मैत्रेयीगार्गीवाचक्नवीप्रभृतयो ब्रह्मनिष्ठा ब्रह्मज्ञानिषु महर्षिष्वपि प्रभूतं समादृताः सम्मानिताश्चासन्। तत्रापि स्त्रीत्वं नावरोधकं बभूव।

अल्पवयस्कोऽपि भगवान् वैयासिकिर्दिग्भ्यो विदिग्भ्य आगतेषु विद्यातपोयोगबलसमन्वितेषु वयोवृद्धेषु मुनिषूपस्थितेष्वपि यद् विष्णुरातस्य राजर्षे परीक्षितस्योपदेष्टा सर्वसम्मत्या नियुक्तः तत्तु स्वतत्त्वज्ञानगुणगरिम्णैव। तस्याल्पवयस्- त्वं न केनापि विचारितम्। तस्यात्मज्ञानमेव केवलं सर्वेषां मनस्सु बलिष्ठरूपेणोप- स्थितमासीत्। जगद्गुरूपाधिना विभूषितो ब्रह्मसूत्रभाष्यकारो वेदान्तज्ञानतत्त्वज्ञः शङ्कराचार्योऽपि अष्टवर्षीय एव वेदज्ञानमर्जितवान्। अनन्तरं ब्रह्मसूत्रभाष्यं प्रसन्नगम्भीरं रचितवान्, तदनन्तरं च वैदिकधर्मं प्रचारयन् द्वात्रिंशे वर्षे इतोऽमुत्राभ्यगात्। तस्य शैशवं तन्माहात्म्ये कथमपि अवरोधकं न बभूव। अतएव उत्तरचरितकारात् बहुपूर्वं मनुस्मृतौ मतमेतत् सिद्धान्तरूपेणोद्घोषितमासीत्—

न हायनैर्न पलितैः न वित्तेन न बन्धुभिः।
ऋषयश्चक्रिरे धर्मं योऽनूचानः स नो महान्॥
न तेन वृद्धो भवति येनास्य पलितं शिरः।
यो वै युवाप्यधीयानस्तं देवाः स्थविरं विदुः॥ इति।

अद्यावधि आन्तरिकगुणव्याख्यानरूपेण प्राचीनोदाहरणद्वारेण किञ्चिदुक्तं किन्तु न तत् पर्याप्तमिति पुनरपि सविशेषं व्याख्यायते। वस्तुतो गुणानां क्षेत्रमतिव्यापकम्। शस्त्रशास्त्रादिषु प्रावीण्यं, कलासु वैचक्षण्यं, काव्येषु वैदग्ध्यं, सर्वभूतेषु दाक्षिण्यं, धर्मे च प्रवृत्तिरित्येतत् सर्वं गुण एव। अन्यच्चात्रानुक्तं बहु अवशिष्टं वर्तते यद् गुणक्षेत्रे समायाति। तर्हि कथं गणयितुं परिचेतुं वा शक्या गुणाः ? अद्यावधि ये केऽपि जनाः पूजार्हा अभवँल्लोके, तेषां कोऽपि वाल्मीकिव्यासकालिदासभवभूत्यादिरिव रससिद्धः, कोऽपि शुक्रबृहस्पतिचाणक्यादिरिव राजनीतौ प्राप्तप्रावीण्यः राजनयज्ञः, कोऽपि भी- मार्जुनादिरिव शूरोऽप्रतिमः योद्धा, कोऽपि व्यासवशिष्ठादिरिव तत्त्वद्रष्टा मनीषी, कोऽपि

विद्याधरचक्रवर्तिजीमूतवाहन इव मौर्यवंशावतंसायमानो नृपतिरशोक इव वा धर्मात्मा सर्वभूतहिते रत, कोऽपि कर्णदधीचिशिबीत्यादिरिव दानवीर । एव सुस्पष्ट यत् सर्वेऽपि स्वस्वकर्मणा गुणमयेनात्मन उत्कर्ष सम्पादयन्तो लोकमपि सहैव सवर्धितवन्त । यथा महाकवे सत्काव्येन मानसिकी निवृत्तिस्तुष्टि शान्तिश्च लोकस्य जायते, तेन च स लोके पूज्योऽमरश्च भवति। तथैवान्येऽपि कलाकारा स्वस्वकलया। धर्मात्मानस्तु लोकहितायोत्सृष्टसकलस्वार्था परेभ्य एव धारयन्ति जीवितम्। ते कस्य न पूजनीया ? तस्मात् सुस्पष्टमेवैतत् तथ्य यद् कोऽपि लोकमाराधयितु, लोकमुन्नेतु प्रयतते, स सर्वोऽपि पूजनीय । नाकारणमेव अभिनवो राजा राम "स्नेह दया च सौख्य च यदि वा जानकीमपि । आराधनाय लोकाना मुञ्चतो नास्ति मे व्यथा ॥" इत्याह। एते महापुरुषा स्वस्वसत्कर्मभिर्गुणगरिम्णा चालौकिका लोकोत्तरा असाधारणा वा सजाता । तर्हि कथ तेषा विषये वयोलिङ्गादिगता लौकिकी विचारणा कार्या ?

सर्वभूतहिते रतो भगवान् बुद्धो यौवनेऽभिनवे एव पैतृकराज्य समृद्ध परित्यज्य, परित्यज्य च समस्त भौतिक सुख गृहादभिनिष्क्रम्य प्रव्रजितस्तपस्यया धर्माचरणेन च परा सिद्धिमवाप, दुखार्ताना च कृते समस्तदुखनिवृत्तिरूपस्य निर्वाणस्य च मार्गमाविश्चकार। तस्मिन् काले न स वयसा वृद्धस्तथापि लोके सर्वपूज्योऽर्हन् बभूव। एवमेव गौराङ्गमहाप्रभु श्रीकृष्णचैतन्योऽपि भगवदेकशरणमो नवयौवन एव गृह त्यक्त्वा प्राणिमात्रस्य दुखेन दूयमानचेतास्तदेव प्रक्षालयामास प्रवाहितवाश्च भगवद्भक्त्या। एव स सर्वेषामाराध्यो बभूव। आधुनिकेऽपि काले सरोजिनीनायडू भारतकोकिला समर्पितात्मनात्मान स्वाधीनतासङ्ग्रामे यौवने एव नियोजितवती, अनेकशश्च कारावासदुखमनुभूतवती। अन्तत सफलमनोरथा सती स्वदेशवासिना कृते पूज्या जाता। न तस्या वयो लिङ्ग वा तत्र कमपि विरोधमवरोध वोदपादयत्। ततोऽपि पूर्व राज्ञी दुर्गावती, राज्ञी लक्ष्मीबाई, ततश्च पश्चात् इन्दिरागान्धीप्रभृतयो नार्य स्व-स्वोत्कृष्टकर्मणा सर्वजनपूज्यत्वमवापु । अत सर्वथा न्याय्य समीचीन चोक्त महाकविना भवभूतिना गुणा पूजास्थानमिति।

# दानमेव गुणः श्लाघ्यः

भारतीयजीवने समस्तकर्मसु दानस्य सर्वाधिक माहात्म्यमनेनैव तथ्येन प्रकटीक्रियते यद् भगवान् श्रीकृष्णो गीताया केवलमिदमेव कर्मेति सज्ञया विभूषितवान् 'भूतभावोद्भवकरो विसर्ग कर्मसज्ञित (८।३) इति। 'विसर्गो द्रव्यत्यागो दानम्, तदेव 'कर्म' इति भगवद्वचसस्तात्पर्यम्। कस्य निमित्ताय विसर्ग करणीय ? देव मनुष्य-तेर्यगादीना निमित्ताय। कुत्र विसर्ग करणीय ? यज्ञ होमादिषु। एतदेव यज्ञहोमादिरूप वेसर्गात्मक कर्म समस्तभूतोद्भावकम्। यज्ञादेव हि समस्तभूतादिसृष्टि. पुरुषसूक्ते वर्णिता। गीतायामेवान्यत्र यज्ञदानादेर्महत्त्व वर्णयता भगवता श्रीकृष्णेन 'यज्ञ-दान-तप-कर्म न त्याज्य कार्यमेव तत्। यज्ञो दान तपश्चैव पावनानि मनीषिणाम्" (१८।५) इत्युक्तम्। अस्मिन् विषये बृहदारण्यकोपनिषद. पञ्चमाध्यायस्य द्वितीये ब्राह्मणे इय कथा आयाति-"त्रया प्राजापत्या प्रजापतौ पितरि ब्रह्मचर्यमूषुर्देवा मनुष्या असुरा। उषित्वा ब्रह्मचर्यं देवा ऊचुर्ब्रवीतु नो भवानिति। तेभ्यो हैतदक्षरमुवाच-द इति। व्यज्ञासिष्टा३ इति। व्यज्ञासिष्मेति होचुर्दाम्यतेति न आत्थेति। ओमितिहोवाच, व्यज्ञासिष्टेति। अथ हैन मनुष्या ऊचु ब्रवीतु नो भवानिति। तेभ्योहैतदेवाक्षरमुवाच द इति। व्यज्ञासिष्टा३ इति। व्यज्ञासिष्मेति होचु र्दत्तेति न आत्थेति। ओमिति होवाच, व्यज्ञासिष्टेति। अथ हैनमसुरा ऊचुर्ब्रवीतु नो भवानिति। तेभ्यो हैतदेवाक्षरमुवाच-द इति। व्यज्ञासिष्टा३ इति। व्यज्ञासिष्मेति होचुर्दयध्वमिति न आत्थेति। ओमिति होवाच, व्यज्ञासिष्ट इति। तदेतदेवैषा दैवी वागनुवदति स्तनयित्नुर्ददद इति, दाम्यत, दत्त, दयध्वमिति। तदेतत् त्रय शिक्षेत-दम दान दयामिति"। अनयाख्यायिकया सुस्पष्टमेतद् यद् वय काम दमेन, लोभ दानेन, क्रौर्यं च दयया जयेम। यद्यपि त्रिष्वेव त्रयमपि वर्तते, तथापि देवेषु काम, मनुष्येषु लोभ, असुरेषु च क्रौर्यमतिशयेन प्राधान्येन वा वर्तते। तस्मात् लोभस्य जयार्थं दानस्य वि शेषतोऽपेक्षा वर्तते मनुष्याणा कृते। तर्हीद प्रधान वैशिष्ट्यमस्माक सस्कृतेर्यद् दानमिति। अस्या आख्यायिकाया पूर्वमपि इय बृहदारण्यकश्रुतिर्यज्ञादिभि. सहास्य

दानस्य माहात्म्य प्रदर्शयति– 'त ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेनेति।'[1] एभिरनुष्ठितै क्रमेण ब्रह्मणो विविदिषा जिज्ञासा[2] वा, तया ब्रह्मणो ज्ञान श्रवणमनननिदिध्यासनाद्यन्तरङ्गसाहाय्येन, तेन च ज्ञानेन मोक्षावाप्तिस्तया च मानवजीवनस्य साफल्यम्। तस्मादेव 'धनानि जीवित चैव परार्थे प्राज्ञ उत्सृजेत्' इति प्रोक्तम्।

पितृपितामहपरम्परा-प्राप्ताया स्वेनार्जिताया वा स्वसम्पत्तेर्दानेन सहजलोभप्रवृत्तौ जयप्राप्तिर्मानवस्य सर्वतोऽधिक साफल्य जीवनस्य। यतो हि लोभो गीताया भगवतोक्तेषु त्रिषु नरकद्वारेष्वेकम्–'त्रिविध नरकस्येद द्वार नाशनमात्मन। काम क्रोधस्तथा लोभस्तस्मादेतत् त्रय त्यजेत॥' इति। लोभोऽयमात्मनो नाशनमतो यावच्छक्य *शीघ्रातिशीघ्रमस्मान्मुक्तिमवाप्नुयात् पुरुष स्वकल्याणमिच्छन्।*

सर्वेषु दानेषु सर्वभूतेभ्योऽभयदान सर्वोत्तमम्, यत इदम् दान भीत भूतम् अभयदातारं चोभयमपि अकुतोभय कुरुते। उक्त हि विष्णुपुराणे–' अभय सर्वभूतेभ्यो दत्वा यश्चरते मुनि। तस्यापि सर्वभूतेभ्यो न भय विद्यते क्वचित्॥' इति। अय हि प्राकृतिको नियमो यत् य प्राणिन कश्चिद्भाययति यो वा प्राणी कस्माच्चिद्बिभेति, तस्मादेव प्राणिनस्तस्यापि भय वर्तते। परस्पर प्रेम्णि जाते भय विनश्यति उभयपक्षीयम्। प्राणिषु इद प्रेम तस्यैव मनसि जायते यस्तेषु सममेव तत्त्वम्, एकमेवात्मान साक्षात्करोति। प्रेम्णि जाते सर्वेभ्यो भूतेभ्यो हिंसाभाव स्वयमेव विनश्यति। एवमभयदानमहिंसाभाव एव। अय च प्रभूतसाधनानन्तर सत्फलभूतोच्चभूमौ स्थितस्य महात्मन एव कृते सम्भवति। अतएव सन्यासग्रहणकालेऽस्याभयदानस्य विशेषेण विधानम्। सामान्यतस्तु अभ्याभ्यास पूर्वत एव करणीयो येन सन्यासग्रहणकाले गृहीतमेतद् व्रत सुराक्ष भवेत्, सन्यासग्रहण च वास्तविक स्यात्।

प्रायेणैतत्समकक्षमेव ब्रह्मदान, 'सर्वेषामेव दानाना ब्रह्मदान विशिष्यते' इत्युक्ते। ब्रह्म वेदस्तस्य दानमर्थात् वेदविद्याया सत्पात्रेभ्यो दानम्। अथवा ब्रह्म परमात्मा पुरुषोत्तम, सृष्टिकर्ता, तस्य दानम् अर्थात् तस्य ज्ञानस्य दानम्। एव योऽध्यात्मविद्यागुरु, सोऽपि तद्दानकर्मणा विशिष्यते। अतएवास्मच्छात्रेषूक्तम्–"अखण्डमण्डलाकार व्याप्त येन चराचरम्। तत्पद दर्शित येन तस्मै श्रीगुरवे नम॥" इति। यतो ब्रह्मज्ञान-दान

१ अनाशकम् अनशनमुपवासम्।
२ विचार।

मुक्तिद्वारमपावृणोत्यतो नैतस्माद्विशिष्टतरं किञ्चिदन्यत्। अतएव चैतत्कर्म-कर्तुर्गुरीयसी महत्त्वम्। अस्य महनीयकर्मणो महत्त्वं तु ब्रह्मयज्ञनाम्ना आन्हिकपञ्चमहायज्ञेषु समावेशादेववानप्रस्थेऽपि सुस्पष्टम्।

केवलाघो भवति केवलादीति हि श्रुतिः। अस्या अयमर्थो भवति—यः केवलादी केवलः एकलः अत्ति, स केवलाघः अर्थात् केवलमघमत्ति। यः परेभ्योऽदत्त्वैव भुङ्क्ते स पापमेव भुङ्क्ते। विष्णुपुराणेऽप्येवमेवोक्तम्-'अदत्त्वा विषमश्नुते' इति। तस्माद् देवेभ्यो मनुष्येभ्यो विश्वभूतेभ्यो दत्त्वैव भुञ्जीत। देवेभ्यः अग्नावाहुतिदानं देवयज्ञः, आगतेभ्यो मनुष्येभ्यो भोजनदानमतिथियज्ञो नृयज्ञो वा, पितृभ्योऽन्नपिण्डदानं पितृयज्ञः, विश्वभूतेभ्योऽन्नबलिर्भूतयज्ञो भूतबलिर्वैश्वदेवबलिर्वाच्यते। गृहस्थस्य वानप्रस्थस्यापि च कृते एतत् त्रयमान्हिकेषु पञ्चमहायज्ञेषु अवश्यकरणीयकर्मरूपेण मन्वादिशास्त्रेषु विहितम्—'अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम्। होमो दैवो, बलिर्भौतो, नृयज्ञोऽतिथि-पूजनम्॥ देवतातिथिभृत्यानां पितॄणामात्मनश्च यः। न निर्वपति पञ्चानामुच्छ्वसन् न स जीवति॥' इति। देवयज्ञस्य महत्त्वं गीतायामपि भगवता सुस्पष्टं प्रतिपादितम्—'सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः। अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक्॥ देवान् भावयतानेन ते देवा भावयन्तु वः। परस्परं भावयन्तः श्रेयः परमवाप्स्यथ॥ एवं प्रवर्तितं चक्रं नानुवर्तयतीह यः। अघायुरिन्द्रियारामो मोघं पार्थ स जीवति'॥ इति। एवं देवेभ्योऽन्नमयं पुरोडाशं दत्त्वैवान्नाशनं परं श्रेयःकारणं भवति, जीवनं चामोघं करोति।

मनुक्तौ स्थितं 'भृत्यानाम्' इति पदमन्येषामपि उपलक्षणं दीनदुर्बलबुभुक्षितादिजनानाम्, येन 'दरिद्रान् भर कौन्तेय' 'कामये दुःखतप्तानां प्राणिनामार्तिनाशनम्' इत्यादिसूक्तयः प्राचीनग्रन्थरत्नेषूपलभ्यन्ते। तेन बुभुक्षितेभ्योऽन्नदानं नग्नेभ्यो वस्त्रदानं च सर्वथा करणीयमेव। किन्तु प्राणभयभीतेभ्यः शरणदानमत्युत्कृष्टम्। इदमन्नादिदानेभ्यश्चापि विशिष्यते। मा भैषीर्मा भैषीरित्युक्त्वा शरणदानं वस्तुतः ...भ्योऽभयदानमेव यद्यपि, तथापि पूर्वोक्ताभयदानादवरकोटिकमेतत्, ज्ञानभूमि-...त्वानस्य। किन्त्वन्येभ्योऽस्य प्राणदानस्य महत्त्वमधिकतरमेव, प्रियेभ्योऽन्येभ्यः सर्वेभ्य ...तरत्वात्प्राणस्य, 'जीवन्नरो भद्रशतानि पश्येद्' इति न्यायाद् असङ्ख्यभद्रप्राप्ति-...रणत्वाच्चास्य। उशीनरनरेशस्य शिवेश्चरितं सुप्रथितं को नाम जनो न जानाति। स

शरणागतस्य कपोतस्य रक्षार्थं श्येनाय तत्सम मास स्वशरीरादुत्कृत्योत्कृत्य ददौ। कपोतवेषधारी अग्निदेव श्येनवेषधारी चेन्द्रदेवो, द्वौ दानवीरस्योशीनरनरेशस्य परीक्षार्थं तत्पार्श्वमागतौ। यदोत्कृत्योत्कृत्य दत्त मास श्येनेन सम न बभूव तदा महाराज शिवि स्वयमेवारुरोह तुलाम्। एव कृते प्रसन्नौ तौ देवौ स्वरूप प्रकटय्याभीष्टवरयाचनार्थं तमन्वरन्धाताम्। दिवश्च तस्योपरि पुष्पवृष्टि पपात।

एवमनेकप्रकारकस्य दानस्य महिमा सुस्पष्ट एव। दानस्यैव महिम्ना पशुषु कामधेनु, पादपेषु कल्पवृक्ष, पाषाणेषु च चिन्तामणि सर्वैरेव पूज्यन्ते। सुष्ठूक्त केनचित् कविना—

'दानेन श्लाघ्यता यान्ति पशुपाषाणपादपा।
दानमेव गुण श्लाघ्य किमन्यैर्गुणकोटिभि'॥ इति।

□

# सर्वे गुणाः काञ्चनमाश्रयन्ते

उक्तिरिय

> 'यस्यास्ति वित्त स नर कुलीन,
> स पण्डित स श्रुतवान् गुणज्ञ ।
> स एव वक्ता स च दर्शनीय
> सर्वे गुणा काञ्चनमाश्रयन्ते ॥'

इत्यस्य श्लोकस्यान्तिमा पङ्क्ति । इय गम्भीरबुद्धेरान्तरिकदृष्टिसम्पन्नस्यापि भर्तृहरेरनतिगम्भीर वच प्रतिभाति। काञ्चन सर्वतोऽधिक महार्घो धातु । अतो बहुमूल्यधनस्य वाचकमेतत् पदम्। यस्य कस्यापि पार्श्वे वर्तते धातुरय, स धनि- नामग्रणीर्गण्यते। धनिका एव गुणिनामग्रगण्या सर्वगुणसम्पन्ना इत्यस्या उक्तेरभिप्राय । सामान्यत इयमवितथा यथार्था च प्रतिभाति, यतो हि साम्प्रत सर्वत्र धनवतामेव समादर सम्मानश्च दृश्यते। गुणवतस्तु प्रायेणोपेक्षैव सर्वत्र दृष्टिपथमायाति। अतएवेदानी 'गुणा पूजास्थान गुणिषु' इत्यादि कथन सदप्यविचारिताभिधान व्यभिचारि वचो मन्यते जनै । अतएव च ते सुखेप्सया सुखैकसाधनस्य वित्तस्यार्जने तत्परा दृश्यन्ते, न चान्तरिकगुणानामर्जनाय तेषा रुचि प्रयासो वा परिलक्ष्यते। कथ वा गुणार्जनाय प्रयासोऽभिलक्ष्येत यदा समेषा व्यवहाराणा सर्वेषा लौकिकसुखसाधनाना, सकलाभ्युदयाना सर्वविधशिक्षादीना च मूलभूत साधन वित्तमेव परिलक्ष्यते। सम्भवत इदमेव व्यावहारिक तथ्य मनसि कृत्वा भर्तृहरिसदृशेन मनीषिणाप्येवमुक्तम्।

न केवल भर्तृहरिणैव, अन्यैरप्यनेकैर्लब्धप्रतिष्ठैर्ग्रन्थकृद्भिरेवमेवोक्त, यथा पञ्चतन्त्रे तत्कर्त्रोक्तम्—

> 'तानीन्द्रियाण्यविकलानि तदेव नाम,
> सा बुद्धिरप्रतिहता वचन तदेव।
> अर्थोष्मणा विरहित पुरुष क्षणेन,
> सोऽप्यन्य एव भवतीति विचित्रमेतत्॥'

इति। धनविरहितो विद्वानपि अविद्वान्, गुणवानपि अगुणी कुलीनश्चाप्यकुलीनो भवति लोकदृष्टाविति 'सोऽप्यन्य एव भवति' इत्यस्य तात्पर्यम्। सर्वतोऽधिकं कष्टकरं त्विदमेव यदर्थविगमे मित्राण्यपि, बन्धुबान्धवा अपि गृहागमनं परित्यज्य सम्बन्धं विच्छिन्दन्ति। तत एव भासचित्रितश्चारुदत्तः दारिद्र्यविषये स्वानुभवं प्रकटयन् एवं कथयति—'सुखात्तु यो याति दशां दरिद्रतां स्थितः शरीरेण मृतः स जीवति'। वस्तुतो धनहीनस्य जीवनं मरणकल्पमेव। शूद्रकस्यापि चारुदत्तो मृच्छकटिके एकत्र सदृशं मनोभावं प्रकटयति। अन्यत्र स धनविरहितामवस्थां सर्वापदामास्पदं ब्रवीति—

'दारिद्र्याद्ध्रियमेति ह्रीपरिगतः प्रभ्रश्यते तेजसो,
निस्तेजाः परिभूयते परिभवान्निर्वेदमापद्यते।
निर्विण्णः शुचमेति शोकपिहितो बुद्ध्या परित्यज्यते,
निर्बुद्धिः क्षयमेत्यहो निर्धनता सर्वापदामास्पदम्॥'

इति। अस्मिन् श्लोके निर्धनतया कृतां दुर्दशां चित्रयित्वा कविर्वस्तुतो धनस्यैव माहात्म्यमन्यथा प्रकटीकरोति। धनहीनः प्रथमं तेजसो हीनो भवति, तेजोहीनः परिभवं प्राप्नोति, परिभवान्निर्वेदं, निर्वेदाच्छोकं, शोकाद् बुद्धिक्षयं, बुद्धिक्षयाच्च सर्वक्षयम्। एवं धनाभावात् सर्वनाशो भवति पुरुषस्येति सर्वथा सत्यमेव व्यावहारिके लोके।

किन्तु किमिदं न सत्यं यद् यादृशी प्रतिष्ठा यादृशः सम्मानः समादरश्च, विद्याविनयचारित्र्यादिगुणैर्विभूषितानां महतां धनाभाववतामपि भवति, न तादृशः सम्मानः समादरो वा धनपशूनां भवति ? वास्तविकी प्रतिष्ठा तु विविधविद्याविनयादिगुणैः समलङ्कृतानामेव भवति। सर्वेषां शिष्टपुरुषाणां मनसि धनपशूनां प्रतिष्ठा प्रायेण तु औपचारिक्येव, प्रदर्शनप्रधानैव, न वास्तविकी। प्रतिष्ठायाः पञ्चकारणेषु धनमप्येकं परिगण्यते मनुना किन्तु तद्दृष्ट्या तत् सर्वतोऽवरम्। एतद्विपरीतं विद्याधनं पञ्चकारणेषु सर्वप्रधानं प्रथमस्थानीयं च। एतस्माद् विचारादपरिमितस्तोषो भवेद्विद्यादिगुणवताम्। इदमपरं तोषकारणं तेषां भवेद् यदपरिमितश्रमेणार्जितं धनं न स्थायि। तथ्यमेतत् कविभिः सुष्ठु प्रकाशतां नीतम्। भागवते दैत्यपुत्रान् प्रति भगवद्भक्तिमुपदिशन् महाभागवतः प्रह्लादो यदकथयत् तच्छाश्वतं सत्यं न केनापि श्रेयस्कामेनोपेक्षितुं शक्यते—

"राय कलत्र पशव सुतादयो गृहा मही कुञ्जरकोषभूतय।
सर्वेऽर्थकामा क्षणभङ्गुरायुष कुर्वन्ति मर्त्यस्य कियत् प्रिय चला ॥"

इति। सर्वेऽर्था कामश्च स्वयमेव क्षणभङ्गुरा नलिनीदलस्थितजललवा इव। सर्वथाऽस्थिरा अर्था प्रयत्नशतैरपि धार्यमाणा दुर्धरा, प्रशस्ताराधिता अपि अन्ते विप्रलम्भिन [१], पवनगतिरिवातिचञ्चला, अनार्यसङ्गतिरिवास्थिरा, सान्ध्यमेघा इव[२] मुहूर्तरागा [३], जलबुद्बुदावलीव स्वभावभङ्गुरा, स्वाप्निकपदार्थ इव क्षणदृष्टनष्टाश्च। अतो न किमपि स्थायि प्रियमाचरितुमेतेऽर्था समर्था। एव सत्या वस्तुस्थितौ किमेतयो सङ्ग्रहेण ? किरातार्जुनीये युधिष्ठिरेणापि भीम प्रति एवमेवोक्तम्–

"शरदभ्रचलाश्चलेन्द्रियैरसुरक्षा हि बहुच्छला श्रिय"

अन्यत्रापीदमेव तथ्यमुत्कृष्टरीत्या प्रकटीकृतम्–

'सर्वे क्षयान्ता निचया पतनान्ता समुच्छ्रया।
सयोगा विप्रयोगान्ता मरणान्त च जीवितम् ॥'

इति। इद शाश्वत सत्य यत् कवेर्वाण्या प्रकटितम्। धनाभावस्य पीडामनुभवता सत्पुरुषेणावश्यमेवेद सत्य सदैव धारणीयम् ॥

अन्यच्चाप्येक धनविषयक तथ्य पञ्चतन्त्रकारेण विवृत, यस्य ज्ञान महते तोषाय भवेद्विदुषा गुणिना च निर्धनानाम्। तत्तथ्य केनापि अन्तर्दृष्टिना कविनैव विव्रियते–

'सुसञ्चितैर्जीवनवत् सुरक्षितै-
र्निजेऽपि देहे न नियोजितै क्वचित्।
पुसो यमान्त व्रजतोऽपि निष्ठुरै-
रेतैर्धनै पञ्चपदी[४] न दीयते ॥'

---

१ धोखेबाज
२ सायङ्कालीन मेघपटल की भाँति।
३ सान्ध्यमेघ पक्ष में, 'क्षण भर के लिये लाल'। धन के पक्ष में 'क्षणिक प्रेम करने वाले या क्षण भर के लिये मैत्री करने वाले।'
४ पाँच पैर। दुनियाँ छोडकर जा रहे व्यक्ति के शव के साथ शत्रु भी शत्रुता भुला कर मरघट तक न सही, कुछ दूर तक जाता है, ऐसी लोकरीति है।

इति। कीदृक् कृतघ्नान्येतानि धनानि, कियन्निष्ठुराणि कियदधमानि च, यानि अहर्निशप्रयासैरर्जितान्यपि, सर्वोपायैर्जीवनवत् सुरक्षितान्यपि, स्वदेहेऽप्यनियोजितान्यपि यमालयं व्रजतोऽपि पुंसो नैवानुव्रजन्ति नैवानुसरन्ति। अनुसरणस्य तु चर्चा दूरेऽपास्ता, एतैर्धनैः पञ्चपद्यपि न दीयते। इतः परलोकान् गच्छता जनेन सह तच्छत्रवोऽपि शत्रुभाव विस्मृत्य पञ्च पदानि यावत् गच्छन्ति, नैतानि अधमानि धनानि। किम्प्रयोजनानि तर्हि धनान्येतानि, किमर्थका स्वार्जिता अर्थाः ? तर्हि अलमेवानर्थानर्थाल्लिप्स्या ?

अन्यच्च, ऋद्धिश्चित्तविकारिणीति तथ्यमेतद्, ध्रुवसत्यमिति सदैव मनसि धारणीयम्। येन यदि सततपरिश्रमैः अनुकूलदैवेन च कदापि धनं प्राप्येत, न तेन दुर्मदान्धो जनो भवेत्। यतो ह्यस्य भयङ्करः परिणामो भवति। अप्रतिमप्रतापी रावणो मर्त्यामर्त्यासुरान् जित्वाऽपरिमितं धनं च सगृह्य सुवर्णमयीं लङ्कां निर्मितवान् दुर्मदान्धश्च जातः। किन्तु अन्ततः स सकुलः श्रीरामस्यामोघैः शरैर्हतः।

एतया समस्तया चर्चया इदमेव वक्तुमभिप्रेतं यद् व्यवहारादिसिद्धये जीवनयात्रानिर्वाहाय यज्ञदानादिपुण्यकर्मसम्पादनाय चापेक्षितं धनमवश्यमेव न्यायपूर्वकमुपार्जयेत्। किन्तु '*सर्वे गुणाः काञ्चनमाश्रयन्ते*' इति विचारं मनसि कदापि नैव कुर्यात्। यतो हि न तद्धनं प्रतिष्ठाकारणेषु प्राधान्यं भजते। परलोकादिकमपि दुर्मदादिविकारजनकेन तेन न तावत् साधितं यावद् विनाशितं भवति। ऋद्धिर्हि चित्तविकारिणी भवत्येव स्वप्रकृतितः। तस्मात् जीवनापेक्षापूर्तये पर्याप्ताय धनाय पुरुषार्थं विदधदपि यदृच्छालाभमात्रेण जीवननिर्वाहं कुर्वन् वसेत्, न चाधिक्यप्राप्तये चौर्यलुण्ठनादिकमनैतिकं कार्यं कुर्यात्, न वा याचनादिकमाश्रयेत्। यतो हि, प्रथमं तु अन्येषां जनानां क्लेशकरत्वान्नैव कथमपि अभिलषणीयं धनं, यथोक्तं नीति-निपुणेन चाणक्येन—

'अन्यक्लेशेन ये चार्था, धर्मस्यातिक्रमेण च।
शत्रूणां प्रणिपातेन ते ह्यर्था मा भवन्तु मे॥'

इति। द्वितीयं पुनः 'तृणादपि लघुस्तूलास्तूलादपि च याचकः', 'याच्ञा च लाघवकरी' इत्याद्युक्तेः,याचनायाः लाघवकरत्वात् मनस्सन्तापकरत्वाच्चापि धनं सर्वथैव अवरणीयम्॥

□

## कस्यात्यन्तं सुखमुपनतं दुःखमेकान्ततो वा

मेघदूतस्यास्मिन् सन्दर्भे कालिदासेन मानवजीवनस्यैक शाश्वतसत्य प्रकटीकृतम्। अय सन्दर्भस्तस्य सन्देशस्यैकांऽशोऽस्ति य विरही यक्ष स्वप्रिया विरहिणी यक्षिणी प्रति मेघद्वारेण प्रेषयति। सम्पूर्ण सन्देशस्त्वीदृश–प्रियसखि । इतश्चतुर्भ्यो मासेभ्य पश्चात् प्रबोधिन्यामेकादश्या भगवति विष्णौ शेषशय्यात उत्थिते मम शापस्यान्तो भविष्यति। तदनन्तर भविष्यमाणे सयोगे विरहगुणित त तमात्माभिलाष नितरा भोक्ष्यावहे इत्येव बहु विगणयन्नहमिदानीमात्मनैवात्मानमवलम्बे। तत् त्वमपि हे कल्याणि । अत्यन्त कातरत्व मा गम। यतो हि न कस्याप्यत्यन्त सुखमेकान्ततो दुख वा जगत्यस्मिन्नुपनत प्राप्त वा भवति। मनुष्यदशा चक्रनेमिक्रमेण चक्रनेमिपरिपाट्या कदाचन नीचैरधो गच्छति कदाचन चोपरि गच्छति न कदापि समाना भवतीति। ध्रुवसत्यमेतद् मानवजीवनस्य यत् 'चक्रवत् परिवर्तन्ते दुखानि च सुखानि च' इति।

अस्यैव भावस्य समर्थनम् पुष्टि वा कुर्वता पञ्चतन्त्रकृताऽपि स्वीये काकोलूकीयाख्ये तृतीये तन्त्रे एवमुक्तम्–

'न च कश्चिदनधिगमनीयो नामास्त्यापदाम्। उक्त च–

> रामस्य व्रजन, बलेर्नियमन, पाण्डो सुताना वन
> वृष्णीना निधन, नलस्य नृपते राज्यान् परिभ्रशनम्।
> नाट्याचार्यकमर्जुनस्य, पतन सञ्चिन्त्य लङ्केश्वरे
> सर्वं कालवशाज्जनोऽत्र सहते, क क परित्रायते॥'

इति। कथनस्यास्य तात्पर्यमिदमेव यद् यदि भगवतो रामस्यापि वनवासो भवितु शक्नोति, यदि दैत्यराजस्य भगवद्भक्तस्य महाराजस्य बलेर्नागपाशेन बन्धन सम्भवति, एव पाण्डवाना महाबलशालिना द्वादशवर्षावधिको वनवासस्त्रयोदशवर्षे च गुप्तवास सम्भवति, यदि पुनर्यादवानामसङ्ख्याना परमबलवता नाश सम्भवति, पुण्यश्लोकस्य राज्ञो नलस्य राज्यात् परिभ्रशन पतन वा भवेच्चेत्, वैराट्या उत्तराया प्रशिक्षणार्थं अर्जुनस्य

नाट्याचार्यपदग्रहण यदि सम्भवति यदि च पुनरपि स्वर्णमय्या लङ्काया स्वामिनो परमैश्वर्यशालिनो देवानामप्यजय्यस्य लोकरावणस्य रावणस्यापि विनाशो भवेत्, तर्हि को नाम जनो जगत्यस्मिन् आपदामनभिगमनीयोऽविषयो वा भवेत्। वामे सति विधौ, दैवे विपरीतता गते, काले वाऽननुकूले जाते विपद आपतन्त्येव। तारच प्रतिकूलकालवशात् जन सहते सोढु विवशोऽगतिकत्वात्।

वस्तुतस्तु नद्या द्वे तटे इव जीवन नद्या अपि सुखदु खाख्ये शुभाशुभाख्ये वा द्वे तटे वर्तेते। अनयोर्द्वयोर्मध्ये इय जीवनसरित् प्रवहति, कदाचन सुखतट सस्पृशन्ती कदाचन दुखतट, कदाचन चोभयतटम्। न किमपि तादृश सुख यद् दु खसम्भिन्न नैव वर्तते। एव दु खेऽपि यदा कदापि सुखलेशस्य सम्पर्को भवत्येव। एवमेव मानवजीवन चलति।

इद तु विदितचर नज्य यद् धर्माधर्मयो पुण्यपापयोर्वा सम्मिलतयोर्मिश्रितयोर्वा फल मानवयोनौ जन्म, धर्मेण केवलेन देवयोनौ, अधर्मेण च केवलेन तिर्यगादि नारकीययोनौ। एव सति धर्माधर्मयो पुण्यपापयोर्वा सुखदु खाख्ये फलेऽवश्यम्भाविनी, अनिवार्यतयैव च भोक्तव्ये। तर्हि तथ्यमेतन्निश्चित ध्रुव वा मत्वा द्वयोरेवावस्थयो समभावेन वर्तितव्यम्। सुखावस्थाया न बहूल्लास प्रदर्शयेत् न वा दु खावस्थायामत्यधिक विषाद कुर्यात्। अस्मिन् विषये लोकशिक्षणार्थं मनुजलीला विदधतो भगवतो रामचन्द्रस्यादर्श सर्वथा सर्वदा च समक्ष निधातव्य। वैभवे समृद्धौ च इन्द्रस्य सम कुर्वतोऽयोध्याधिपते स्वपितुर्दशरथस्य स्वर्गसमकक्षराज्यस्य यौवराज्येऽभिषिच्यमानोऽपि मानिनामग्रणी राम उल्लास नानुवभूव, तस्य मुखश्री प्रसाद नानुभवति स्म। - चानन्तरमेव दीयमानेन दुस्सहवनवासेनासौ मनोहरा मुखश्रीर्भगवत कथमपि मम्लौ अयमेवादर्शो भगवता जगद्गुरुणा देवकीनन्दनेन श्रीकृष्णेनार्जुनायोपदिष्ट श्रीमद्भगवद्गीतायाम्। तत्रैवमुक्त भगवता पार्थं प्रति–

'दु खेष्वनुद्विग्नमना सुखेषु विगतस्पृह।
वीतरागभयक्रोध स्थितधीर्मुनिरुच्यते॥
य सर्वत्रानभिस्नेहस्तत्तत्प्राप्य शुभाशुभम्।
नाभिनन्दति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता॥' इति।

यस्य बुद्धि सुखदुःखे शुभाशुभे वा पारयितु न समर्था, शुभ प्राप्य तदभिनन्दति अशुभ च प्राप्य तद् द्वेष्टि तेन विषण्णो वा भवति, न स स्थितप्रज्ञो भवितु समर्थ । न तस्य प्रज्ञा स्थिरा भवति, सिद्ध्यसिद्धिभावनया शुभाशुभभावनया सुखदुःखभावनया वा सर्दैव चञ्चलत्वात्। तस्मादुभयोरेव स्थित्यो समेन भाव्य तथा सत्येव मनस शान्ति सम्भाव्या। सुखदुःखादिद्वन्द्वसहनमेव तप, तच्च तपश्चरित्वा तद्बलेन सर्वमसाध्य साधयेत्। यतो हि 'सर्वं तु तपसा साध्य तपो हि दुरतिक्रमम्' इति।

सुखदुःखयोरतिक्रमणस्य, शुभाशुभयोरुपरि स्थिते शिक्षा न केवल सता महापुरुषाणा महनीयचरितादेव प्राप्यतेऽपितु प्रकृतेरपि। भगवानशुमाली जगत्प्रसविता सविता स्वोदयकाले यथा ताम्रस्तथैव स्वास्तमनकालेऽपि। तथ्यमेतदिम सङ्केत ददाति यत् सुखदुःखयो सम्पत्तिविपत्त्योर्वा महान्त एकरूपा एव भवन्ति, समत्वेनैव व्यवहरन्ति। साधूक्त केनापि मनीषिणा–

'उदेति सविता ताम्रस्ताम्र एवास्तमेति च।
सम्पत्तौ च विपत्तौ च महतामेकरूपता॥' इति

स्वसर्वस्वेऽभिज्ञानशकुन्तले एकत्र युगपज्जायमानौ सूर्यचन्द्रमसोरुदयास्तमयौ वर्णयन्नुत्प्रेक्षते कविकुलगुरु यत् तेजोद्वयस्य युगपद्व्यसनोदयाभ्या लोक प्रतिक्षण परिवर्तमानेषु स्वदशाविशेषेषु अनुशास्यत इव। प्रकृतिरनुशास्तीव सर्वं लोक यद् व्यसनोदयौ समानभावेनैव ग्रहणीयौ, नोदये अट्टहासो न च व्यसने उच्चै क्रन्दनम्। स्वीययाऽननुकरणीयया शैल्या कविकुलगुरु कालिदास एव वस्तुत उपदिशति–

'यात्येकतोऽस्तशिखर पतिरोषधीनाम्
आविष्कृतोऽरुणपुरस्सर एकतोऽर्क।
तेजोद्वयस्य युगपद्व्यसनोदयाभ्या
लोको नियम्यत इवात्मदशान्तरेषु॥' –(शाकु ४। २)

पूर्वमेवोक्त यच्छुभाशुभकर्मणो फलत्वेनैव सुखदुःखयो प्राप्तिर्भवति, न चेमे सुखदुःखे कथमपि निवार्ये यतो हि कृतकर्मणा भोगेनैव क्षय इति। तस्मात् कर्मफलस्य बलीयस्त्वादनिवार्यत्वादवश्यम्भावित्वाच्च दुःखोदधौ निमग्नेन वराकेण धैर्यपूर्वक तद्दुःख सहनीय न तत् कथमपि प्रतिविधेय वर्तते। धैर्यमाश्रित्यैव लोका विपत्पयोधे पार

गन्तु समर्था । यथा पारावारे पोतभङ्गे जाते सायात्रिको धैर्यमवलम्ब्य सर्वथा तर्तुमेवेच्छति, तथैव विपद्ग्रस्तोऽपि जनोऽविकल सन् स्वशक्तिमाश्रित्य धैर्येण प्रतिविदध्यादनुकूलसमय च प्रतीक्षमाणस्तिष्ठेत् । कालान्तरे विपदा प्रहाण तु भवेदेव। आत्मरक्षार्थं स्वशक्त्या सतत प्रयतमानस्यैव देवा अपि साहाय्य विदधतीति हि नीति । 'न ऋते श्रान्तस्य सख्याय देवा इति ह्युपदिशति ऋग्वेद । तस्मात् 'कस्य सौख्य निरन्तरमिति विचारयन् साहसेन धैर्येण शक्त्या चागता विपदमुपनत दु ख वा प्रतिकुर्यात् । स एव पुरुषो यो दु खोदधि तर्तुं विशेषत प्रयतते, सबल चेष्टते । उक्त हि महामतिमता मनीषिणा भर्तृहरिणा यद्,

'यस्य न विपदि विषाद सम्पदि हर्षो रणे न भीरुत्वम्।
त भुवनत्रयतिलक जनयति जननी सुत विरलम्॥'

इति । य सुखदु खयो समस्तिष्ठन् हर्षविषादशून्यो भवति, स भुवनत्रयतिलकायमानो विरल एव सुतो य प्रसूय ज्स्य जननी धन्या मान्या च भवति ।

□

# आदिकवेरादर्शनृपतिः रामः

आदिकविना कृते रामायणे धर्मार्थकाममोक्षाख्यस्य पुरुषार्थचतुष्टयस्य विशेषतश्च धर्मस्य राजनीतेश्चापि अनन्यत्रोपलभ्य सुमनोहर विविध वर्णनमनेकशोऽवाप्यते। वर्णनापेक्षया सर्जनमादर्शाना, सर्जन स्वस्थसांस्कृतिकधार्मिकपरम्पराणा सर्जन च सर्वहितकारिण्या राजनीते कृतमादिकविनेत्यवधातव्यम् वस्तुतस्तु सर्वगुणसम्पन्न प्रजाप्राण सद्धर्मप्रवणो बलाहक्वतो नृपतिरेव राष्ट्रस्य सर्वविधसमृद्धे, सर्वविधसामञ्जस्य-स्यमूलम् इति दृढा प्रतीतिर्जायते वाल्मीके रामायणस्याध्ययनात्। अतोऽयमेव पक्ष साम्प्रतमुद्घाटयितु प्रयत्यते। शासनतन्त्र राजाश्रित वा स्याल्लोकाश्रित वा, तत्र प्रशास्तैव महीयते। राजतन्त्रे राजा, लोकतन्त्रे च लोकनिर्वाचिताश्शासनप्रतिनिधय एव प्रभवन्ति। त एव प्रजाऽऽचरणनियामका व्यवहारसहितानिदर्शनभूतास्तिष्ठन्ति। रामायणकारो वाल्मीकिस्तादृशमेव लोकाभिवन्द्यचरित कमपि महापुरुष स्वोपज्ञमहाकाव्ये नायकीकर्तुकामो देवर्षि नारद सादर पृच्छति—

"कोऽन्वस्मिन् साम्प्रत लोके गुणवान् कश्च वीर्यवान्।
धर्मज्ञश्च कृतज्ञश्च सत्यवाक्यो दृढव्रत ॥
चरित्रेण च को युक्त सर्वभूतेषु को हित।
विद्वान् क क समर्थश्च कश्चैकप्रियदर्शन ॥"

इति। एतस्योत्तररूपेण यन्निवेद्यते देवर्षिणा, तदवधातव्य वर्तते। तदेवम्—

"धर्मज्ञ सत्यसन्धश्च प्रजाना च हिते रत।
रक्षिता जीवलोकस्य धर्मस्य परिरक्षिता ॥
स च सर्वगुणोपेत कौसल्यानन्दवर्धन।
अग्निना सदृश कोपे धर्मेण हिमवानिव ॥"

इत्यादि। राष्ट्रनायके राज्ञि विराजमानेय चारित्र्यसम्पदेव राष्ट्रीययोग-क्षेमयोर्मूलमन्त्र। "यद् यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः" इति यदुक्तं श्रीमद्भगवद्गीतायां, तदवितथमेव, यथार्थमेव। भ्रष्टे लोकनायके प्रजापि क्रमशः भ्रष्टा भवति। अतएव लोकतन्त्रकर्णधारैः राष्ट्रनायकैर्मन्त्रिभिश्च सततमनुकरणीयचरित्रैरेव भाव्यम्। अन्यथा समाजोऽपि तदनुकरणेन भ्रष्टत्वाद् भिन्नमतिर्भविष्यति। तथा च सति वर्धिष्यन्तेऽमर्षेर्ष्याकलहादिप्रसवभूमयः विविधा विवादाः। समाजे भिन्ने सति, पृथक्त्वधर्षिते मति, क्व नु खलु सौराज्यं सामञ्जस्यं सामरस्यं राष्ट्रियैक्यं वा ? आदिकविना प्रतिपादितम् एतद् राजनीतिरहस्यं सुष्ठु अवधातव्यम्।

राष्ट्रिय सामञ्जस्यं कथमराजके जनपदे भवेत इति महता विस्तरेण चित्रितमादिकविना। सा दुःस्थितिरद्यापि प्रभवति नैकेषु राष्ट्रेषु। अराजकं राष्ट्रं सर्वथा तथैव यथा अगोपाला गावः, अतृणं वनम्, अनुदका नद्यो वा। यज्ञशीला द्विजातयः, शासितव्रता दान्ता तपस्विनः, प्रहृष्टा नटनर्तकाः, सिद्धार्था व्यवहारिणो, दूरगामिनो वणिजः, शास्त्रविशारदा विद्वांसश्च अराजके राष्ट्रे नाऽभ्युदयं लभन्ते।

तद्यथा रामायणकारः,

> नाराजके जनपदे धनवन्तः सुरक्षिताः।
> शेरते विवृतद्वाराः कृषिगोरक्षजीविनः॥

इत्यादिना सौराज्यं चाभ्युदो राजमूलमिति कृत्वा राज्ञः सच्चारित्र्यमेव साभिनिवेशं साकूतं निदर्शनीक्रियते रामायणकारेण।

अतोऽप्यपरः एकः पक्षो व्याख्यामपेक्षतेऽत्र। बन्धुत्वभावो नाम राष्ट्रियैक्यतायाः अपरः पक्षः। स्वार्थान्धतैव समेषां सङ्कटानां जननी। आत्मनः प्रतिकूलानि परेषां न समाचरेदिति यदुक्तं मनुस्मृतौ तदेव सत्यम्। यदि नाम सर्वे जनाः स्वग्रामवास्तव्यान् जानपदान् राष्ट्रवासिनः प्रातिवेशिकान् मानुषिकान् वाऽऽत्मबन्धून् स्वीकुर्युस्तर्हि रागद्वेषयोरीर्ष्यामर्षयोश्च कथैव नामशेषा स्यात्। परन्तु क्वेदं सम्भवति ! यथा गजस्य दन्ता भक्ष्यजातचर्वणाय अन्ये, प्रदर्शनाय च अन्य एव तिष्ठन्ति, सर्वदा तथैव समाजे सर्वेऽपि जना द्विधा जीवनपद्धतिं जीवन्ति। आत्मनः कृते आत्मीयानां च तेषां व्यवहारा अन्ये, परेषां च कृते अन्ये एव भवन्ति इदं व्यवहारपार्थक्यमेव समाजे विद्वेषस्य

कारणम्। सत्यमेतत् प्रत्यक्षीकुर्वन् आदिकवि मर्यादापुरुषोत्तमे रामे लोकाराधनक्षम राष्ट्रमङ्गलकर समदृष्टिपोषक सर्वबन्धुत्वभावमेव पुष्णाति। चित्रकूट रामानुनयार्थं ससैन्यमागच्छन्त कुमार भरत दृष्ट्वा तच्चरित्रमाशङ्कमानस्तन्निष्ठा च सन्दिहाना लक्ष्मणा यावदेव तद्वधाय सज्जो भवति तावदेव करुणावरुणालयो रामो ब्रवीति–

यद् द्रव्य बान्धवाना वा मित्राणा वा क्षये भवेत्।
नाह तत्प्रतिगृह्णीया भक्ष्यान् विषकृतानिव॥
भ्रातृणा सग्रहार्थं च सुखार्थं चापि लक्ष्मण।
राज्यमप्यहमिच्छामि सत्येनायुधमालभे॥
नेय मम मही सौम्य दुर्लभा सागराम्बरा।
नहीच्छेयमधर्मेण शक्रत्वमपि लक्ष्मण॥
यद्विना भरत त्वा च शत्रुघ्न चापि मानद।
भवेन्मम सुख किञ्चिद् भस्म तत्कुरुताच्छिखी॥

इति। एभिर्वाक्यैर्महामहिमशालिनो रामभद्रस्य देवोपमा सद्गुणा स्फारीभवन्ति। किमीदशी सहजबन्धुता नि स्वार्थता समदर्शिता निरीहता चान्यत्र दृग्गोचरीकर्तुं शक्यते ? रामस्य मर्यादापुरुषोत्तमत्वप्रतिभू भूता इमे गुणा कुटुम्बपरिवारराज्यादीना शान्ति रक्षन्तो राष्ट्रस्यापि शान्ति शक्ति च रक्षिष्यन्तीत्यादिकवेर्गूढाभिप्राय।

लोकतन्त्रात्मके राष्ट्रे मन्त्र एव सर्वाभ्युदयमूल भवतीत्यादिकविर्वाल्मीकि स्वीकरोति। रामायणे वर्णिता सा मन्त्रव्यवस्थाऽद्यापि सम्यक्तया चरितार्थाऽवलोक्यते। दुर्व्यवस्थिते मंत्रे क्व राष्ट्रस्य मङ्गलम् ? मन्त्रो हि नाम शासनतन्त्रम्। यस्मिन् राष्ट्रे अयोग्या दुश्चरित्राश्च मन्त्रिणो नियोजिता स्युस्तद्राष्ट्र कियत्कालपर्यन्तमक्षुण्ण भ विष्यति ? वस्तुत प्रतिभासमादरो गुणाग्रह सत्पात्रताप्रतिष्ठा च राष्ट्रम् एकसूत्रेणाबद्धु शक्नुवन्ति।

कैकयीनन्दन कुमार भरतमनामयकुशलादिक पृच्छन् रामो भणति–

"मन्त्रो विजयमूल हि राज्ञा भवति राघव।
सुसवृतो मन्त्रिधुरैरमात्यै शास्त्रकोविदै॥

कच्चिन्मन्त्रयसे नैक. कच्चिन्न बहुभि सह।
कच्चित्ते मन्त्रिणो मन्त्रो राष्ट्र न परिधावति॥
कच्चिदर्थं विनिश्चित्य लघुमूल महोदयम्।
क्षिप्रमारभसे कर्म न दीर्घयसि राघव॥
कच्चित्सहस्रैर्मूर्खाणामेकमिच्छसि पण्डितम्।
पण्डितो ह्यर्थकृच्छ्रेषु कुर्यान्नि श्रेयस महत्॥
एकोऽप्यमात्यो मेधावी शूद्रो दक्षो विचारग।
राजान राजपुत्र वा प्रापयेन् महती श्रियम्॥
अमात्यानुपधातीतान्पितृपैतामहाञ्छुचीन् ।
श्रेष्ठाञ्छ्रेष्ठेषु कच्चित्त्व नियोजयसि कर्मसु॥

इति।नात पर राष्ट्रैक्यसाधनपर राष्ट्रमङ्गलकारक समाधानमन्यद् भवितु शक्नोति। समासेनैव सर्व व्याख्यात रामायणकारेण। क्वाद्य तादृशा अमात्या येषा मन्त्रो राष्ट्र न परिधावति, येषा सर्व कर्म लघुमूल महोदय चास्ति, ये च शास्त्रकुशला क्षिप्रकारिणश्च। इदानी तु येऽज्ञानोपहता खण्डितव्रता समाजनियमाचारातिक्रमिणश्च त एव प्राप्ताधिकारा। ये च पण्डिता नीतिविद सदाचारसम्पन्नास्ते तु समुपेक्षिता गृहकोणे निलीना। यस्मिन् राष्ट्रेऽयोग्यानामनर्थकुशलाना पण्डितमानिना प्रतिष्ठा भवति, यत्र च मूर्खसहस्रेभ्य एकस्यैव पण्डितस्य नादरो भवति, तद्राष्ट्र न दीर्घायति भवतीत्येतदेव सत्य महर्षिर्वाल्मीकि प्रस्तौति स्वकीये रामायणकाव्ये।

अन्यथापि स एतत् सर्व सम्पादयति। लोकाराधनतत्परो रामो लोकोत्तरकर्मा परिलक्ष्यते। प्राक्तनाचार-परम्परा-परिपालन-परोऽपि स स्वीयैरनेकै कर्मभि लोक विमोहयन् पारम्परिकाचारान् लङ्घयन्निव परिलक्ष्यते। बहुपरिग्रहा राजान श्रूयन्ते इति परम्परामननुपालयन्नेकपत्नीक एव बभूव रामभद्र इति चित्रम्। अतोऽप्यतिचित्रमिद यत् सीताया अनुपस्थितौ तस्या सौवर्णी प्रतिमा सस्थाप्य स्वीयमश्वमेध सम्पादयामास। अपर च अन्त्यज निषादराज गुह गाढमालिङ्ग्य त मित्रकल्प स्वीकरोति स्म। शबरीमपि स्वजनीकरोति स्म। वानरजातीयेऽपि निहतार्थसंस्कारे सुग्रीवे प्रीति बध्नाति स्म। गृध्रजातीयमपि जटायुष पितृसख बन्धु मन्यमानो दिवङ्गतस्य तस्यौर्ध्वदैहिकान् सस्कारान्

स्वय सम्पादति स्म। सद्गुणनिचयाश्रय राक्षसकुलोत्पन्नमपि विभीषण साधु रक्षति स्म। एव हि गुणपक्षपाती सौहार्दपक्षपाती च प्रदर्शितो रामभद्र । तदादर्शमनुसरन् समग्रोऽपि लोको गुणानुरोधवशीकृतचेता परस्पर प्रेम सौहार्द मैत्रीं चानुतिष्ठेत्चेत्तर्हि राष्ट्रमस्माकमवश्यमेव एकतासूत्रे सुवद्ध राष्ट्रियतासम्प्लुत च भवेदिति रामायणकवे अमरसन्देश ।

सक्षेपेण वक्तुमेतच्छक्यते यत् महर्षेर्वाल्मीकेर्दिव्यगुणसमीक्षणसमर्थया सूक्ष्मेक्षिकाया समुत्कृष्टकाव्यप्रतिभायाश्चानुपमोत्पादो रामो नाम रामायणस्य नायको भारतीयाना सर्वस्वभूत । स्त्रीरत्ननिकषायमाणा जगद्वन्द्या जानकी अपि तस्याभूतपूर्वा सृष्टि । एव भरतलक्ष्मणविभीषणहनुमदादयोऽपि अनेकानर्घान् गुणगणान् स्वे स्वे चरित्रे समावेशयन्तोऽस्माक सर्वेषा कृतेऽनुकरणीया । एतादृशाना राष्ट्रियादर्शाना स्रष्टा कविर्वाल्मीकिर्वस्तुतो महार्घराष्ट्रियसस्कृतेरेव स्रष्टा। स पुरातन्याश्चिन्तनपरिपाट्या विचारधारायाश्च प्रवक्ता अपि भावियुगस्य धर्मसस्कृत्योरनुपमो द्रष्टा। एतैरनेकैर्गुणैरेव स सर्वैर्देशवासिभिरेकस्वरेणादिकवि स्वीक्रियते।

□

# वन्दे वाल्मीकिकोकिलम्

लौकिकसंस्कृत-कविताशाखाम् आरुह्य मधुराक्षरं राम रामेति नित्यानन्ददायिनम्
अमृतशब्दं मधुरं कूजन्तं तं वाल्मीकिकोकिलं वन्दे यस्य परमपावनी रसभावमयी
सर्वजनग्राह्या रामकथा भुवनत्रयं पुनाति। धन्यः स मानवमनोभावाभिज्ञो वेदलोकोभयज्ञो
महाकविर्यं आम्नायादन्येषां छन्दसां नूतनावतारकरणात् संस्कृतभाषाया आद्यः कवि-
र्बभूव। एवमेवानुस्मृतोऽयं संस्कृतकाव्यजगतो महाविभूतिः कविकुलगुरुणा कालिदासेन
स्वकीये रघुवंशाख्ये महाकाव्ये—

'तामभ्यगच्छद् रुदितानुसारी कविः कुशेध्माहरणाय यातः।
निषादविद्धाण्डजदर्शनोत्थः श्लोकत्वमापद्यत यस्य शोकः॥'

इति। तदनन्तरं सहृदयहृदयानन्दवर्धनेनानन्दवर्धनेनापि काव्यकाञ्चनपरीक्षकेण
स्वकीये ध्वन्यालोके इदमेव वृत्तमित्थं पुनरुक्तम्—

'काव्यस्यात्मा स एवार्थस्तथा चादिकवेः पुरा।
क्रौञ्चद्वन्द्ववियोगोत्थः शोकः श्लोकत्वमागतः॥'

इति। परमपावन्यास्तमसायास्तटे स्थिते आश्रमपदे निवसन् एकदा माध्यन्दिन-
सवनाय[1] आयातस्य महर्षेर्वाल्मीकेः सौकुमार्यपूरितं हृदयं समक्षमेव व्याधेनैकेन निष्करुणेन
सुखं विहरन् क्रौञ्चमिथुनाद् नरक्रौञ्चं निहतं दृष्ट्वा, दृष्ट्वा च तद्वियोगे करुणं क्रन्दन्तीं
तत्सहचरीं शोकेन द्रवीभूतम्। तदैव तस्य मुखात् सहसैव निर्गता सरला सुमधुरा
छन्दोमयी वाणीयम्—

'मा निषाद ! प्रतिष्ठां त्वमगमः शाश्वतीः समाः।
यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम्॥'

इति। इदमेव वृत्तमुत्तररामचरिते भवभूतिनैव वर्णितम्— "तदैव सर्वत्र विमृष्टे
भगवान् भूतभावनः पद्मयोनिरवगतमाविर्भूतशब्दब्रह्मप्रकाशमृषिमुपसङ्गम्य एवमुवाच—

---

१ दोपहर के स्नान के लिये।

'ऋषे । प्रबुद्धोऽसि वागात्मनि ब्रह्मणि, तद् ब्रूहि रामचरितम्। अव्याहतज्योतिरार्षं ते प्रातिभं चक्षुः। आद्यः कविरसि' इत्युक्त्वा स तत्रवान्तर्दधे। अथ स भगवान् प्राचेतसः प्रथमं मनुष्येषु शब्दब्रह्मणस्तादृशं विवर्तमितिहासं रामायणं प्रणिनाय।"[१] इति। इतिहास इति कथनेन रामायणस्य सत्यवृत्तता ज्ञाप्यते न पुनरस्य काव्यत्वं प्रतिषिध्यते। काव्यत्विदमस्त्येव, अत्र वर्णितं वृत्तजातं वास्तविकमित्येवाभिप्रायो भवभूतेः कथनस्य।

कीदृशं किंकोटिकं वा काव्यं वाल्मीकीयरामायणमितीदं निरूपणीयं किञ्चिदत्र। आदिकाव्यत्वादुपजीव्यमेतदसङ्ख्यानां परवर्तिनां काव्यनाट्यकथाऽख्यायिकादीनामिति तु विदितचरमेव सर्वेषां विदुषाम्। अस्य कलाभावोभयोऽपि पक्ष इयदुत्कृष्टो यत् समेषामेव कृतेऽनुकरणीयमनुसरणीयञ्चेदं जातम्। कालिदासकृतं रघुवंशमहाकाव्यं, कुमारदासकृतं जानकीहरणमहाकाव्यं, भवभूतिकृते महावीरचरितोत्तररामचरिताख्ये नाट्यकाव्ये, भासकृते प्रतिमाऽभिषेकाख्ये नाट्यकाव्ये च, भोजकृता रामायणचम्पूश्च, अन्यानि चानेकानि प्रसिद्धानि काव्यानि अस्यैव प्रेरणया निर्मितानीति विदितं विद्वल्लोके। आधुनिकेऽपि काले अनेकाः काव्यकृतय एतदेव प्रतिमानं कृत्वा विरच्यमानास्सन्ति। आदिकाव्यस्य भावपक्षस्योत्कृष्टत्वस्य निदर्शनरूपेणाधो द्वित्राः श्लोका उद्ध्रियन्ते। वर्षर्तोरारम्भं चित्रयतः कवेः काव्यबन्धोऽनुत्तमः, स चेदृशः—

'नवमासधृतं गर्भं भास्करस्य गभस्तिभिः।
पीत्वा रसं समुद्राणां द्यौः प्रसूते रसायनम्॥' इति

द्यौः रसं पीत्वा नवमासपर्यन्तं च गर्भत्वेन धृत्वा वर्षर्तौ रसायनं प्रसूते इत्यस्याः काव्योक्तेश्चमत्कारः सहृदयसंवेद्य एव। दिव आगतं जलं न चेद्रसायनं, तर्हि कथं तत् पीत्वा शुष्काणि वनानि हरितानि भवेयुः, कथं वा चिरेण निर्जीवत्वकल्पां निद्रां गता भेकवृन्दाः पुनरुज्जीविता हर्षध्वनिभिः कर्णान् पूरयेयुः, कथं वा पूर्वं निश्चेष्टतां गता सर्वापि प्रकृतिः सप्राणा सचेष्टा सक्रिया सती सर्वत्र नृत्यन्तीव प्रतीयात्। 'रसायनम्' इत्येकस्यैव शब्दस्याहो इयदर्थमाहात्म्यं भावगाम्भीर्यं च। अत्रानल्पं काव्यसौन्दर्यमपि वर्तते यदस्य श्लोकस्य कलापक्षं प्रकटयति।

एवमेव भगवता वाल्मीकिना गम्भीरभावाभिव्यञ्जकैरपि सरलैः शब्दैश्चित्रितं रामस्य चित्रं कामप्यभिख्यामनिर्वचनीयां धत्ते—

---

१ उत्तरचरित द्वितीयाङ्क पृ ३६ (डा काणे द्वारा सम्पादित)

"आहूतस्याभिषेकाय विसृष्टस्य वनाय च।
न मया लक्षितस्तस्य स्वल्पोऽप्याकारविभ्रमः॥
कथञ्चिदुपकारेण कृतेनैकेन तुष्यति।
न स्मरत्यपकाराणां शतमप्यात्मवत्तया॥
दद्यान्न प्रतिगृह्णीयान्न ब्रूयात् किञ्चिदप्रियम्।
अपि जीवितहेतोर्वा, राम सत्यपराक्रम॥"

अपि च रामायणस्य विशेषतः कलापक्षं प्रकाशयन्तोऽधोदत्ता द्वित्राः श्लोका द्रष्टव्याः—

"मत्ता गजेन्द्रा मुदिता गवेन्द्रा, वनेषु विक्रान्ततरा मृगेन्द्राः।
रम्या नगेन्द्रा निभृता नरेन्द्राः, प्रक्रीडितो वारिधरैः सुरेन्द्रः॥
जाता वनान्ताः शिखिसुप्रनृत्ता, जाताः कदम्बाः सकदम्बशाखाः।
जाता वृषा गोषु समानकामा, जाता मही शस्यवनाभिरामा॥"

इति। अत्र वर्षर्तोः सुषमायाश्चित्रमेव कविना चित्रितं विराजते। एवमेव ऋतुराजस्य कुसुमाकरस्य कुसुमवर्षस्य कमनीयम् मनोमोहकं च चित्रं कविना चित्रितमधोदत्तेषु श्लोकेषु द्रष्टव्यम्—

'पश्य रूपाणि सौमित्रे वनानां पुष्पशालिनाम्।
सृजतां पुष्पवर्षाणि वर्षं तोयमुचामिव॥
प्रस्तरेषु च रम्येषु विविधाः काननद्रुमाः।
वायुवेगप्रचलिताः पुष्पैरवकिरन्ति गाम्॥
पतितैः पतमानैश्च पादपस्थैश्च मारुतः।
कुसुमैः पश्य सौमित्रे क्रीडन्निव समन्ततः॥'

सन्नीतेः सद्विचारस्य सज्ज्ञानस्य तु महाकोष एव भगवतो वाल्मीकेः काव्यम्। निदर्शनभूता द्वित्रा एव श्लोका अधो दीयन्ते—

'धर्मादर्थ प्रभवति, धर्मात् प्रभवते सुखम्।
धर्मेण लभते सर्वं, धर्मसारमिदं जगत्॥
सत्यमेवेश्वरो लोके, सत्ये धर्म सदाश्रित।
सत्यमूलानि सर्वाणि, सत्यान्नास्ति परं पदम्॥
अनिर्वेद श्रियो मूलमनिर्वेद परं सुखम्।
अनिर्वेदो हि सततं, सर्वार्थेषु प्रवर्तक॥
निरुत्साहस्य दीनस्य शोकपर्याकुलात्मन।
सर्वार्था व्यवसीदन्ति, व्यसनं चाधिगच्छति॥
विक्लवो वीर्यहीनो य, स दैवमनुवर्तते।
वीरा सम्भावितात्मानो, न दैवं पर्युपासते'॥

अतएव रामायण चम्पूकारेण भोजराजेनादिकविर्मधुमयसूक्तीना मार्गदर्शकत्वेन प्रशस्यते—'मधुमयभणितीना मार्गदर्शी महर्षि' (रामायणचम्पू १। ८)। एभि पूर्ववर्णितैरन्यैश्चानेकै कारणैरादिकवे रामायणाख्या पावनी रामकाव्यधारा पतितपावनी त्रिपथगामिनी भगवती गङ्गेव त्रिभुवन पुनाति—

'वाल्मीकिगिरिसम्भूता रामाम्भोनिधिसङ्गता।
श्रीमद्रामायणी गङ्गा, पुनाति भुवनत्रयम्॥'

धन्यो वाल्मीकिरादिकविर्धन्या च तत्कृता रम्या रामायणी कथा, या नलचम्पूकारेण भट्टत्रिविक्रमेण सत्यमेव—

'सदूषणापि निर्दोषा सखरापि सुकोमला।
नमस्तस्मै कृता येन रम्या रामायणी कथा'॥

इत्यादिरूपेण वर्णिता।

□

# किं नाम काव्यम्

शब्दार्थकत्वात् कुधातो इन्प्रत्यये कृते कविरिति शब्द सिध्यति। तस्यैव कवे कर्म काव्यम्। एव कविशब्दात् ष्यञ्प्रत्यये कृते काव्यमिति शब्दो निष्पन्नो भवति। अर्थश्चास्य दृष्टाभीष्टार्थस्य ललित रसात्मक वर्णन भवति। प्रायेण तु लौकिकालौकिकार्थाना निगूढधर्मभावादेस्तत्त्वतो दर्शन यस्य भवति तेन यदा पूर्वार्जितसस्कारादुताहो वर्तमानजन्मनि कृतादभ्यासाज्जायमानात् संस्कारात्तस्य दृष्टस्य धर्मभावादेरर्थस्यान्तरिकप्रेरणावशात् सौशब्द्येन अर्थाद्विचित्रोपन्यस्तैर्मधुमयै शब्दैर्वर्णन क्रियते तदा तदेव काव्यमित्यभिधीयते, स च वर्णयिता कविरिति। पण्डितराजजगन्नाथस्य 'रमणीयार्थप्रतिपादक शब्द काव्यम्' इत्यस्मिन् काव्यलक्षणे यद्यपि शब्दार्थयोरुभयोरेव कथन, तथापि शब्दस्य प्राधान्येन ग्रहणमर्थस्य च तत्पृष्ठभाक्त्वमप्राधान्य वा सुस्पष्टमेव। तस्मान्नेद सर्वथा साधु लक्षणम्। वस्तुतस्तु न केवल रमणीयेनार्थेन न वा केवलेन सौशब्द्यमयेन वर्णनेनैव काव्य जायतेऽपितु तदर्थं द्वयोरेवापेक्षा यथा माघेनोक्त 'शब्दार्थौ सत्कवि' इति। कवित्वस्य कृते यथा रमणीयोऽर्थ अपेक्ष्यते, तथैव मधुमयी ललिता पदावल्यपि यया कविना दृष्टोऽनुभूतो वा सोऽर्थोऽभिव्यज्येत। कवित्वस्य एतद्रहस्य भट्टतौतेनैवमुपन्यस्त स्वकारिकासु–

> 'नानृषि कविरित्युक्तम्, ऋषिश्च किल दर्शनात्।
> विचित्रभावधर्माशतत्त्वप्रख्या च दर्शनम्॥
> स तत्त्वदर्शनादेव शास्त्रेषु पठित कवि।
> दर्शनाद् वर्णनाच्चाथ रूढा लोके कविश्रुति॥
> तथा हि दर्शने स्वच्छे नित्येऽप्यादिकवेर्मुने।
> नोदिता कविता लोके यावज्जाता न वर्णना॥'

भट्टतौतेन दत्तेन वाल्मीकेरुदाहरणेनैतस्य सिद्धान्तस्य पुष्टिर्भवति। तेन कथितमस्मिन्कारिकाया यदादिकवेर्वाल्मीकेर्दर्शनस्य स्वच्छत्वान्नित्यसन्निहितत्वाच्च तस्य ऋषित्व तु पूर्वत एवोदितमासीत् किन्तु कविस्तु स तावन्नैव बभूव यावत् 'मा निषाद।

प्रतिष्ठा त्वम् अगम शाश्वती समा। यत् क्रौञ्चमिथुनादेकमवधी काममोहितम् ॥' इत्येवरूपेण स्वेन दृष्टस्य वस्तुनो वर्णना न जाता। तदेव शब्दार्थयोर्मञ्जुलसामञ्जस्यमेव काव्यमिति निष्कर्ष। काव्यकाञ्चनकषाश्ममानिना कुन्तकेनापि स्वीये वक्रोक्तिजीविते शब्दार्थयोरेवविध समञ्जसरूपमेव काव्य स्वीकृतम्। स 'शब्दार्थौ सहितौ वक्रकविव्यापारशालिनि। बन्धे व्यवस्थितौ काव्य तद्विदाह्लादकारिणि ॥' इति स्वकीय काव्यलक्षण व्याचक्षाण एव ब्रवीति--'शब्दार्थौ काव्यम्। वाचको वाच्यश्चेति द्वौ सम्मिलितौ काव्यम्। द्वावेकमिति विचित्रैवोक्ति। तस्माद् द्वयोरपि प्रतितिलमिव तैल तद्विदाह्लादकारित्व वर्तत, न पुनरेकस्मिन्'।

प्रायेण सर्वैरेव प्राचीनार्वाचीनैराचार्यै काव्यलक्षणे शब्दार्थयोरुभयोरेव सङ्ग्रहण कृतम्। यथा भामह स्वकीये काव्यालङ्कारे 'शब्दार्थौ सहितौ काव्यम्' इति काव्यलक्षणमभिधत्ते। आचार्यवामनेनापि द्वयोरेव काव्यत्व स्वीक्रियते-- काव्यशब्दोऽय गुणालङ्कारसस्कृतयो शब्दार्थयोर्वर्तते' इति। रुद्रटोऽपि स्वकीये काव्यालङ्कारे शब्दार्थौ काव्यमिति ब्रवीति। वाग्देवतावतारो मम्मटोऽपि शब्दार्थावेव काव्य ब्रवीति- 'तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुन क्वापि' इति। 'अदोषौ सगुणौ सालङ्कारौ च शब्दार्थौ काव्यमिति हेमचन्द्रोऽभिधत्ते, 'शब्दार्थौ निर्दोषौ सगुणौ प्राय सालङ्कारौ च काव्यमिति' वाग्भट, 'गुणालङ्कारसहितौ शब्दार्थौ दोषवर्जितौ' इति च विद्यानाथ। एव मम्मटपरवर्तिभि सर्वैरेवाचार्यैर्मम्मटस्यैव काव्यलक्षण स्वीकृतमिति तथ्य सुस्पष्टम्।

अत्र विचारणीय यत् मम्मटादिमतेन किं काव्ये केवल शब्दार्थावेव वर्तते उताहोऽन्यान्यपि तत्त्वानि। काव्यलक्षणे मम्मटेन अदोषौ सगुणौ अनलङ्कृती पुन क्वापि अर्थात् प्रायेण सालङ्कारौ शब्दार्थौ काव्यमित्युक्तम्। एतेन स्पष्टमेतद् यत् काव्ये गुणालङ्कारयोरपिभावो भवेत्। यद्यपि लक्षणे शब्दार्थयोर्विशेषणत्वेन गुणालङ्कारौ गृहीतौ तथापि अष्टमोल्लासे गुणप्रकरणे ' ये रसस्याङ्गिनो धर्मा शौर्यादय इवात्मन। उत्कर्षहेतवस्ते स्युरचलस्थितयो गुणा ॥ उपकुर्वन्ति त सन्त येऽङ्गद्वारेण जातुचित्। हारादिवदलङ्कारास्तेऽनुप्रासादयो मता ॥' इत्युक्त्वा तेन स्पष्टीकृत यत् काव्यस्य रसरूपात्मन एव माधुर्यादयो गुणा न वर्णाना, वर्णस्तु ते केवल व्यज्यन्ते न तु वर्णमात्राश्रयास्ते। एवमेव ये शब्दार्थरूपकाव्याङ्गातिशयमुखेन मुख्य रसमुपकुर्वन्ति तेऽलङ्कारा। एतेनेदमुक्त भवति यन्मम्मटमतेन शब्दार्थौ काव्यस्य शरीर, रसश्चात्मा, माधुर्यादयो गुणा रसस्य धर्मा, अनुप्रासोपमादयोऽलङ्काराश्च शब्दार्थयोर्धर्मा। एतेऽलङ्कारा काव्यात्मभूते रसे विद्यमाने तस्योपकारका पोषका वा शब्दार्थरूपाङ्गानामुत्कर्षाधानद्वारेण अविद्यमाने पुन

तस्मिन्नात्मनि अङ्गिनि वा उक्तिवैचित्र्यमात्रपर्यवसायिनि अधमकाव्यस्योदाहरणम्। वाच्याद् रसादिव्यङ्ग्येऽतिशयिनि सति उत्तमं काव्यं, तस्मिन् गुणीभूतेऽप्रधाने वा जाते गुणीभूतव्यङ्ग्याख्यं मध्यमं काव्यम्। एवं रसरूपे काव्यात्मनि अविद्यमानेऽपि मम्मट काव्यस्य सत्तां स्वीकरोति किन्तु साहित्यदर्पणकार कविराजविश्वनाथ केवलं रसात्मकमेव वाक्यं काव्यं स्वीकरोति 'वाक्यं रसात्मकं काव्यम्' इति। रस एवात्मा सारस्रूपतया जीवनाधायको यस्य वाक्यस्य, तदेव काव्यमित्यग्निपुराणेऽप्युक्तम्-'वाग्वैदग्ध्यप्रधानेऽपि रस एवात्र जीवितम्' इति। भरतेनाप्युक्तम्—'नहि रसाद् ऋते कश्चिदर्थः प्रवर्तते'। आनन्दवर्धनोऽपि स्वकीये ध्वन्यालोके—'तथा चादिकवेः पुरा। क्रौञ्चद्वन्द्ववियोगोत्थ शोकः श्लोकत्वमागतः॥' इत्युक्त्वा शोकादिस्थायिकरुणादिरसमेव काव्ये सर्वप्रधानं स्वीकरोति।

अस्मिन् विषये यत् स्मर्तव्यं विशेषतस्तत्तु इदमेव तथ्यं यद् विश्वनाथस्य मतेन रसाभावे काव्याभाव एव भवति यावदन्येषां सर्वेषां मतेन तद्भावे उत्तमं तदभावेऽपि चाधमं काव्यं भवत्येव। किन्तु काव्यात्मभूते रसेऽविद्यमाने काव्यं निर्जीवं मृतं वा स्याद् यथा जीवात्मन्यविद्यमाने मानवशरीरम्। यथा चात्मविहीनं मानवशरीरं मानवो मनुष्यो वा वक्तुं न शक्यते, एवमेव रसरूपात्मनि अविद्यमाने शब्दार्थरूपकाव्यशरीरमात्रमपि काव्यं वक्तुं नोचितमित्येव समीचीनं प्रतिभाति, एवं च विश्वनाथस्यैव मतं समीचीनं मनोरमं च प्रतीयते। अनेन काव्येन चतुर्वर्गफलप्राप्तिर्भवतीति विश्वनाथोऽस्य महदुपयोगित्वं प्रतिपादयति। 'धर्मार्थकाममोक्षेषु वैचक्षण्यं कलासु च। करोति कीर्तिं प्रीतिं च साधुकाव्यनिषेवणम्॥' इत्युद्धृत्य विश्वनाथः स्वोक्तौ प्रमाणमपि प्रस्तौति। मम्मटस्तु 'काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये। सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे॥' इत्यादिप्रकारेण काव्यप्रयोजनानि वर्णयति। एषु पूर्वाणि चत्वारि अवराणि स्थूलानि प्रयोजनानि वक्तुं शक्यन्ते। परवर्तिनी द्वे सूक्ष्मे, तदपेक्षया वरे उत्कृष्टे च। एतयोरपि, या सद्योऽविलम्बेन परा निर्वृतिः, यः परमानन्दास्वादः काव्यरसास्वादो वा, एतद्रूपं प्रयोजनं तु सकलप्रयोजनमौलिभूतमिति मम्मटेन स्वयमेवोक्तम्। रसास्वादनस्येयमवस्था विगलितवेद्यान्तरा दुःखलेशैरप्यसम्पृक्ताऽसंस्पृष्टा च। धन्यः स रससिद्धः कविर्यः स्वकाव्येनेमामलौकिकानन्दसान्द्रामवस्थां स्वकाव्यश्रोतृपाठकादिषूद्भावयति॥

◻

# अपारे काव्यसंसारे कविरेव प्रजापतिः

पङ्क्तिरियमग्निपुराणस्य काव्यप्रकरणाद् गृहीता। इयमेव पङ्क्ति किञ्चित्परिवर्तनेन सहानन्दवर्धनस्य ध्वन्यालोकेऽपि वर्तते—'अपारे काव्यससारे कविरेक प्रजापतिरि'ति। 'कविरेव' 'कविरेक' इत्यनयोरर्थस्तु समान एव। 'कविरेव' इत्यस्य 'केवल कविरेव, नान्य' इत्यर्थ। 'कविरेक' इत्यस्यापि 'एक कविरेव, नान्य' इत्येवार्थ। य काव्यससार कविप्रजापति सृजति निर्मिमीते वा, स अपार अपरिमित इयत्ताशून्य सर्वव्यापक सर्वसस्पर्शी। स ससार सर्वमेव वस्तु स्वक्रोडे करोति, न किमपि वस्तु तस्माद्बहिर्वर्तते। प्रजापते सृष्टे सर्वा कला, सर्वा विद्या, सर्वाणि भूतानि वस्तूनि चास्य कविसृष्टस्य काव्यससारस्य विषया भवन्ति। अतएव चिरन्तनकाव्यशास्त्रकारो भामह कवेर्महतो भारस्योल्लेख कुर्वन्नाह—

> 'न स शब्दो न तद् वाच्य न सा विद्या न सा कला।
> जायते यन्न काव्याङ्गम्, अहो भारो महान् कवे ॥

इति। वस्तुतो नेदृश किमपि वस्तु साधारण वाऽसाधारण वा, यत् कवेर्दृष्टिपथाद्बाह्य, यस्मिन् कवेर्दृष्टिर्न पतति, यदस्य कवेर्वर्णनविषयो न भवति। महान् कविस्तु यत् किमपि साधारणातिसाधारण वस्त्वपि स्वकाव्यप्रतिभाया मणिकाञ्चन-सयोगेन असाधारणवैशिष्ट्ययुक्त विधातु प्रभवति। स ब्रह्मण सृष्टेर्वैपरीत्येन सरस नीरस नीरस च सरसम्, एवञ्च सुखमय दुःखमय, दुःखमय च सुखमय वर्णयितु प्रभवति। सोऽचेतन चेतनवत्, चेतन चाचेतनवत् चर्वयितु क्षमते। एतन्महनीयत्व कवेरानन्दवर्धनो वर्णयति स्वकीये ध्वन्यालोके—

> 'शृङ्गारी चेत् कवि काव्ये जात रसमय जगत्।
> स एव वीतरागश्चेन्नीरस सर्वमेव तत् ॥
> भावानचेतनानपि चेतनवच्चेतनानचेतनवत् ॥
> व्यवहारयति यथेष्टं सुकवि काव्ये स्वतन्त्रतया ॥'

अतएवैतत्पर्यन्त कृतो विषयोपन्यास सकारणत्वात् स्वाभाविकोऽतश्च समुचित साधुर्वा। अत परमेतत् तावद्विवेचनीय यदियमसाधारणक्षमता कुतोऽपि आयाति आहोस्विद् नैसर्गिकीयम्। अस्मिन् विषये इद तावन्निवेदनीय यत्काव्यस्य हेतुभूतेय क्षमता प्राधान्येन नैसर्गिक्येव। इय पूर्वजन्मत प्राप्त कवित्वबीजरूप सस्कारविशेष। मम्मट इमा क्षमता शक्तिमाख्याति यस्या अभावे काव्यमेव न प्रसरेत्, कथञ्चित् प्रसृत वोपहसनीय स्यात्। इमामेव प्रकृतिदत्ता निसर्गत प्राप्ता शक्तिमन्ये काव्यशास्त्रकारा प्रतिभामाचक्षते। इय काव्यप्रतिभैव तत् तत्त्व येन किमपि वर्णनमुत्कृष्टकोटिक सत् काव्यसज्ञा लभते, वर्णयिता च कविसज्ञाम्। केय प्रतिभा ? 'प्रज्ञा नवनवोन्मेषशालिनी प्रतिभा मता' इति। या प्रज्ञा प्रतिक्षण नवनवोन्मेषै नवनवोन्मीलनै शालते शोभते वा सा प्रतिभेति मन्यते। या प्रज्ञा कस्यापि वर्णनीयस्य वस्तुनो विषयस्य वा नवनवानि पूर्वमनुन्मीलितानि तथ्यानि उन्मीलयति प्रकटीकरोति प्रकाशयति पुरो वा स्थापयति, सा प्रतिभा। अनया प्रतिभयैव विचित्रभावधर्माशतत्त्वानि प्रख्यातु ज्ञातु वा समर्थो भवति कवि। इदमेव ज्ञान दर्शन वा तमृषि करोति, यत क्रान्तद्रष्टैव—मन्त्रद्रष्टैव—ऋषि, स चैव शास्त्रेषु कविरिति प्रथित, यथा 'कविर्मनीषी' इत्यादीश्रुतिवचनात् स्पष्टम्। लोके पुन कविरिति प्रथा दर्शनाद् वर्णनाच्चेत्युभयादेव भवति, न पुनर्दर्शनादेव केवलादिति विशेषस्तावद् द्रष्टव्य। उक्त हि भट्टतौतेन—

> 'नानृषि कविरित्युक्तम्, ऋषिश्च किल दर्शनात्।
> विचित्रभावधर्माशतत्त्वप्रख्या च दर्शनम्॥
> स तत्त्वदर्शनादेव शास्त्रेषु प्रथित कवि।
> दर्शनाद् वर्णनाच्चाथ रूढा लोके कविश्रुति॥
> तथा हि दर्शने स्वच्छे नित्येऽप्यादिकवेर्मुने।
> नोदिता कविता लोके यावज्जाता न वर्णना'॥

इति। लोके दर्शनाद्वर्णनाच्चेत्युभयादेव कविरिति प्रथा रूढेत्यत्र भट्टतौतेनादिकवेर्वाल्मीकेर्दृष्टान्त उदाहृत। तेन कथित यदादिकवेर्वाल्मीकेर्दर्शनस्य स्वच्छत्वात् नित्यत्वाच्च तस्य मुनित्वमृषित्व वा पूर्वत एवोदितमासीत् किन्तु कविस्तु स तदैव बभूव यदा 'मा निषाद प्रतिष्ठा त्वमगम शाश्वती समा। यत्क्रौञ्चमिथुनादेकमवधी काममोहितम्॥' इत्येवरूपेण वस्तुवर्णना जाता। अयमेव

लाकिक्काव्यस्योदयो येन ऋषिर्वाल्मीकिरादिकविर्जात । एव सामान्यवर्णनात् कवेर्वर्णन सर्वथा लोकोत्तर विलक्षणञ्च भवति, यतस्तस्मिन् वर्णने एकतस्तु विचित्रवाग्विन्यासो मधुमयो भणितिर्दृश्यतेऽपरतश्च पदार्थाना विचित्रभावधर्मादीना तत्त्वोन्मीलनमपि दृक्पथमायाति। एव यत् काव्य सुकवेर्लोकोत्तरवर्णनानिपुणकविकर्मरूप, तत् कान्तेव सरसतापादनेनाभिमुखीकृत्य रामादिवद्वर्तितव्य न रावणादिवदिति सदाचारादिकमुपदेश यथायोग कवे सहृदयस्य च करोति। ईदृश काव्यस्रष्टा सुकविरेव जीवति, न च कदापि तत्कीर्तिर्जीर्यति, यथोक्तम्—

जयन्ति ते सुकृतिनो रससिद्धा कवीश्वरा ।
नास्ति येषा यश:काये जरामरणज भयम् ॥'

□

# काव्ये शब्दार्थयोः साहित्यम्

महाभाष्यकारः पतञ्जलिः पस्पशाह्निके 'सिद्धेशब्दार्थसम्बन्धे' इति वार्तिकस्य तात्पर्यं विवृण्वन् शब्दम्, अर्थं, तयोः सम्बन्धं चेति त्रयमपि नित्यं कथयति। इदमेव समर्थयन् स 'लोकतः' इत्यस्य भाष्ये आक्षेपपूर्वकमेवमाह—"कथं पुनर्ज्ञायते—सिद्धः शब्दोऽर्थः सम्बन्धश्चेति ? 'लोकतः'। यल्लोकेऽर्थमुपादाय शब्दान् प्रयुञ्जते, नैषां निर्वृत्तौ यत्नं कुर्वन्ति। ये पुनः कार्या भावाः, निर्वृत्तौ तावत् तेषां यत्नः क्रियते। तद्यथा घटेन कार्यं करिष्यन् कुम्भकारकुलं गत्वाऽह—कुरु घटं, कार्यमनेन करिष्यामि इति। न तद्वच्छब्दान् प्रयुयुक्षमाणो वैयाकरणकुलं गत्वाऽह—कुरु शब्दान्, प्रयोक्ष्य इति। [1]"तावत्येवार्थमुपादाय शब्दान् प्रयुञ्जते।" व्याकरणशास्त्रमनुसरत् काव्यशास्त्रमपि शब्दार्थसम्बन्धान् नित्यान् स्वीकरोति। एवं सति, 'शब्दार्थौ सहितौ काव्यम्' इति भामह-कृते, काव्यकाञ्चनकषाश्म[2]-मानिना कुन्तकेन च

> 'शब्दार्थौ सहितौ वक्रकविव्यापारशालिनि।
> बन्धे व्यवस्थितौ काव्यं तद्विदाह्लादकारिणि॥" (वक्रोक्ति १ ।७)

इति कृते काव्य-लक्षणे 'शब्दार्थौ' इत्यस्य 'सहितौ' इति विशेषणं व्यर्थमेव। स्वकृतकारिकायास्तात्पर्यं संक्षिपन् कुन्तकः 'तस्मात् द्वयोरपि प्रतितिलमिव तैलं तद्विदाह्लादकारित्वं वर्तते, न पुनरेकस्मिन्', 'तस्मात् स्थितमेतत्—न शब्दस्यैव रमणीयताविशिष्टस्य केवलस्य काव्यत्वं, नाप्यर्थस्य' इत्याह, तथा च 'न व्यर्थम्' इति स्वाभिमतं प्रकटीचकार। स्वमत-समर्थने, भामहस्य सुप्रसिद्धास्तिस्रः कारिका अधोदत्ता उद्धरति स्म—

> "रूपकादिरलङ्कारस्तथाऽन्यैर्बहुधोदितः।
> न कान्तमपि निर्भूषं विभाति वनितानतम्"
> रूपकादिमलङ्कारं वाह्यमाचक्षते परे।

---

१ तावत्येव समये, तत्काल एव।
२ निकष, कसौटी पत्थर।

सुपा तिङा च व्युत्पत्ति वाचा वाञ्छन्त्यलङ्कृतिम् ॥
तदेतदाहु माशब्द्य नार्थव्युत्पत्तिरीदृशी ।
शब्दाभिधेयालङ्कारभेदादिष्ट द्वय तु न ॥" इति ।

अन्तत प्रकारान्तरण द्वया महिनत्व प्रतिपादयन्नेवमाह कुन्तक—'तेन शब्दार्थौ द्वा सम्मिलितौ काव्यमिति स्थितम् । एव स्थापिते द्वयो काव्यत्वे, कस्यचिदेकस्य मनाङ्मात्रन्यूनताया सत्या न काव्यव्यवहार प्रवर्ततेत्याह—सहिताविति । सहितौ सहितभावेन साहित्येनावस्थितौ । ननु च वाच्यवाचकसम्बन्धस्य विद्यमानत्वादेतयोर्न कथञ्चिदपि साहित्यविरह । सत्यम्, किन्तु विशिष्टमेवह साहित्यमभिप्रेतम्' कीदृशम् ? वक्रताविचित्रगुणालङ्कारसम्पदा परस्परस्पर्धाधिरोह ।

शब्दार्थया स्वरूपनिरूपणमुखन इममेव स्पर्धाधिरोह विवृण्वन् एवमाह—
'शब्दो विवक्षितार्थैकवाचकोऽन्येषु सत्स्वपि ।
अर्थ सहृदयह्लादकारि-स्वस्पन्दसुन्दर ॥' (वक्रोक्ति १ ।९)

इति । काव्ये गृह्यमाण शब्द कीदृश ? विवक्षितार्थैकवाचक । विवक्षितो वक्तुमिष्टो योऽसौ अर्थस्तदेकवाचक, तस्य एक केवल एव वाचक । कथमेतत् ? अन्येषु सत्स्वपि । अपरेषु तद्वाचकेषु बहुष्वपि विद्यमानेषु । तथा च सामान्यात्मना वक्तुमभिप्रेतो योऽर्थस्तस्य विशेषाभिधायी शब्द सम्यग्वाचकता न प्रतिपद्यते । यथा,

'कल्लोलवेल्लितदृषत्परुषा प्रहारै
रत्नान्यमूनि मकराकर ! मावमस्था ।
किं कौस्तुभेन भवतो विहितो न नाम
याच्याप्रसारितकर पुरुषोत्तमोऽपि ॥'

इत्यत्र रत्नसामान्योत्कर्षाभिधानमुपक्रान्तम्, कौस्तुभेनेति रत्नविशेषाभिधायी शब्दस्तद्विशेषोत्कर्षाभिधानमुपसहरतीति प्रक्रमोपसहार वैषम्य न शोभातिशयमावहति एव रत्नसामान्यस्य प्रक्रान्तमुत्कर्षाभिधान रत्नविशेषस्य कौस्तुभस्योत्कर्षाभिधानेन भग्नप्रक्रमदोषकारकेन समाप्तम् । तस्मादवविधे विषये सामान्याभिधाय्येव शब्द सहृदयहृदयहारिता प्रतिपद्यते । यत्र विशेषात्मना वस्तु प्रतिपादयितुमभिमत, तत्र विशेषाभिधायकमेवाभिधान निबध्नन्ति कवय । यथा

'द्वय गत सम्प्रति शोचनीयता, समागमप्रार्थनया कपालिन ।
कला च सा कान्तिमती कलावतस्त्वमस्य लोकस्य च नेत्रकौमुदी ॥
(कुमारस ५ ।७१)

इत्यत्र परमेश्वरवाचक-शब्दसहस्र सम्भवेऽपि कपालिन इति बीभत्सर सालम्बनविभाववाचक शब्दो जुगुप्सास्मदत्वेन प्रयुज्यमान कामपि वाचकवक्रता विदधाति। 'सम्प्रति' 'द्वय' चेत्यतीव रमणीयम्। यत् किल पूर्वमेका सैव दुर्व्यस्नदूषितत्वेन शोचनीया सञ्जाता, सम्प्रति पुनस्त्वया तस्यास्तथाविधदुरध्यवसाय साहायकमिवाब्धमित्युपहस्यते। प्रार्थना-शब्दोऽपि अतितरा रमणीय, यस्मात् कालतालीययोगेन तत्ससागम कदाचिन्न वाच्यतावह। प्रार्थना पुनरत्र अत्यन्त कौलीनकलङ्ककारिणी। 'सा' च 'त्व' च इति द्वयोरप्यनुभूयमान परस्परस्पर्धि लावण्यातिशय प्रतिपादनपरत्वेन उपात्तम्। 'कलावत' 'कान्तिमती' इति च मत्वर्थीय-प्रत्ययेन द्वयोरपि प्रशसा प्रतीयते इत्येतेषा प्रत्येक कश्चिदप्यर्थ शब्दान्तराभिधेयता नोत्सहते।

काव्यमार्गे प्रयोगार्हयो शब्दार्थयोर्वाचकवाच्ययोर्वा साहित्य किञ्चिदेवविध, यत् नित्ययो शब्दार्थयोर्विद्यमानात् नित्यसम्बन्धरूपात् सामान्यसाहित्यात् सर्वथा विशिष्टम्। एवविध साहित्य वक्रतान्विचित्रगुणालङ्कारसम्पन्नयोरेव शब्दार्थयोर्विद्यते, ययो एतद्विषये परस्परस्पर्धाधिरोह इति पूर्वमुक्तम्। अस्य विशिष्टसाहित्यस्य सहभावापरपर्यायस्य ज्ञान महाकवेरेव भवति। एवविध साहित्य यस्मिन् कविकर्मणि यस्मिन् काव्ये वा विद्यते, तदेवोत्कृष्ट 'साहित्यम्' उच्यते। अनेन विशिष्टप्रकारकेण साहित्येन समन्वितत्वादेव काव्यापरपर्यायस्य साहित्यस्य तदनुरूप नाम जातम्। धर्मविशेषेण धर्मिणो वस्तुनो वा नामकरण न्याय्यमेव समुचितमेव। एवविधस्यैव साहित्यस्य कारयित्री कवीन्द्रगिर जगद्धरभट्टो नौति–

"शब्दार्थमात्रमपि ये न विदन्ति, तेऽपि
या मूर्च्छनामिव मृगा श्रवणै पिबन्त।
सरुद्ध-सर्वकरण-प्रसरा भवन्ति
चित्रस्थिता इव, कवीन्द्रगिर नुमस्ताम्॥"

इति। एवं च, एवंविधामेव साहित्यसुधा-निष्यन्दिनीं कवीन्द्रभारतीं वाग्देवतावतारो मम्मटोऽपि काव्यप्रकाशस्यादावेव मङ्गलाचरणत्वेन प्रस्तौति स्तौति च—

"नियतिकृतनियमरहितां ह्लादैकमयीमनन्यपरतन्त्राम्।
नवरसरुचिरां निर्मितिमादधती भारती कवेर्जयति॥"

इति। अस्याः कवीन्द्रभारत्या या निर्मितिः सृष्टिः कृतिर्वा काव्यनाम्नी, सा ब्रह्मणः सृष्टेर्विलक्षणत्वात् सर्वथा हृद्याऽनवद्या च। विधेः सृष्टिस्त्रिगुणात्मकत्वात् सुखदुःखमोहस्वभावा, परमाण्वाद्युपादान कर्मादिसहकारिकारण-परतन्त्रा, मधुराम्ल-लवण-कटु-कषाय-तिक्ताख्य षड्रसवती, न च सर्वथा सर्वदा हृद्यैव। एतद्विलक्षणा तु कविवाङ्-निर्मितिः। सा तु ह्लादैकमयी सुखैकस्वभावा, अनन्यपरतन्त्रा, शृङ्गार-हास्य-करुण रौद्र-वीर-भयानक-बीभत्साद्भुत-शान्ताख्य-नवरसैः रुचिरा सर्वथा सर्वदा च हृद्यैव। इमां काव्यसुधां कर्ण-कुहरैः पिबन्तः सहृदयास्तद्रसमाधुरी मत्ताश्चित्र-लिखिता इव निष्पन्दा भवन्ति, विस्मृतात्मानो भवन्ति। काव्यरसास्वादनमेवेदृशं भवति येन तत्समकालं बुभुक्षा-पिपासादयो देहधर्मा अपि विस्मृता भवन्ति। अस्मादेव कारणात् काव्यानुशीलनाज्जायमान आनन्दो ब्रह्मानन्द-सहोदरोऽलौकिकश्चोच्यते सहृदयैः काव्यमर्मज्ञैः। तानन्तरेण[1] कोऽन्योऽर्थादरसिको एतत्मर्म ज्ञातुं समर्थः—'मार्मिकः को [2]मरन्दानामन्तरेण मधुव्रतम्'[3]। चमत्कारिकं परं ह्लादकजीवितमेव काव्यं भवति। अतएवास्य विविधेषु प्रयोजनेषु काव्यरसास्वादन-समनन्तरमेव समुद्भूतो विगलितवेद्यान्तर आनन्द एव, परा निर्वृतिरेव मौलिभूत प्रयोजनमुक्तं काव्यप्रकाशे। ईदृशं रससम्भृतं काव्यं लोकोत्तरवर्णना-निपुणस्यैव कवेः कृतिः कर्म वा भवितुमर्हति, इयं च लोकोत्तरवर्णना-निपुणता पूर्वविवेचितस्य शब्दार्थयोः विशिष्टसाहित्यस्य ज्ञानादेव जायते इति निश्चप्रचम्।

□

१ विना।
२ मकरन्द, पुष्परस।
३ भ्रमर।

# वाक्यं रसात्मकं काव्यम्

सुखावाप्तये चेत-प्रसादाय प्राप्तसारस्वतप्रसादा काव्य व्यरीरचन्। मन्दधियामपि यथा लोकलोकान्तरस्थितिर्ज्ञाता भवेत्, तदनुसार च ते व्यवहारे समर्था भवेयुरित्येत्तदर्थं काव्यस्य सृष्टिर्जाता। काव्यस्य तात्त्विकस्वरूप-विवेचनपर च काव्य-शास्त्र कालेन विकसितम्। चतुर्वर्गफलप्राप्ति काव्यादेव सुखेन भवति, अतस्तदर्थं तस्य सृष्टिरिति सर्वथा समञ्जसम्। एव सत्यपि, ब्रह्मानन्दसहोदर सुखास्वादप्रधान परमानन्दरूप रसमेव काव्यतत्त्वालोचकास्तस्य परम फल निश्चितवन्त। राजशेखर काव्यपुरुषस्य स्वरूप विवेचयन् स्वकीयकाव्यमीमासायाम् एवमाह—शब्दार्थौ ते शरीरम्, सस्कृत मुख, प्राकृत बाहु, रस आत्मा, रोमाणि छन्दासि, अनुप्रासोपमादयश्च त्वामलङ्कुर्वन्ति। आनन्दवर्धनचार्य 'शब्दार्थ-शरीर तावत्काव्यम्' इति व्याहरन्नपि तयो पृथक् काव्यस्यात्मान निर्धारयति। 'काव्यस्यात्मा ध्वनिरिति बुधैर्य समाम्नातपूर्व' इत्यादि सन्दर्भो ध्वन्यालोकस्यादावेव वर्तते। तस्माद् ध्वनिरेव काव्यात्मेति ध्वन्यालोकस्य सिद्धान्तो मन्यते। सामान्यत साध्वी इय मान्यता। तथापीदमत्र वक्तव्य यत् ध्वन्यालोककारेणास्मिन् सन्दर्भे इय प्रतिज्ञा क्रियते यत् आदिबुधैर्वैयाकरणैर्यो ध्वनि काव्यस्यात्मा पूर्वं समाम्नात, अन्ये च तस्याभाव जगु, अन्ये पुनस्तस्यान्तर्भाव भक्तौ लक्षणाया चक्रुस्तस्य स्वरूपमत्र विवेच्यते। तस्यास्या प्रतिज्ञाया इदमेव तात्पर्यं यदुत्तमकाव्ये तस्य स्थितिर्भवत्येव, न तस्याभावो न वा लक्षणायामन्तर्भाव। अर्थात् काव्ये वाच्यार्थलक्ष्यार्थातिरिक्त व्यङ्ग्यार्थोऽपि भवति। यस्य ग्रहणार्थमभिधालक्षणातिरिक्त व्यञ्जनाव्यापारो ध्वननव्यापारो वा शब्दार्थयो स्वीकरणीय। एवमुत्तमकाव्य ध्वनिकाव्यमुच्यते तन्मतेन। इदमेव तस्याभिप्राय। अस्यैव ध्वनेर्वस्त्वलङ्काररसध्वनि-सञ्ज्ञकास्त्रयो भेदा। एषु त्रिषु वस्त्वलङ्कारध्वन्यपेक्षया रसध्वनेरेव प्राधान्यम्। वस्त्वलङ्कारयो प्रायेणवाच्यतैव भवति, व्यङ्ग्यता तु यत्र-कुत्राप्येव भवति। किन्तु रसस्तु सर्वदैव व्यङ्ग्यो ध्वन्यो वा भवति। सहृदयश्लाघ्य प्रतीयमानो व्यङ्ग्यरूपोऽयमर्थो रस एव प्रायेण भवति। ध्वन्यालोके आनन्दवर्धनेन यदनेनैव सह वाच्यार्थस्यापि 'अर्थ सहृदयश्लाघ्य काव्यात्मा यो व्यवस्थित। वाच्यप्रतीयमानाख्यौ तस्य भेदावुभौ स्मृतौ।' इत्यादौ सहृदय-श्लाघ्यतोक्ता, तत्तु

प्रतीयमानरसरूपार्थस्य व्यञ्जकत्वेन तदाश्रयत्वेनैव वा। अनन्तरमेव क्रौञ्चद्वन्द्व-वियोगोत्थ शोकः श्लोकत्वमागतः' इत्यादिकारिकायामयं रसः काव्यात्मत्वेन प्रतिपादितः। ध्वन्यालोके प्रतीयमानस्यास्य रसस्यावबोधने क्षमयोः शब्दार्थयोरपि ध्वनिरिति संज्ञोक्ता। उक्तं हि तत्र—'ध्वनति ध्वनयतीति वा प्रतीयमानमर्थम् आत्मानं गुणीकृत्येति ध्वनिः।' ध्वनिकारमनुसरता वाग्देवतावतारेण मम्मटेनापि 'इदमुत्तममतिशयिनि व्यङ्ग्ये वाच्याद् ध्वनिर्बुधैः कथितः' इति स्वरचितकारिकाया वृत्तावेवमुक्तम्—'इदमिति काव्यम्। बुधैर्वैयाकरणैः प्रधानभूतस्फोटरूप-व्यङ्ग्य-व्यञ्जकस्य शब्दस्य ध्वनिरिति व्यवहारः कृतः ततस्तन्मतानुसारिभिरन्यैरपि (आलङ्कारिकैरित्यर्थः) न्यग्भावित-वाच्य-व्यङ्ग्य-व्यञ्जनक्षमस्य शब्दार्थयुगलस्य'। एतेन स्पष्टमेतत् तथ्यं यत् न्यग्भावितवाच्यो व्यङ्ग्यार्थस्तु ध्वनिः कथ्यत एव, तस्य व्यङ्ग्यार्थस्य व्यञ्जनेक्षमस्य शब्दार्थयुगलस्यापि ध्वनिसंज्ञा। ध्वन्यालोककार आनन्दवर्धन इव मम्मटाचार्योऽपि रसध्वनेः श्रेष्ठत्वं मन्यमान ए-वालङ्कारादिरहितमपि 'यः कौमारहरः स एव हि वरस्ता एव चैत्रक्षपास्ते चोन्मीलितमालतीसुरभयः प्रौढाः कदम्बानिलाः। सा चैवास्मि तथापि तत्र सुरतव्यापारलीलाविधौ, रेवारोधसि वेतसीतरुतले चेतः समुत्कण्ठते॥' इत्यादि पद्यमुत्तमकाव्यस्योदाहरणं वक्ति, शृङ्गार-व्यञ्जकत्वादस्य। एतत्पूर्वमपि काव्यप्रयोजनेषु 'सद्यः परनिर्वृतये' इत्यत्रोक्तं प्रयोजनं वृत्तौ व्याचक्षाण आचार्य एव वक्ति—'सकलप्रयोजनमौलिभूतं समनन्तरमेव रसास्वादनसमुद्भूतं विगलितवेद्यान्तरमानन्दं—काव्यं—कवेः सहृदयस्य च करोति'। काव्यरसास्वादनसमुद्भूतस्यानन्दस्य सकलेषु प्रयोजनेषु मौलिभूतत्व-प्रतिपदनात्, स रस एव मम्मटमतेन काव्यात्मेति निष्कर्षः। परनिर्वृतिरिति कथनेन रसस्य परमानन्दरूपताऽपि प्रतिपादिता भवति।

आचार्यः क्षेमेन्द्रः स्वकीये औचित्यविचारचर्चाख्ये ग्रन्थे 'औचित्यमेव काव्यस्य जीवितं जीवातु वा यद्यपि प्रतिपादितवान्, तथापि किमपेक्ष्य काव्ये औचित्यं भवेदिति प्रश्नस्य समाधानं तस्य 'औचित्यं रससिद्धस्य स्थिरं काव्यस्य जीवितम्' इत्यत्र कृतम्। काव्यस्य काव्यत्व-साधकं रसमपेक्ष्य अन्येषां काव्याङ्गानां प्रकृत्यादीनामौचित्यम्, इति निष्कर्षः। तस्मात् काव्यस्य काव्यत्वं रसेनैव सिद्ध्यति, रस एव काव्यस्यात्मेति वचनभेदेन क्षेमेन्द्रोऽपि कथयति। तस्यैतन्मतमौचित्यविषयकमनुरुध्यैव ध्वन्यालोके आनन्दवर्धनोऽपि 'औचित्योपनिबन्धस्तु रसस्योपनिषत् परा' इत्युक्तवान्। इमं सन्दर्भमुद्धरन् मम्मटोऽपि तन्मतेन सह स्वकीयं सामञ्जस्यमैक्यं वा प्रकटीचकार। मम्मटस्य

'तददोषौ शब्दार्थौ' इत्यादिवत् काव्यकाञ्चनकषाश्ममानिनाऽचार्येण कुन्तकेनापि 'शब्दार्थौ सहितौ, वक्रकविव्यापारशालिनि। बन्धे व्यवस्थितौ काव्य तद्विदाह्लादकारिणि' (वक्रोक्तिजीवितम् १/७) इत्यत्र शब्दार्थयोरेव काव्यत्व प्रतिपादितम्। केवलमेतन्मात्रमधिक तेनोक्त यदेतौ शब्दार्थौ वक्रकविव्यापारशालिनि बन्धे स्थितावेव काव्यसज्ञा लभेते, अथ चैतादृशो बन्ध एव विविधवक्रोक्ति-मार्गे निपुणाना सहृदयानामाह्लादकारी भवति। एवमेतन्मतेऽपि काव्यस्याह्लादकरत्वमेव परम प्रयोजन यद् वक्रोक्त्यभावे नैव सिध्यति। इय वक्रोक्तिश्च 'वैदग्ध्यभङ्गीभणिति (१/१०)। एव कुन्तक रसोक्तौ वक्रोक्तौ च नान्तर मनुते। वक्रोक्ति रसप्रतिपादनस्य प्रभविष्णु साधनमित्यस्य सिद्धान्तस्य परिणति। अस्मादभिन्न मत वाग्भटस्यास्ति यो 'वाग्वैदग्ध्यप्रधानेऽपि रस एवात्र जीवितम्' इति वक्ति। अनेन कथनेन स्पष्टमेतत् तथ्य यद् रस एव काव्यस्य जीवित प्राण आत्मा वा, तदभिव्यक्तौ च वाग्वैदग्ध्यस्य प्राधान्यम्।

रसविषये एतेभ्य सर्वेभ्यो विशिष्ट मत साहित्यदर्पणकारस्य विश्वनाथस्यास्ति। स केवल रसात्मक प्रबन्ध काव्य मन्यते। तन्मतेन रसरहितस्य प्रबन्धस्य काव्यत्वमेव नास्ति। काव्यस्यैकमात्र घटक तत्त्व रस एव वर्तते, यथोक्त तेन—'वाक्य रसात्मक काव्यम्' इति। अस्य व्याख्या विदधता तेनैवमुक्तम्—'रस एवात्मा साररूपतया जीवनाधायको यस्य। तेन विना तस्य काव्यत्वाभावस्य प्रतिपादितत्वात्'। रसाभावे काव्यत्वाभावप्रतिपादनमेतत्पूर्वं साहित्यदर्पणकारेण कृतम्। तत्र प्रधानतया मम्मटस्य काव्यलक्षण दूषयता तेनोक्तम्—"काव्यस्वरूपेणाभिमतयो शब्दार्थयो रसोऽस्ति, न वा? नास्ति चेद्, गुणवत्त्वमपि नास्ति, गुणाना तदन्वयव्यतिरेकानुविधायित्वात्। अस्ति चेत्, कथ नोक्त रसवन्ताविति विशेषणम्। गुणवत्त्वान्यथानुपपत्त्यैतल्लभ्यते इति चेत्, तर्हि सरसावित्येव वक्तु युक्त, न सगुणाविति।...गुणाभिव्यञ्जकशब्दार्थवत्त्वस्य काव्ये उत्कर्षमात्राधायकत्वम् न तु स्वरूपाधायकत्वम्।...यत्तु ध्वनिकारेणोक्तम्-'काव्यस्यात्मा ध्वनि' इति, तत् किं वस्त्वलङ्काररसादिलक्षणस्त्रिरूपो ध्वनि काव्यस्यात्मा, उत रसादिरूपमात्रो वा ? नाद्य, प्रहेलिकादावतिव्याप्ते। द्वितीयश्चेद् ओमिति ब्रूम।" एतया प्रतिपक्षसमीक्षया काव्यस्य रसात्मकत्वे साहित्यदर्पणकारस्य बल सुस्पष्टम्। अन्येषामाचार्याणा काव्यलक्षणेषु रसात्मकत्वविषये स्पष्टकथनाभावादेव तेषामीदृशी समीक्षा कृता दर्पणकारेण।

विश्वनाथात् तत्पूर्ववर्तिभ्यश्चाचार्येभ्योऽपि सुदूरपूर्वं जात आचार्यभरत सर्वेभ्य प्रथम 'न हि रसादृते कश्चिदर्थ प्रवर्तते' इत्याह। तस्य 'विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्ति' इति रसविषयक सूत्रमद्यावधि सुप्रतिष्ठित सर्वै काव्यशास्त्राचार्यैरनेकशो व्याख्यात वर्तते। लोल्लटशङ्कुकभट्टनायकाभिनवगुप्तकृता व्याख्या विशेषत प्रसिद्धा। तत्र भट्टलोल्लट तदनुयायिनामुत्पत्तिपक्ष। तेषा मतेन विभावैर्ललनोद्यानादिभिरालम्बनोद्दीपनकारणै रत्यादिको भावो जनित, अनुभावै कटाक्षभुजाक्षेपप्रभृतिभि कार्यै प्रतीतियोग्य कृत, व्यभिचारिभिर्निर्वेदादिभि सहकारिभिरुपचितो मुख्यया वृत्त्या रामादौ अनुकार्ये, तद्रूपसन्धानान्नर्तकेऽपि प्रतीयमानो रस। एवमेव काव्ये नाट्येऽपि ज्ञेयम्। शङ्कुक-तदनुसारिभिश्च रसोऽनुमेयो न त कार्यो मन्यते। तेषा मते 'निष्पत्ति'-शब्दस्यानुमितिरर्थ। अस्मिन्मते संयोगादित्यस्य गम्यगमकभावरूपादित्यर्थ। भट्टनायकतदनुयायिना मते रसानुभूति साक्षाद्रूपेण सामाजिकनैव क्रियते। किन्तु ते रसस्याभिव्यक्ति नैव मन्यते, यतो हि अभिव्यक्ति पूर्वत सिद्धाना पदार्थनामेव भवति। रसस्तु न पूर्वत सिद्धोऽपितु भुज्यमानस्थायिभावो भोगसमकालमेव रसो भवति। अभिनवगुप्ततन्मतानुयायिना मम्मटादीनामाचार्याणा मतेन रसो व्यज्यते एव। अस्यालौकिकता प्रतिपादयता मम्मटेनैवमुक्तम्—"काव्ये नाट्ये च कारणत्वादिपरिहारेण विभावनादिव्यापरवत्त्वादलौकिकविभावादिशब्दव्यवहार्यै साधारण्येन प्रतीतैरभिव्यक्त, सामाजिकाना वासनात्मतया स्थित स्थायी रत्यादिक, सकलसहृदयसंवाद-भाजा प्रमात्रा साधारण्येन गोचरीकृत, चर्व्यमाणतैकप्राणो विभावादिजीवितावधि, पानकरसन्यायेन चर्व्यमाण, अन्यत्सर्वं तिरोदधदिव, ब्रह्मास्वादमनुभावयन्निव, अलौकिकचमत्कारकारी शृङ्गारादिको रस"।

स च न कार्य, विभावादिविनाशेऽपि तस्य सम्भवप्रसङ्गात्। नापि ज्ञाप्य, सिद्धस्य तस्यासम्भवात्। अपितु विभावादिभिर्व्यञ्जितश्चर्वणीय। कारकज्ञापकाभ्यामन्यत् क्व दृष्टमिति चेत्। न क्वचिद्दृष्टमित्यलौकिक सिद्धेर्भूषणमेतन्न किञ्चिद् दूषणम्। रसस्यास्य नव भेदा इति प्रायेण सर्वेऽपि जानन्ति किन्तु भरतेन नाट्यशास्त्रे अष्टावेव रसा नाट्यकाव्ये स्वीकृतास्ते च काव्यप्रकाशे स्वस्वस्थायिभावसहिता एव सङ्ख्याता—

'शृङ्गारहास्य-करुण-रौद्र-वीर-भयानका।
बीभत्साद्भुत-सञ्ज्ञौ चेत्यष्टौ नाट्ये रसा स्मृता॥'

रतिर्हासश्च शोकश्च क्रोधोत्साहौ भय तथा।
जुगुप्सा विस्मयश्चेति स्थायिभावा प्रकीर्तिता ॥
—काव्यप्रकाश ४ २९, ३०

एव शृङ्गारस्य स्थायिभावो रति, हास्यस्य हास, करुणस्य शोक, रौद्रस्य क्रोध, वीरस्योत्साह, भयानकस्य भय, बीभत्सस्य जुगुप्सा अद्भुतस्य च विस्मय । नाट्येतर काव्येषु एतदतिरिक्तत्वेन नवमो रस शान्ताख्यो निर्वेद स्थायिभावात्मको मम्मटेनानन्तरकारिकायामुक्तम्—'निर्वेदस्थायिभावोऽस्ति शान्तोऽपि नवमो रस', इति । त्रयस्त्रिशद्व्यभिचारिभावेषु निर्वेदस्य व्यभिचारित्वेऽपि अपरिगणनस्य कारण कथयन् मम्मटाचार्यो 'निर्वेदस्यामङ्गलप्रायस्य प्रथममनुपादेयत्वेऽप्युपादान व्यभिचारित्वेऽपि स्थायिताऽभिधानार्थम्' इत्याह । अन्येऽभिनवगुप्ताचार्यादयो मङ्गलात्मक प्रशममेवास्य शान्तरसस्य स्थायिभावमाहु ।

किंस्वरूपा पुनरेते स्थायिभाव विभावानुभाव व्यभिचारिण इतीदानी सक्षेपेण प्रस्तूयते। सर्वप्रथम स्थायिभावस्य स्वरूप प्रदर्शयति—

'विरुद्धैरविरुद्धैर्वा भावैर्विच्छिद्यते न य ।
आत्मभाव नयत्यन्यान् स स्थायी लवणाकर ॥'
चिर चित्तेऽवतिष्ठन्ते सम्बध्यन्तेऽनुबन्धिभि ।
रसत्व ये प्रपद्यन्ते प्रसिद्धा स्थायिनोऽत्र ते॥

अत्र चिरमिति व्यभिचारवारणाय उक्तम्। अनुबन्धिभिरित्यस्य विभावादिभिरित्यर्थ । विभावस्य स्वरूपम् एवमुक्तम्—

बहवोऽर्था विभाव्यन्ते वागङ्गाभिनयाश्रिता ।
अनेन यस्मात् तेनाय विभाव परिकीर्तित ॥
आलम्बन स तु रसो यमालम्ब्य प्रवर्तते।
उद्दीप्यते रसो येन स चोद्दीपनसञ्ज्ञक ॥

एवमालम्बनोद्दीपनभेदेन विभावो द्विविध प्रोक्त । स्थायिभावाननुभावयन्त कटाक्ष-भुजाक्षेपादयो रसपोषका अनुभावा उच्यन्ते, यथोक्तमाचार्यभरतेन—

'अनुभावो विकारस्तु भावससूचनात्मक'

इति। सात्त्विका अप्यष्टौ स्तम्भादयोऽनुभावरूपा एवेति न तत पृथगुक्ता। व्यभिचारिण सञ्चारीत्यपरसञ्ज्ञकाना स्वरूपमेवमुदीरितमाचार्यै—

'विशेषादाभिमुख्येन चरन्तो व्यभिचारिण।
स्थायिन्युन्मग्ननिर्मग्ना कल्लोला इव वारिधौ॥'

वस्तुतो विभावनानुभावनसञ्चारणात्मकव्यापारत्रयवत्त्वम् एव विभावादित्वम्। एभि व्यापारै रत्यादे क्रमश ईषत्प्रकाश स्फुटतरप्रकाश, स्फुटतमप्रकाशो जायते, यस्य फल विगलितवेद्यान्तर पुर स्फुरन् चमत्कारैकस्वरूपोऽलौकिको रसो ब्रह्मानन्दस्वरूप ।

□

# रीतिरात्मा काव्यस्य

संस्कृतकाव्यशास्त्रस्येतिहासस्य सर्वेक्षणेन अविवादास्पद तथ्यमेतद् उन्मीलित भवति यद् ध्वनिसिद्धान्तस्योदयात् प्राक् रीतिर्गुणालङ्कारवद् उत्तमकाव्य-बन्धस्य अत्यधिकम् उत्कर्षाधायकम् एव च महत्त्वपूर्ण तत्त्वमासीत्। परवर्तिषु कालेषु क्रमेण रीतिसिद्धान्तोऽवरुद्धविकासो जात । ध्वनि-सिद्धान्तस्य स्थापनया सहैव ध्वनौ रीतेरन्त-र्भावस्य प्रक्रिया प्रारब्धा। ध्वनिकारस्यानन्दवर्धनस्यैव साक्ष्य प्रामाण्य चाऽस्मिन् विषये द्रष्टव्यम् ३।४६ ध्वनिकारिकाया, तस्या वृत्तौ च--

"अस्फुटस्फुरित काव्यतत्त्वमेतन्मयोदितम्।
अशक्नुवद्‌भिर्व्याकर्तुं रीतय सम्प्रवर्तिता ॥

इति । एतद् ध्वनिप्रवर्तनेन निर्णीत काव्यतत्त्वमस्फुटस्फुरित सद् अशक्नुवद्‌भि प्रतिपादयितु वैदर्भी गौडी पाञ्चाली चेति रीतय प्रदर्शिता । रीतिलक्षणविधायिना हि काव्यतत्त्वमेतदस्फुटतया मनाक्स्फुरितमासीदिति लक्ष्यते।" कथनस्येद तात्पर्यं यद् वामनादीनामाचार्याणा मनसि रीतिरूपेण स्फुरित किन्तु ध्वनिरूपेणास्फुटम् अस्पष्ट स्फुरित प्रकाशितमेव काव्यतत्त्वमिदानीम् अस्माभि ध्वनिरूपेण निर्णीतम्। अस्पष्टरूपेण प्रकाशिततया तत्त्वमेतद् व्याकर्तुं विशकलयितु चाऽक्षमा रीतिनाम्ना प्रतिपादितवन्त । ताश्च वैदर्भी गौडी पाञ्चाली चेति त्रिविधा कल्पिता गुणादिभेदेन। कथ रीतिरिति सञ्ज्ञया प्रतिपादित काव्यतत्त्व ध्वनितो न भिन्नमिति प्रश्नो लोचनकारेण अभिनवगुप्ताचार्येण "रीतिर्हि गुणेषु पर्यवसिता गुणाश्च रसपर्यवसायिन एव" इत्युक्त्वा समाहित । एतेनेदमुक्त भवति—रीतिर्गुणेष्वाश्रिता, गुणा ओजप्रसादमाधुर्यादय एव तस्या निर्णायका, अतस्तत्प्राधान्याद् रीतिर्गुणषु पर्यवस्यति। गुणा अपि 'ये रसस्याङ्गिनो धर्मा शौर्यादय इवात्मन । अचलस्थितयो गुणा'[1] इत्युक्ते रसस्य पोषका नित्या धर्मा यतस्तस्मात् ते रसपर्यवसायिन । एव सति रीते रसादिध्वनावेव अन्तर्भाव । एव ३।४६

---

१ काव्यप्रकाश, अष्टमोल्लास

ध्वनिकारिकाया वृत्तौ उपनागरिकादीना शब्दवृत्तीना कैशिक्यादीनामर्थवृत्तीना चापि ध्वनावेवान्तर्भाव आनन्दवर्धनेन एवं कृतम्—

"या काश्चित् प्रसिद्धा उपनागरिकाद्या शब्दतत्त्वाश्रया वृत्तयो,
याश्चार्थतत्त्वसम्बद्धा कैशिक्यादयस्ता सम्यग् रीतिपदवीमवतरन्ति।"
रीतिपदवीमिति तद्वदेव रसपर्यवसायित्वादिति लोचनकार।

एव रीतिवद् रसपर्यवसायित्वादेव शब्दाश्रया अर्थाश्रयाश्च वृत्तयोऽपि रसादि ध्वनावेव पर्यवस्यन्तीति द्वयो कथनयोस्तात्पर्यम्। अस्मात् स्पष्टमेतत् तथ्य यत् काव्यवन्धस्योत्कर्षाधायकतत्त्वरूपेण वामनप्रतिपादितस्य रीतिरात्मा काव्यस्येति सिद्धान्तस्य आनन्दवर्धनोपरि प्रभूत प्रभाव आसीत्। यद्यपि स्वग्रन्थस्य आदावेव[1] तेनोक्त यद् उद्भटादिभि पूर्वैरालङ्कारिकै केवल काव्यस्य वाह्यपक्षो वाच्यार्थ एव उपमादिभिरनेकै प्रकारैर्बहुधा विवेचितो येन कारणेन स पक्षस्तेन नात्र प्रतन्यते—

"तत्र वाच्य प्रसिद्धो य प्रकारैरुपमादिभि।
वहुधा व्याकृत सोऽन्यैस्ततो नेह प्रतन्यते॥"

इति, तथापि तन्मतेन रीते काव्यात्मत्वेन प्रतिपादयिता वामनस्तेभ्य पृथक् आसीदित्यत्र न कोऽपि सन्देह। कथमन्यथा स्वकीयस्य काव्यस्यात्मा ध्वनिरिति सिद्धान्तस्य रीतिरात्मा काव्यस्येति रूपेण कृतस्य पूर्वदर्शनस्य पूर्वाभासस्य वा गौरव स वामनाय अदास्यत। इदमिदानीं द्रष्टव्यम्—वामनस्य रीतिसिद्धान्तेन काव्यस्य वास्तविकस्य आन्तरिकस्य वा सौन्दर्यस्योत्कर्षस्य च व्याख्या कियत् समुचिता सन्तोषप्रदा च।

वस्तुतो वामनेनैव अलङ्कारशास्त्रेतिहासे सर्वप्रथम काव्यस्यात्मान निर्धारयितु प्रयत्नो विहित। तेन रीति काव्यात्मत्वेन प्रतिपादिता, सा च तन्मतेन[2] 'विशिष्टा पदरचना'। विशेषोऽपि तेन गुणात्मक प्रोक्त। एव वामनमतेन गुणाना समवायेनैव काव्ये वास्तविक सौन्दर्यम् उत्कर्षो वाऽऽयाति। रीतेर्लक्षणे समाविष्ट पदरचनेति पद काव्यस्य शरीर, 'विशिष्ट' इति च तस्यात्मानमान्तरिकोत्कर्षाधायक तत्त्व 'गुण' सङ्केतयति। एव गुणाना समुचितोपयोग एव काव्यवन्धे सौन्दर्याधायक समुत्कर्षाधायको वा। अभिनवगुप्ताचार्येणापि वाच्य व्यङ्ग्यार्थौ सामान्य नि ...पदाभ्या व्याख्यातौ। रीतिप्रतिपादकेन वामनाचार्येण द्वौ परस्पर पृथक्कृतमिति नैव विस्मर्तव्यम्। तेन प्रोक्तम्

---

१ ध्वन्या १।३

२ काव्यालङ्कारसूत्र, तद्वृत्तिश्च—रीतिरात्मा काव्यस्य। विशिष्टा पदरचना रीति। विशेषो गुणात्मा।

'काव्यशोभाया कर्तारो गुणा तदतिशयहेतवस्त्वलङ्कारा' इति। गुणाना समष्टि समूह समुदायो वा तेषा व्यष्टि पृथग् भिन्नो वा। सामान्यत प्रत्येकगुण काव्यबन्धे सौन्दर्यमुत्कर्षं वोत्पादयति, तेषा समुदाय पुन विभिन्नप्रकारकम् एव सौन्दर्यं शोभा वा जनयति। एव गुणासमुदायात्मिकया रीत्योत्पादित सौन्दर्य गुणाव्यक्त्या गुणव्यष्ट्या वा उत्पादिताद् गुणात् पृथगेव भवति। अभिनवगुप्तेन ध्वन्यालोक-लोचने अत्यन्तशोभनप्रकारेण सुस्पष्ट कृतमेतत् तथ्यम्–

"तेषा (गुणाना) समुचितवृत्त्यर्पणे यदन्योन्यमेलनक्षमत्वेन पानक इव गुणमरिचादि-रसाना सङ्घातरूपतागमन दीप्त-ललित-मध्यमवर्णनीयविषय गौडीय वैदर्भ-पाञ्चाल-हेवाकप्राचुर्यदृशा, तदेव त्रिविध रीतिरित्युक्तम्।"

किन्तु एव सत्यपि गुणसमुदायात्मिकया रीत्योत्पादितमुत्कर्षं काव्यसौन्दर्यं वा गुणव्यष्ट्योत्पादिते उत्कर्षेऽन्तर्भावयितु यच्छैम्यम् अधर्य चावलम्बित, तेन कारणेन रीते सम्मुचितमूल्याङ्कने स विफलो जात। एकतस्तु स रीत्यन्तर्गते गुणसमुदाये पानकस्य गुडमरिचादि-सम्मिश्रणे च सादृश्य सारूप्य वा प्रदर्शयति, अपरत पुन स एकैकगुणाद् गुण-समुदाय तदात्मिका रीति च नैव विशिनष्टि पृथक्-करोति वा। गुण-मरिचादीना पृथक्-पृथक् स्वादास्तेषा परस्परमिश्रणेनोद्भूतस्य पानकस्यैकस्मादेव विचित्रादभुतात् च स्वादादभिन्न इति कथ स्वीकर्तव्यम्? किं गुड मरिचमन्यद्वा किञ्चिद् भुक्त्वा पानकस्य विचित्र स्वादमनुभवितु शक्नोति कश्चित्? एवमेतत् तथ्य सर्वथा सुस्पष्ट यद् ध्वनिकारेण तदनुयायिभिश्च काम कियानपि प्रयत्नो रीति गुणेषु समावेशयितुमन्तर्भावयित वा क्रियेत, तदुत्पादिता कापि विशिष्टा काव्यबन्ध-शोभा तदुत्कर्षश्च तै प्रत्याख्यातु निराकर्तु च नैव शक्यते। यदि ध्वनिसम्प्रदायानुयायी तत्प्रतिपादको वा अङ्गनाया[1] शरीरे तदङ्गेभ्य पृथक् प्रतीयमानमद्भूत लावण्य तेषामङ्गना शोभासु नैव समावेशयति, नैवान्तर्भावयति अपितु समुदायात्मकत्वेनानुभूयमानत्वात् पृथगेव मनुते, तर्हि रीतिसम्प्रदाय-प्रतिपादकस्तदनुयायी च गुणसमुदायात्मिका रीतिं तदुद्भाविता शोभा च पृथक्-पृथग्गुणेभ्यस्तदुत्पादितशोभाभ्यश्च कथ पृथक्-कर्तुं विशिष्टा वा मन्तु नैव शक्नोति? ध्वन्यालोके आनन्दवर्धनेन स्पष्टमेवोक्तम्–

"प्रतीयमान पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम्।
यत् तत्प्रसिद्धावयवातिरिक्त विभाति लावण्यमिवाङ्गनासु" ॥[2]

१ प्रशस्तानि अङ्गानि यस्या सा अङ्गना (अङ्ग + न प्रत्यय + टाप्)।
२ ध्वन्यालोक १।४।

इति। एवं यदि समस्तशरीर-व्यापि एकमेव लावण्यमेकैकाङ्गानां लावण्यात् पृथक् विशिष्टं वा, यदि वाच्यात् पृथक् प्रतीयमानं व्यङ्ग्यं ततो भिन्नं विशिष्टं वा, तर्हि गुणसमुदायात्मिका रीतिरपि एकैक-गुणेभ्यः कथं पृथग् विशिष्टा वा न भवति ?

रीतेर्धारणायाः विकासस्येतिहासो दीर्घकालिकः। सर्व-प्रथमं काव्यबन्धस्य सौन्दर्योत्कर्षो ऽवश्यमेव [१]व्यस्तगुणेष्वेवाश्रितोऽनुमीयते। दण्डिनः काव्यादर्शे वर्णितयोः गौडवैदर्भमार्गयोर्धारणायाः समुदयात् प्राक् व्यस्तगुणा एव काव्यमार्ग-प्रतिनिधीभूता भवेयुरिति सम्भाव्यते। परवर्तिषु कालेषु क्रमेण गुणाः सामस्त्येनैव विभिन्नदेशीनां कवीनां विभिन्न-काव्यमार्गाणां वैशिष्ट्यरूपेण विकसिता भवेयुः। दशापि गुणाः सामस्त्येन वैदर्भमार्गस्यात्मरूपेण प्राणरूपेण वा दण्डिना दृष्टाः। केवलं मार्ग-गतैरपि गुणैः सामस्त्येन उद्भावितस्य काव्यबन्ध-सौन्दर्यस्य तदुत्कर्षस्य वा समुचितं विश्लेषणं तेन नैव कृतम्। तदनन्तरमाचार्यवामनेन गुणसमुदायात्मिकायाः रीतेः समुचितप्रयोगस्य कार्यं फलं वा स्वीकृतम् यत् काव्यबन्ध-सौन्दर्यम्। अनेन प्रकारेण, काव्यसौन्दर्यं व्यस्तगुणानां समुचितप्रयोगस्यैव फलं कार्यं वेति प्रवर्तमाना धारणा वामनाचार्यस्य रीति-सम्प्रदायस्य चरममुत्कर्षमवाप।

आचार्यवामनेन शब्दार्थयोः पृथक्-पृथक् दश गुणाः स्वीकृताः।[२] सर्वेषाम् आलङ्कारिकाणां मध्ये सर्व-प्रथमं स एव गुणान् एवं विभाजितवान्। स दश शब्दगुणान् पदबन्धस्य काव्यबन्धस्य वा गुणान् उक्तवान्। एवमेव उक्तिवैचित्र्य-दीप्तरसत्वादिरूपान् दशार्थगुणान् परिभाषितवान्। अर्थगुणानां क्षेत्रम् इयद् विस्तृतं यद् रसस्य सर्वविधं सौन्दर्यं वामनस्य कान्तिसञ्ज्ञके गुणे समाविष्टम्। एवं अर्थस्य सूक्ष्मा भेदा विच्छित्तयो[३] वा वामनस्य समाधिसञ्ज्ञके गुणे, उक्ति-वैचित्र्याणि च माधुर्य-सञ्ज्ञके गुणेऽन्तर्भूताः।[४] एवं वामनेन रीतिद्वारेण काव्यबन्धस्य सर्वविधं सौन्दर्यं समुत्कर्षो वा चेत-पथमानीतोऽखिललक्ष्यीकृतो वा। यदारभ्य ध्वनिसम्प्रदाये ओज-प्रसाद-माधुर्याख्यानां त्रयाणामेव गुणानां सिद्धान्तः प्रतिपादितो यत्र वामनस्य सर्वेषामेव विंशतिगुणानामन्तर्भावः

१ पृथक्, एकशः।

२ काव्यालङ्कारसूत्रवृत्ति, — ओज-प्रसाद-श्लेष-समता-समाधि-माधुर्य-सौकुमार्योदारतार्थव्यक्ति-कान्तयो बन्धगुणाः। बन्धः पदरचना, त एव शब्दगुणाः।

३ Shades of meaning.

४ काव्यालङ्कारसूत्र, ३.२.१० — दीप्तरसत्वं कान्तिः। उक्तिवैचित्र्यं माधुर्यम्।

कृताः, तत एव कालात् रीतिसम्प्रदायस्य मूलानि शिथिलबन्धानि जातानि, क्रमेण चोच्छिन्नानि बभूवु । तस्य महत्त्व चापि ह्रासमवाप । फलतो रीति काव्यस्यात्मा[१]जीवातुर्वा न गृह्यते स्म । सा केवल काव्यसौन्दर्यस्य आधायक तत्त्वमात्र गृह्यते स्म ।

किन्तु ख्रिष्टीयदशमशताब्द्या जात आचार्यकुन्तको वामनस्य वैदर्भी गौडी पाञ्चाली चेति तिस्रो रीती सुकुमार विचित्र-मध्यमेतिमार्ग त्रयनामभि पुन स्थापितवान्स्वकीये वक्रोक्तिजीविते । दण्डिनो मार्गद्वयस्य, वामनस्य च तिसृणा रीतीना दशगुणाना च सर्वथाऽभिनव मौलिक च विश्लेषण कुन्तकेन कृतम् । तेन षडेव गुणा स्वीकृता, ते च प्रसाद-माधुर्य लावण्याभिजात्यौचित्यसौभाग्यसञ्ज्ञका । एतेषु प्रथम चत्वार सुकुमारविचित्रयोर्द्वयोरेव मार्गयोरुपस्थिता स्वीक्रियन्ते—

"सन्ति तत्र त्रयो मार्गा कविप्रस्थानहेतव ।
सुकुमारो विचित्रश्च मध्यमश्चोभयात्मक ॥" इति (वक्रोक्ति)

अत्र 'मार्गा कविप्रस्थानहेतव ' इत्येभि शब्दै 'कविप्रस्थानहेतुर्मार्ग' इति मार्गस्य लक्षण प्रस्तुतमाचार्यकुन्तकेन । 'वक्रोक्ति काव्यजीवितम्' इति प्रस्तुवन् कुन्तको निस्सन्देह स्वतन्त्रचिन्तक आचार्य सस्कृत-काव्यशास्त्रजगतो यद्यपि, तथापि प्रकारान्तरेण स दण्डिनो वामनस्य च प्रबलसमर्थक । कुन्तकस्य मतेन कवि-प्रस्थान- हेतुभूतास्त्रयो मार्गा कवे प्रकृति रुचि स्वभाव वाऽनुसरन्ति । नैतेऽत्र भौगोलिकक्षेत्रविशेषेषु आश्रिता आधृता वा, यथा दण्डिनो मते । कुन्तकस्य सुकुमारमार्गो दण्डिनो वैदर्भमार्ग, वामनस्य च वैदर्भी रीतिरस्ति । तस्य विचित्रमार्गो दण्डिनो गौडमार्गो, वामनस्य च गौडी रीतिरस्ति । एवमेव तस्य मध्यममार्गो वामनस्य पाञ्चाली रीति । दण्डी द्वावेव मार्गौ स्वीकरोति । दण्डिवामनयोर्द्वयोरेवाचार्ययोर्मतेन वैदर्भमार्गे वैदर्भ्यां रीतौ वा नैकेषा गुणाना समवायो भवति । अत एव च सर्व-श्रेष्ठा रीतिर्वैदर्भी । किन्तु कुन्तकस्य मतेन त्रय एव मार्गा रीतयो वा सममेव गुणयुक्ता । अस्मिन् विषये तस्याय तर्को यद् यद्येव न स्यात्, न कोऽपि कविर्विचित्रेण मध्यमेन वा मार्गेण स्वकाव्य कुर्यात् । किन्तु नेद तथ्यम्, ततु अन्यथैव वर्तते । सुबन्धु-बाण-कविराजप्रभृतयोऽनेके उत्कृष्टकवय स्वस्व-कृतिषु विचित्रमार्गम्, अपेक्षानुसार क्वचित् क्वचित् मध्यममार्गं चापि अनुसृतवन्त । अतस्तन्मतेन न कोऽपि मार्गान्तराभ्या[२] न्यूनगुणो हीनो वाऽस्ति । यथा तथास्तु, इद तावन्निःसशय

---

१ प्राण ।

२ अन्ये मार्गे मार्गान्तरे (द्विवचन) । ताभ्याम् ।

तथ्य यत् सर्वेषु मार्गेषु गुणालङ्काररसादीना समवायस्य प्रदर्शनेनाचार्यकुन्तको वामनस्य रीतिसिद्धान्त पुनरुज्जीवितवान्। एव यो रीतिसिद्धान्त पूर्वं दण्डिन काव्यादर्शेऽङ्कुरितोऽनन्तर च वामनस्य काव्यालङ्कारसूत्रे पल्लवित, स एवान्तत कुन्तकस्य वक्रोक्तिजीविते फलसम्भृतो जात ।

□

# काव्येषु नाटकं रम्यम्

'काव्येषु' इत्यत्र बहुवचन-प्रयोगेण काव्यस्य अनेका विधा अनेके भेदा अनुमीयन्ते। तेषु भेदेषु नाटकमपि एको भेदोऽस्ति। तेषु सर्वेषु भेदेषु नाटक रम्य विशेषाह्लादकारि भवतीति 'काव्येषु नाटक रम्यमित्युक्तेरभिप्राय। मुख्यरूपेण श्रव्यदृश्यभेदेन काव्य द्विधा भवति, यथोक्त विश्वनाथेन साहित्यदर्पणे—

दृश्यश्रव्यत्वभेदेन पुन काव्यं द्विधा मतम्।
दृश्यं तत्राभिनेयं तद् रूपारोपात्तु रूपकम्॥ —सा.द. ६। १

यत् केवल श्रव्य, तद् महाकाव्य-खण्डकाव्य-गद्यकाव्य-चम्पूकाव्यादिभेदेनानेकविधम्। श्रव्य सदपि यद् दृश्य दृष्ट्या द्रष्टु योग्य तद्रूपकापरपर्याय दशविध भवति। धनञ्जयेन स्वकीये दशरूपके इमा एव दश विधा वर्ण्यविषयत्वेन गृहीता, अतो 'यथा गुणस्तथा नाम' इति न्यायेन गुणानुरूप दशरूपकमिति चरितार्थं नाम तेन कृतम्। अस्य दृश्यकाव्यस्य रूपकमिति नाम रूपारोपकारणात् जातमिति विश्वनाथवचसा स्पष्टमेव। रूपकादतिरिक्त रूपम् इत्यपि नाम दृश्याकाव्यस्य भवतीति दशरूपके धनञ्जयस्य,

अवस्थानुकृतिर्नाट्यं, रूपं दृश्यतयोच्यते।
रूपकं तत्समारोपाद् दशधैव रसाश्रयम्॥—दशरूपकम् १। ७

इति वचनाज्ज्ञायते। एतत्पूर्वं 'दशरूपानुकारेण' (१। २) 'आनन्दनिष्यन्दिषु रूपकेषु' (१। ६) इत्यादौ रूपरूपकयोर्द्वयोरपि नाम्नो प्रयोग कृतो धनञ्जयेन। श्रवणादीन्द्रियाणा शब्दादिवद् नेत्रेन्द्रियस्य विषयो रूपमित्युच्यते। दृश्यानि हि नीलपीतादीनि रूपशब्दवाच्यतया प्रसिद्धानि। एवं नाट्यान्यापि प्रेक्षकादिभिर्दृश्यत्वात् रूपपदाभिधेयत्व लभन्त इति धनञ्जयस्य कथनस्याभिप्राय। रूपकमिति नाम्न कारणरूपेण यत् 'रूपक तत्समारोपाद्' इति धनञ्जयेन, 'रूपारोपात्तु रूपकम्' इति च विश्वनाथेनोक्त, तस्येदमेव तात्पर्यं यन्नटादिषु रामाद्यवस्था-समारोपकारणादेव नाट्यस्य दृश्यकाव्यस्य वा रूपकमिति नाम भवति।

इदमत्रावधेयं यद्रामादीनां पात्राणां विभिन्नानामवस्थानां नटादिभिः अनुकरणत्वादेव दृश्यकाव्यस्य नाट्यमिति नाम भवति। 'नट अवस्कन्दने' इत्यस्माद् धातोर्नटो नाट्यं चेति शब्दौ सिद्ध्यतः। अवस्कन्दनं चाभिनयोऽवस्थानुकरणमेव। इदमप्यवधेयं यद् रूप-रूपकापरपर्यायस्य नाट्यकाव्यस्य दृश्यकाव्यस्य वा दशभेदेषु द्वितीयं नाटकं नाम। एवं नाटयति इति नाटकं तस्याङ्ग प्रकारो भेदो वा। एवं सत्यपि, दशसु भेदेषु नाटकस्यैव सर्वोत्तमत्वात् सर्वप्रधानत्वाच्च नाट्यस्य कृते प्रायेण नाटकशब्दस्य प्रयोगो भवति, भेदस्याऽस्य वा कृते तु भवत्येव। एतावता यत् तथ्यं समक्षमायाति तदिदमेव यन्नाट्यं नाटकं वा लोकवृत्तानुकरणमिति। यथा नाट्यशास्त्राचार्येणोक्तम्—

नानाभावोपसम्पन्नं नानावस्थान्तरात्मकम्।
लोकवृत्तानुकरणं नाट्यमेतन्मया कृतम्॥ —नाट्य १। ११२

कीदृशं तल्लोकवृत्तमिति पूर्वार्धे स्पष्टमुक्तम्—'नानाभावोपसम्पन्नं नानावस्थान्तरात्मकम्' इति। अन्यान्या अवस्था इत्यवस्थान्तराणि, नानाऽनेकानि अवस्थान्तराणि एवात्मा स्वरूपं यस्य तादृशं नाट्यम्। एवमन्यान्यावस्थानां चित्रणमेव विशेषतो नाट्यस्वरूपनिरूपकमिति भरतमुनेरभिप्रायः। इमा अवस्था नानाभावानामभिव्यञ्जिकाः एताश्च भावसमेता इतः पूर्वं मुनिना एवं वर्णिताः —

क्वचिद् धर्मः क्वचिन् क्रीडा क्वचिदर्थः क्वचिच्छमः।
क्वचिद्धास्यं क्वचिद् युद्धं क्वचिन् कामः क्वचिद् वधः॥
धर्मो धर्मप्रवृत्तानां कामः कामोपसेविनाम्।
निग्रहो दुर्विनीतानां मत्तानां दमनक्रिया॥
ईश्वराणां विलासश्च स्थैर्यं दुःखार्दितस्य च।
अर्थोपजीविनामर्थो धृतिरुद्विग्नचेतसाम्॥
—नाट्य १।१०८, ९, ११

'भिन्नरुचिर्हि लोकः' 'विचित्ररूपाः खलु चित्तवृत्तयः' इति मनोवैज्ञानिकं तथ्यम्। अतो लोकानां नानाचरितानि सर्वथा स्वाभाविकानि। एतेषामनुकरणं चित्रणं वा नाट्यकाव्यस्य विषयः। इदं चित्रणं दर्शं दर्शं प्रेक्षकाः सर्वदा स्वप्रहासपूर्वकमपरिमिताह्लाद

परमानन्दं परां निर्वृतिमनुभवन्ति रामादिवत् वर्तितव्यं न रावणादिवदित्याद्युपदेशमपि गृह्णन्ति। यथा भरतेनैवोक्तम्—

धर्म्यं यशस्यमायुष्यं हितं बुद्धिविवर्धनम्।
लोकोपदेशजननं नाट्यमेतद् भविष्यति॥
वेदविद्येतिहासानाम् आख्यानपरिकल्पनम्।
विनोदकरणं लोके नाट्यमेतद् भविष्यति॥ —नाट्य. १। ११६ २२

अनयोरुपदेशजननं गौणम् आह्लादकरणमेव परं प्रयोजनम्। यथा काव्यमात्रस्य प्रसङ्गेन निरूपयता मम्मटेन काव्यप्रकाशे उक्तं "सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे।" इत्यस्यां कारिकायां, वृत्तौ चास्या 'सकलप्रयोजनमौलिभूतं समनन्तरमेव रसास्वादनसमुद्भूतं विगलितवेद्यान्तरमानन्दं • • • • शब्दार्थयोर्गुणभावेन रसाङ्गभूतव्यापारप्रवणतया विलक्षणं यत् काव्यं • • तत् कान्तेव सरसतापादनेनाभिमुखीकृत्य रामादिवद् वर्तितव्यं न रावणादिवदित्युपदेशं च यथायोगं करोतीति सर्वथा तत्र यतनीयम्' इत्याद्यात्मिकायाम्। दशरूपककारोऽपि उपदेशापरपर्यायं व्युत्पत्तिमात्रमानन्दनिस्यन्दिना रूपकाणां तुच्छं फलं वक्ति तदुपदेष्टारं च स्वादुपराङ्मुखं सव्यङ्ग्यं नमस्करोति—

आनन्दनिस्यन्दिषु रूपकेषु व्युत्पत्तिमात्रं फलमल्पबुद्धिः।
योऽपीतिहासादिवदाह साधुस्तस्मै नमः स्वादुपराङ्मुखाय॥ दश. १। ६

नाट्यकारशिरोमणिना कविकुलगुरुणा कालिदासेन चक्षुषोस्तर्पकत्वात् चाक्षुषं क्रतुं, भिन्नरुचीनां लोकानामनेकेषामेकमेव समाराधनसाधनमेतन्नाट्यमुक्तं मालविकाग्निमित्रे—

देवानामिदमामनन्ति मुनयः शान्तं क्रतुं चाक्षुषं
रुद्रेणेदमुमाकृतव्यतिकरे स्वाङ्गे विभक्तं द्विधा।
त्रैगुण्योद्भवमत्र लोकचरितं नानारसं दृश्यते
नाट्यं भिन्नरुचेर्जनस्य बहुधाप्येकं समाराधकम्॥—१।४

नाट्यशास्त्रादुद्धृतयोः श्लोकयोर्यल्लोकोपदेशजननं लोकविनोदकरणं चेति प्रयोजनद्वयं दृश्यकाव्यस्य कथितं भरतमुनिना, तत्रोपदेशजनकत्वं तस्य धर्म्य-यशस्य-

हितबुद्धिविवर्धनायुष्यवस्तुनिबन्धनद्वारा, विनोदकारित्वं च श्रुतिस्मृतीतिहासाद्युक्ताख्यानपरिकल्पनद्वारा सिद्ध्यति। न्यूनाधिकरूपेण एतत् सर्वं श्रव्यकाव्येष्वपि भवत्येव। एतदतिरिक्तं यत् काव्यरसास्वादजन्यं ब्रह्मानन्दसहोदरं परमानन्दरूपं प्रयोजनमौलिभूतं, तत् श्रव्यकाव्यापेक्षया दृश्यकाव्येषु नाटकादिषु अनधिकायासेन अल्पायासेनैव वा प्राप्यते। कारणमस्येदमेव यत् श्रव्यकाव्येषु कविना चित्रिता विभावानुभावव्यभिचारादयः श्रवणविषयीभूता चित्ते संस्काररूपेण सुषुप्तान् रत्यादिस्थायिभावान् उद्बोध्य परिपोष्य च शृङ्गारादिरसरूपतां नयन्ति प्रापयन्ति वा। नाटकादिषु दृश्यकाव्येषु पुनः एते विभावादयो न केवलं श्रवणविषयीभवन्ति अपितु नटादिभिः रङ्गमञ्चे तत्तत्क्रियाभिरनुक्रियमाणाः साकारा भवन्ति रूपं गृह्णन्ति, एवं च प्रेक्षकाणां नयनगोचरीभूताः प्रबलतया शैघ्र्येण च तेषां हृदयं प्राप्य तत्र संस्काररूपेण स्थितान् सुषुप्तान् रत्यादिस्थायिनः उद्बोध्य, तान् रसरूपतया परिणामयन्ति। श्रवणेन्द्रियजन्यसुखापेक्षया चक्षुरिन्द्रियजन्यसुखस्य बलीयस्त्वात् प्रकृष्टतरत्वाच्च नाटकादिप्रेक्षणजन्यं सुखं महाकाव्यादिश्रवणमात्रजन्यसुखान्निस्सन्देहं प्रकृष्टतरं भवति। पाठस्यापि तत्र सत्त्वात् तच्छ्रवणजन्यं सुखं नाटकादिष्वपि भवत्येव। स पाठोऽपि नैव साधारणोऽपितु गीतातोद्याद्यन्वितो भवति। अतस्तस्य रम्यतरत्वं प्रकृष्टमनोहारित्वं च सुस्पष्टमेव। नाट्यशास्त्रे भरतमुनिनैव रूपकस्य वैशिष्ट्यमेतदेव कथितम्—

> जग्राह पाठमृग्वेदात् सामभ्यो गीतमेव च।
>
> यजुर्वेदादभिनयान् रसानाथर्वणादपि॥ (ना॰शा॰ १। १७)

श्लोकेऽस्मिन्नभिनयस्यापि चर्चा कृता। नटादिभिस्तत्तद्भावावस्थादीनामनुकारोऽनुकरणं वाऽभिनयः, अयं च श्रव्यकाव्येष्वसन् दृश्यकाव्येषु नाटकादिषु च सन् विशिष्टतरं किमप्यद्भुतमानन्दं जनयतीति नाभिधानमपेक्षते। एभिरनेकैर्विशिष्टैः कारणैः काव्येषु नाटकं रम्यमुक्तम्। गीतं वाद्यं नृत्यमभिनयादिकं च, एतत् सर्वमवर्णनीयस्यानन्दस्य कारणं भवति।

योऽयमभिनयो नाटकादिदृश्यकाव्येषु श्रव्यकाव्यापेक्षया प्रभूततरस्यानन्दस्य कारणं कथितम्, अस्य मूलप्रकृतिः अनुकरणात्मिका। अनुकरणमेवाभिनयस्य प्राणः, तच्चानुकर्तुर्द्रष्टुरपि च कृते सुखकरं भवति। अतएव बालकादयोऽपि अनेकशः अनेकधा चानुकरणं कुर्वन्तो दृश्यन्ते। अस्य सुखकरत्वादानन्दप्रदत्वादेव नाट्यशास्त्रस्य प्रथमाध्याये

एव भरतेन 'लोकवृत्तानुकरण नाट्यमेतन्मया कृतम्' इत्युक्तम्। धनञ्जयेनापि दशरूपकस्यादावेव 'अवस्थानुकृतिर्नाट्यम्। इत्याद्युक्तम्। एव भरतादय आचार्या अभिनयस्य सीमितसन्दर्भेऽनुकृतिं नाट्यस्यावश्यकमङ्ग तत्त्व वा स्वीकुर्वन्ति। एव तेषा मते लोकवृत्तानुकरणात्मकेनाभिनयेन नाट्यस्यानिवार्यतया सम्बन्धो भवति। किन्तु स्वरूपत काव्यभूतस्य नाटकस्य अनुकरणात्मकत्वमनुकृतिस्वरूपत्व वा नैव स्वीकर्तु शक्यते, यतो हि एव कृते, काव्यस्य तत्कृतेन लक्षणेन सहान्तर्विरोधोऽनिवार्य। यस्य कार्यस्य कृते क्वेर्भारत्या जयोद्घोष क्रियते मम्मटेन, तत् तेन ह्लादैकमयी अनन्यपरतन्त्रा 'निर्मिति' इत्युच्यते। कवे काव्याख्यमिद कार्य निर्मितिस्तन्मतेन कृतिर्न पुनरनुकृति। निर्मितिपदेन काव्यस्य नवनिर्माणरूपत्वमेवाचार्यो निर्देष्टुमिच्छति। अनन्यपरतन्त्रेति पदेनापीदमेव तथ्य प्रकटीक्रियते, यतो हि स्वनिर्मितिरेवानन्यपरतन्त्रा निमित्रिकतन्त्रा भवितुमर्हति। अनुकृतिस्तु अन्यै कृतस्य पूर्वतो विद्यमानस्य वस्तुनो भवति। आनन्दवर्धनस्य,

> "अपारे काव्यससारे कविरेक प्रजापति।
> यथास्मै रोचते विश्व तथेद परिवर्तते॥"

इत्यादिकथनमपि कविना सृष्टस्य विश्वस्य स्व तन्त्रत्वमेव प्रकटीकरोति। प्रजापतेर्ब्रह्मणस्त्रिगुणात्मकस्य विश्वस्यानुकरण चेदिद काव्याख्य कविकर्म भवेत् तर्हि इदमपि त्रिगुणात्मक सत् तद्वत् एव सुखदु खात्मक भवेत्, न सुखमात्रात्मक ह्लादैकमय, तद्वत् एव कट्वम्ललवणादिषड्रसमय न पुन नवरसरुचिर भवेत्। तर्हि सुस्पष्टमेतत् तथ्य यत् भारतीयकाव्यमीमासकाना मतेन 'काव्य' कवे कृतिर्नानुकृति। यतो नाट्यमपि काव्यमेव तत्प्रकारविशेष एव, न तदितरस्तस्मात् वस्तुत तदपि कृतिरेव नानुकृतिर्ब्रह्मण कृते। तत्कारणादेव न तदधीनाऽपितु स्वतन्त्रा। एव सति, नाटकस्य लोकवृत्तानुकरणरूपता तस्याभिनयेनैव सम्बद्धा भवितुमर्हति न तत्स्वरूपेण। अभिनयस्तु निस्सन्देहेमेवानुकरणात्मकोऽनुकृतिरूप पाश्चात्यकाव्यशास्त्रकार अरस्तूमहोदयस्तु महाकाव्य-त्रासदी-कामदीत्यादि-काव्यभेदान् वशी वीणा-सङ्गीतादि कलाभेदवत् अनुकरणभेदानेव स्वीकरोति।[१] सर्वा कला अरस्तूमतेन अनिवार्यरूपेणानुकृतिरूपा एव। अनुकरणस्य माध्यम-विषय विधीना भेदादेन तेषु परस्परभेदो भवति। एतद्विपरीत, सस्कृतकाव्यशास्त्रकारै सामान्यरूपेण सर्वमेव काव्य मुख्यतो विद्या एव। यथा राजशेखरेण

१ द्रष्टव्य, 'Poetics' इति नामक ग्रन्थ।

काव्यमीमासायामुक्तम्—"पञ्चमी साहित्यविद्या इति यायावरीय"। एव पौर्वात्यपाश्चात्यमतयोर्भेद सुस्पष्ट एव। भरतादिमतेन वास्तविकलोकस्वभावस्य तु कविना सम्बन्धो भवत्येव किन्तु कविस्तस्य निबन्धन विधान वा स्वकाव्ये करोति, न पुनरनुकरणम्। अनुकरण तु नाट्यकाव्ये कविना निबद्धस्य लोकवृत्तादेर्नट एव रङ्गमञ्चे करोति। अयमेवाभिप्राय प्रतीयते तेषा कथनस्य।

एव द्वयोर्दृष्ट्योर्भेदेऽपि नाट्याभिनय विषये तयोरैक्य सवादो वाऽस्ति, अभिनयार्थ रचितत्वात् नाट्यस्य। अभिनयस्य च नृत्यगीतातोद्य[1]समन्वितत्वात्, रङ्गमञ्चे तस्य प्रस्तुति सर्वथाऽऽह्लादकरी। अतो नाट्यादिदृश्यकाव्य-प्रेक्षणे श्रव्यकाव्य श्रवणाध्ययनादिजन्यादानन्दाद् आह्लादाद् वाऽनेकगुण[2] आनन्द, समधिकतर आह्लाद प्राप्यते। एतत् तथ्य, नेद कथमपि केनापि प्रत्याख्यातु शक्यते इति ध्रुवम्। अभिनय-प्रेक्षण समये प्रेक्षका आनन्दमहोदधौ निमग्ना आत्मविस्मृतिमितिरा भजन्त इत्यत्र उभयेषामेवाचार्याणा सवाद ऐकमत्य च, न कोऽपि विसवाद। एव 'काव्येषु नाटक रम्यम्' इति कथन सुसङ्गिम्।

□

१ आतोद्य चतुर्विध वाद्य तत घन सुषिरानद्धात्मकम्।
२ कई गुना।

# सङ्गीतं योगसाधकम्

अध्यायत्रयात्मिकाया याज्ञवल्क्यस्मृतेस्तृतीये प्रायश्चित्ताध्याये चतुर्थं 'यति'-नामकं प्रकरणम्। सार्थकमेतन्नाम यतोऽत्र आत्मयोगस्य चर्चा क्रियते महर्षिणा याज्ञवल्क्येन। सा चेदृशी–

द्वासप्ततिसहस्राणि हृदयादभिनिःसृताः।
हिताहिता नाम नाड्यस्तासां मध्ये शशिप्रभम्॥
मण्डलं तस्य मध्यस्थ आत्मा दीप इवाचलः।
स ज्ञेयस्तं विदित्वेह पुनराजायते न तु॥
—याज्ञ. ३। ४। १०८-९

हिताहितेतिसंज्ञका या द्वासप्ततिसहस्राणि नाड्यस्ताभ्योऽपरास्तिस्रो नाड्य इडापिङ्गलासुषुम्नाख्याः। एतासामिडापिङ्गलाख्ये द्वे नाड्यौ सव्यदक्षिणपार्श्वगते हृदि विनिर्गते नासाविवरसम्बद्धे प्राणापानायतने। सुषुम्नाख्या पुनस्तृतीया नाडी दण्डवन्मध्ये ब्रह्मरन्ध्रविनिर्गता। तासां नाडीनां मध्ये मण्डलमेकं चन्द्रप्रभं वर्तते। तस्मिन् मण्डले आत्मा निर्वातस्थ दीप इव अचलः प्रकाशमान आस्ते। स एवम्भूतो ज्ञातव्यो यतस्तस्य साक्षात्करणात् इह संसारे न पुनः संसरति, अमरत्वं प्राप्नोति।

किन्तु आत्मनः साक्षात्काराय मण्डले प्रकाशमाने आत्मनि चित्तस्यैकाग्र्यं सम्पादनीयं, योगः करणीयः, समाधानं साधनीयम्। यथोक्तं कठोपनिषदि अध्यात्मविद्या-विशारदेन भगवता मृत्युदेवेन यमेन नचिकेतसं प्रति–

तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम्।
अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति॥
—१। २। १२

'आत्मनि' इति अध्यात्मम्, अध्यात्मं योगः अध्यात्मयोगश्चित्तस्यात्मविषयकं समाधानमैकाग्र्यं वा, तस्याधिगमः प्राप्तिस्तेनैव देवमात्मानं मत्वा ज्ञात्वा धीरः सन्

संसारी हर्षशोकौ जहाति, जन्ममृत्युबन्धनान्मुक्तो भवतीति यमवचनस्तात्पर्यम्। अनेनेदमुक्तं भवति— विषयान्तरपरित्यागपूर्वकमात्मनि स्वरूपे वा चित्तस्यैकाग्र्यसम्पादनमेवात्मयोगः, स चात्मदर्शनोत्पादनद्वारा मोक्षप्रदो भवति। याज्ञवल्क्येनाप्युपर्युक्तप्रकरणे एवमेवोक्तम्—

> अनन्यविषयं कृत्वा मनोबुद्धिस्मृतीन्द्रियम्।
> ध्येय आत्मा स्थितो योऽसौ, हृदये दीपवत् प्रभुः॥
> —याज्ञ० ३। ४। १११

अस्य व्याख्या विदधता मिताक्षराकारेण विज्ञानेश्वरेण एवमुच्यते—'एतदेव तस्य ध्येयत्वं यच्चित्तवृत्तेर्बहिर्विषयावभासनतिरस्कारेण आत्मप्रवणता नाम, शरावसम्पुटनिरुद्धप्रभाप्रतानप्रसरस्य प्रदीपस्येवैकनिष्ठत्वम्। हृदयाकाशे दहराख्ये स्थितस्यास्यात्मन उपासनं छान्दोग्योपनिषदो दहरविद्याप्रकरणेऽपि विवृतम्। तत्रैवमुक्तम्— 'ॐ अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म, दहरोऽस्मिन्नन्तराकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यं, तद्वाव विजिज्ञासितव्यमिति' (छा० ८। १। १)। एवं कृतेऽपि ब्रह्मणो ध्यानमात्मनो योगो वाऽतिदुष्करमिति नाभिधानमपेक्षते। अतएव चतुर्भुजादिरूपेण ब्रह्मणः साकारत्वं प्रायशः प्रतिपादितं भागवते। इदमेवात्माऽपरपर्यायं हृदयस्थं निराकारं ब्रह्म साकारमिव विदधता व्यासनन्दनेन बालयोगिना शुकदेवेना पाण्डवेयं राजर्षिपरीक्षितं प्रति एवं वर्णितम्—

> केचित् स्वदेहान्तर्हृदयावकाशे प्रादेशमात्रं पुरुषं वसन्तम्।
> चतुर्भुजं कञ्ज-रथाङ्ग-शङ्ख-गदाधरं धारणया स्मरन्ति॥
> —भाग० २। २। ८

योगियाज्ञवल्क्यस्यापि नाविदितमिदमात्मयोगस्य दुष्करत्वम्। अतो विकल्पान्तरं प्रस्तुवता तेन पूर्वोद्धृत-प्रकरणे एवमुक्तम्—

> यथाविधानेन पठन् सामगायमविच्युतम्।
> सावधानस्तदभ्यासात् परं ब्रह्माधिगच्छति॥ —याज्ञ० ३।४।११२

अर्थात् सामध्वन्यनुस्यूतार्थैकाग्रचित्तवृत्तिः पठंस्तदभ्यासवशात् तत्र निष्णातः शब्दाकारशून्योपासनेन परं ब्रह्माधिगच्छति। यथोक्तम्—'शब्दब्रह्मणि निष्णातः परं

ब्रह्माधिगच्छति'। भगवता श्रीकृष्णेनापि भगवद्गीताया दशमेऽध्यायेऽर्जुनं प्रति स्वविभूतीर्वर्णयता साम्नो माहात्म्यं प्रतिपादितं वेदानां सामवेदोऽस्मीत्युक्तवता। किन्तु सामपाठाभ्यासोऽपि दुष्कर एव, स्वरस्खलनादि-दोष परिहारस्य दुःशक्यत्वात्। सामगानाभ्यासस्य कठिनता दुष्करता च मनसि निधायैव याज्ञवल्क्येन लौकिकगीता नुस्मृतात्मोपासनं सविस्तरं विहितम्—

अपरान्तकमुल्लोप्य मद्रकं प्रकरी तथा।

औवेणकं सरोविन्दुमन्तरं गीतकानि च॥

ऋग्गाथा पाठिका दक्षविहिता ब्रह्मगीतिका।

ज्ञेयमेतत्     तदभ्यासकरणान्मोक्षसंज्ञितम्॥—याज्ञ. ३।४।११३-१४

पूर्वस्मिन् श्लोके उक्तानि सप्तगीतकानि, तदनन्तरं चोक्ताश्चतस्रो गीतिका इत्येतदपरान्तकादि-गीतजातम् अध्यारोपितात्मभावं मोक्षसाधनत्वादेव मोक्षसंज्ञकं मन्तव्यम् इति कथनस्य तात्पर्यम्। एवं चित्तस्यैकाग्रताऽऽपादनद्वारेण आत्मयोगाऽऽपादने गीताभ्यासः कारणं भवत्येव। भरतमुनिना नाट्यशास्त्रे यद् वीणावादनादि प्रतिपादितं, तदपि मोक्षसाधनत्वेन प्रतिपादयता याज्ञवल्क्येनोक्तम्—

वीणावादनतत्त्वज्ञः श्रुतिजाति-विशारदः।

तालज्ञश्चाप्रयासेन मोक्षमार्गं नियच्छति॥—याज्ञ. ३।४।११५

श्रूयते इति 'श्रुतिः' स्वरारम्भकावयवः शब्दविशेषः, श्रुत्याऽव्यवहितमनुरणनं च स्वरः। यथोक्तं सङ्गीतरत्नाकरे—

श्रुत्यनन्तरभावी यः स्निग्धोऽनुरणनात्मकः।

स्वतो रञ्जयति श्रोतृचित्तं स स्वर उच्यते॥

श्रुतिः सप्तस्वरेषु द्वाविंशतिधा। षड्ज मध्यम-पञ्चमाः प्रत्येकं चतुःश्रुतयः, ऋषभधैवतौ प्रत्येकं त्रिश्रुती, गान्धार निषादौ प्रत्येकं द्विश्रुती इति। एवं साकल्येन द्वाविंशतिः श्रुतयो भवन्ति। जातयस्तु षड्जादयः सप्त शुद्धाः, सङ्करजातयस्तु एकादशेत्येवमष्टादशविधा भवन्ति। तासु विशारदः। 'ताल' इति गानपरिमाणं कथ्यते। एतत्सर्वानुविद्धब्रह्मोपासनतया तालादिमहृभयाच्चित्तवृत्तेरैकाग्रताया सुकरत्वाद्, अल्पायासेनैव मुक्ति-पथं प्राप्नोति

वीणावादनाभ्यास-परः स्वरसाधकः। एवं याज्ञवल्क्यमतेन गीत-वादित्र[1] साधकोऽवश्यमेव आत्मोपासनार्थमपेक्षितं चित्तैकाग्र्यं क्रमेण प्राप्नोत्येव।

एवमभ्यासे कृतेऽपि प्रबलतरपूर्वसंस्कारवशाद् यदि कथञ्चिन् चित्तविक्षेपाद्यन्तरायैर्विहतो गीत-वादित्र-ज्ञो योगे विफलो भवन् परमं पदं नाप्नोति, मोक्षमार्गस्य पथिको वा न भवति, तर्हि स रुद्रस्य साचिव्यं प्राप्य तेनैव सह मोदते इत्युक्तं याज्ञवल्क्येन निष्कर्षरूपेण—

गीतज्ञो यदि योगेन (गीतेन ?) नाप्नोति परमं पदम्।
रुद्रस्यानुचरो भूत्वा तेनैव सह मोदते॥—याज्ञ. ३।४।११६

एवंविधं तर्हि महत्त्वं सङ्गीताभ्यासस्य चित्तैकाग्र्यसम्पादनार्थम् आत्मयोगोपलब्ध्यर्थं च। मध्यकालिका अनेके सन्तो वीणावादनेन सह भगवद्ध्यानपरस्य पदस्य गानेन समाधिसुखमन्वभवन्निति विदितचरं विदुषां समेषामेव। अस्मिन् विषये सुप्रसिद्धस्य स्वामिनो हरिदासस्य तच्छिष्यस्य तानसेनस्य चैकः प्रसङ्गः सर्वज्ञातोऽस्ति। स्वामिनो हरिदासस्य सर्वातिशायिन्या प्रसिद्ध्याऽऽकृष्टोऽकबरो राजाधिराज[2] एकदा स्वसभारत्नं सुप्रसिद्धं गानविद्या-विशारदं सङ्गीतज्ञं तानसेनं स्वगुरुं राजभवनमानेतुमादिदेश। परं तत्कार्ये स्वासामर्थ्यं प्रकटयता तेनैव सह गुर्वाश्रमं स्वयमेव गन्तुमियेष। वेषं परिवर्त्य तेन सह तत्र प्राप्तः राजाधिराजोऽकबरो गुरोः स्वामिहरिदासस्य समाधिजनकं सतार-वादनसङ्गतं हरिपदगानं शुश्राव। स्वरमाधुर्येणाभिभूतोऽकबरो गुरुं प्रणम्य आश्रमाद्बहिर्निष्क्रम्य तानसेनमेवमाह—तानसेन! भवद्गुरोः स्वरे यादृशं मनोमुग्धकारि माधुर्यं चित्तैकाग्र्यजनकमाकर्षणं च विद्यते, न तादृशं विद्यते भवतः सङ्गीतस्वरे। तानसेन एवं प्रत्याह—जगच्छरण[3]! मद्गुरवोऽखिलब्रह्माण्डनिकाय नियामकस्यान्तर्यामिणः प्रभोः कृते स्वरसाधनां विदधति, अहं पुनः हिन्दुस्थानस्य राजाधिराजस्य भवतः कृते करोमि। कथं तर्ह्यस्मद्गाने तादृशं समाधिसुखजनकं माधुर्यं वर्तितुं वस्तुं वा शक्नोति, यादृशं मद्गुरोर्हरि-

---

१ चतुर्विधं वाद्यं वादित्रम् आतोद्यपरनामकम्। चतुर्विधं वाद्यं च ततघनसुषिरनद्धम्। तत्र वीणा किन्नर्यादिकम् ततम्। कांस्यताल घण्टादिकं घनम्। वंशीप्रभृति सुषिरम्। मृदङ्गमुरजादिकम् आनद्धम्।

२ हिन्दुस्तान, बादशाह।

३ जहाँपनाह।

पदगाने सतार (सप्ततार)-वादने च। अनेन प्रसङ्गेन योगियाज्ञवल्क्यस्य पूर्वोद्धृतस्य 'वीणावादनतत्त्वज्ञ • • • मोक्षमार्गं नियच्छति' इत्यादिकथनस्य प्रबल समर्थन भवति। एव सङ्गीतस्यात्मयोगसाधकत्व तथ्यरूपेण साधु प्रतिष्ठित भवति।

□

# भारतीया वर्णाश्रमव्यवस्था

भारते वर्तमानाया वर्णाश्रमव्यवस्थाया असाधारण वैशिष्ट्यम्। यद्यपि सा व्यवस्था साम्प्रत कालस्य माहात्म्येन किञ्चिद् विकृता परिवर्तितरूपा सती शैथिल्य भजते, न च सा तथा जागर्ति यथा प्राचीनकालिके भारतीयसमाजे तथापि तस्या गौरव न सर्वथा न्यून लुप्त वा इदानीमपि। तदा तु व्यवस्थयाऽनया सम्पूर्ण समाज सङ्घटितोऽनुशासनयुक्तश्च सन् सुख समृद्धे सम्पन्नतायाश्च चरमा काष्ठामवाप। आश्रमव्यवस्थाया अपि तत्र सुमहान् योग आसीत् यतो हि योग्यतानुसार श्रमविभाजनादेर्व्यवस्था निश्चिततरूपेण पूर्णतया वैज्ञानिकी आसीत्। एव सति देशोत्थाने देशसमृद्धौ च अस्या सहयोग सर्वथा स्तुत्य आसीत्।

वर्णाश्रमव्यवस्थाया स्वाभाविक्यमेव सम्पूर्णे समाजेऽस्या प्रथने प्रचलने च हेतु। चेतनाचेतनात्मकस्य जगत अचेतना पदार्थास्त्रिगुणात्मिकया प्रकृत्या कृता सन्त स्त्रिगुणात्मका इति वक्तु शक्यते। चेतना स्वरूपत अत्रिगुणात्मका अपि प्रकृतेर्विकारभूतै पृथिव्यादिपञ्चतत्त्व रचितै पाञ्चभौतिकै शरीरैर्युक्ता सन्त प्राकृतगुणयुक्ता सात्त्विक-राजस तामसस्वभावा भवन्ति। प्रलयावस्थाया त्रिगुणसाम्येऽपि, सर्गकाले क्षोभात् तस्मिन् नष्टे वैषम्ये चोद्‌भूते सति सृष्टिर्भवतीति साङ्ख्याचार्याणा मतम्। अस्मादेव कारणात् केचित् प्राणिन सत्त्वप्रधाना केचिद् रज प्रधाना केचिच्च तम प्रधाना जायन्ते। मूलत साङ्ख्यशास्त्रीयोऽप्यय सिद्धान्त परवर्तिकालेष्वन्यैरपि सम्प्रदायै वैज्ञानिकत्वात् स्वीकृत। भगवद्गीताऽस्मिन् प्रमाणम्। एतत्सिद्धान्तानुसार जगति सत्त्वप्रधाना सात्त्विका पुरुषा प्रामुख्येन बुद्धिकार्येण अध्ययनाध्यापन-विचार-विवेक-तत्त्वज्ञानादिना सम्बद्धा। रज प्रधाना पुरुषा अहङ्कारकार्येण शौर्यप्रधानेन युद्धादिना शस्त्रास्त्राभ्यासचालनादिना च सम्बद्धा। एव रजस्तम प्रधाना अपरे पुरुषा कृषि गोरक्ष्य-वाणिज्यादिना सम्बद्धा। अन्ये पुनस्तमप्रधाना सामाजिक-सेवादिकार्येण सम्बद्धा। एव स्वस्वसामर्थ्यानुसार तत्तत्कार्येषु जनाना प्रवृत्तिर्जाता। यद्यपि 'वर्णो वृणोते' इति यास्कक्थनानुसारमिमा वृत्तय कर्माणि वा तैस्तैर्जनै स्वस्वरुच्यनुसारमेव वृतानि स्वीकृतानि वाऽसन्, तथापि

"एकमेव तु शूद्रस्य प्रभु कर्म समादिशत्।
सर्वेषामेव वर्णाना शुश्रूषामनसूयया" ॥ –१।९१

इति। समाजसेवा कुर्वता जनाना जाता। श्रीमद्भगवद्गीतायामपि एतान्येव कर्माणि तत्तद्वर्णाना वर्णितानि।[१]

मनु स्वस्वकर्माकरणेन अन्येषा कर्मणा ग्रहणेन च वर्णपरिवर्तन वर्णविपर्यय वा स्पष्ट निर्दिशति। यथा

"शूद्रो ब्राह्मणतामेति ब्राह्मणश्चेति शूद्रताम्।
क्षत्रियाज्जातमेव तु विद्याद् वैश्यात् तथैव च॥" –१०।६५

प्रसिद्धधर्मसूत्रकार आपस्तम्बोऽपि एवमेव निर्दिशति–धर्मचर्यया जघन्यो वर्ण पूर्व पूर्व वर्णमापद्यते जातिपरिवृत्तौ। अधर्मचर्यया पूर्वो वर्णो जघन्य जघन्य वर्णमापद्यते जातिपरिवृत्तौ (आप धर्मसूत्र १ २)। एतेन तथ्यद्वय समक्षमायाति। एक तावदिद यदुच्चतरवर्णाना कृते कृत धर्मानुशासन कठोरमासीत्, तदपालने दण्डश्चापि कठोर एव। द्वितीय पुनरिद यत् वर्णा अपरिवर्तनीया नासन्, उच्चतरकर्मसम्पादनेन पूर्व-पूर्व-वर्णग्रहणे सर्वेभ्य स्वातन्त्र्य प्रदत्त समाजव्यवस्थायाम्।

वर्णव्यवस्था महत्त्व-प्रतिपादनपरैरस्माभि पूर्वमुक्त यत् प्राचीनकालेषु वर्णव्यवस्थया प्राप्ते राष्ट्राभ्युदये समाजानुशासने च आश्रमव्यवस्थाया अपि महान् योग आसीत्। ब्रह्मचर्य-गृहस्थ-वानप्रस्थ-सन्यासभेदेन आश्रमश्चतुर्विध । किन्तु नामचतुष्टयस्य व्याख्याया पूर्वम् 'आश्रम' शब्दो व्याख्यामपेक्षते। आङ्पूर्वात् तप खेदोभयार्थकात्[२] श्रम्धातोरचि परे सति आश्रम शब्दो निष्पद्यते, अर्थश्चास्य 'आ समन्तात् श्राम्यन्ति तपस्यन्ति खिद्यन्ति च जना अत्र' इति भवति। परिश्रमजन्या क्लान्तिरेव खेद । जना आश्रमानुसार विविधकर्मकलापानुष्ठाने व्यापृता परिश्राम्यन्ति खेद चानुभवन्तीत्येव आश्रमाणामाश्रमत्वम्। एवमस्मिन् वर्तमानास्ते क्लान्तिकष्टादिक सहन्ते इति हेतो 'सुखदु खादिद्वन्द्वसहन तप' इति भाष्यकारश्रीशङ्कराचार्योक्त्या आश्रमेषु तपश्चरण

---

१ द्रष्टव्य, गीता १८।४२ ४५
२ श्रम् तपसि खेदे च–धातुपाठ।

भवत्येव। एव न केवल वानप्रस्थसन्यासाश्रमयोरपितु ब्रह्मचर्यगृहस्थाश्रमयोरपि तप आचर्यते। ब्रह्मचर्याश्रमे वेदाध्ययनादिक, गृहस्थाश्रमे वर्णानुसार क्रियमाण यजनयाजनाध्यापनादिक, शस्त्रास्त्रचालनाभ्यास-युद्धादिक, कृषि-गोरक्ष्य-[१] वाणिज्यादिक, सेवाकर्मादिक चापि श्रमसाध्यत्वात् कष्टजनकत्वाच्च तप एव। तस्माद् ब्रह्मचर्य गृहस्थ-वानप्रस्थ-सन्यासनामानश्चत्वार एव 'आश्रम' इति सामान्यसज्ञा चरितार्थयन्ति। विशिष्टसज्ञानामर्थो विशेषतो विचार्यते साम्प्रतम्।

पुरुषार्थ-चतुष्टयस्य सिद्ध्यर्थं प्राप्त्यर्थं वा ऋषिभिर्मानवजीवनस्य शतवर्षावधिकत्वेन कल्पितस्य चत्वार समा विभागा कृता। ते च पूर्वोक्तहेतुभिराश्रमनाम्ना ज्ञाता। तेषु प्रथमो ब्रह्मचर्याश्रम। कोऽस्मिन् नाम्नि हेतुरिति जिज्ञासाया वक्तुमेतच्छक्यते यद् ब्रह्म वेद इत्यर्थ, तदध्ययनार्थं चर्या यस्मिन् तत्। चरधातोर्यत्, स्त्रिया टाप्प्रत्यये च कृते चर्याशब्दो निष्पद्यते। इय चर्या आचरण वा अष्टविधमैथुनपरित्यागपूर्वक वीर्यरक्षण येन महतोऽपि महीयसो वेदवाङ्मयस्य स्वाध्यायो धारण च कर्तुं शक्यते। एतदर्थं गुरुकुले पञ्चविंशतिवर्षवय प्राप्तिपर्यन्त ब्रह्मचारिणो वासो भवति स्म। द्वितीयो गृहस्थाश्रम। गृहे तिष्ठतीति गृहस्थ। 'सुपि स्थ' इति पाणिनीयसूत्रेण कर्तरि कप्रत्यये कृते निष्पद्यतेऽय शब्द। 'न गृह गृहमित्याहुर्गृहिणी गृहमुच्यते' इत्यादिमनुवचनानुसार दारपरिग्रहपूर्वकमेव गृहस्थाश्रमारम्भो भवति। अमरकोशे गृहस्थस्य पर्यायरूपेण 'गृही' शब्दो दत्त (२/७/३) यस्यापि 'गृहा दारा अस्य' इत्यर्थोऽस्ति। दारपरिग्रहो विवाहपूर्वक भवति। विवाहार्थं सवर्णा कन्या प्रशस्ततमेति मनुयाज्ञवल्क्यादिस्मृतिकाराणा मतम्। असवर्णासु वर्णतारतम्यानुसार स्ववर्णतो निम्नवर्णाया कन्याया ग्रहणमनुलोमविवाह उच्यते। सोऽपि धर्मशास्त्रकारै स्वीकृत। एव ब्राह्मणवर्गे जात क्षत्रियकन्या वैश्यकन्या वापि परिग्रहीतु शक्नोति। एव क्षत्रियवर्गे जात सवर्णाया क्षत्रियकन्याया असवर्णाया वैश्यकन्याया वा परिग्रह कर्तुं शक्नोति। वैश्यवर्गे जातस्तु वैश्यकन्यामेव परिग्रहीतु शक्नोति। त्रैवर्णिका पुरुषा शारीरिकजन्मनोऽतिरिक्त वेदविद्याग्रहणा-र्थमुपनयनकृतद्वितीयजन्मनो ग्रहणाद् 'द्विजातय' इत्युच्यन्ते। तेषा शूद्रकन्यया सह विवाहो निन्दित। किन्तु 'शूद्रामप्येके' इत्याद्यनुसार केषाञ्चिन्मतेन शूद्रापि भार्या कर्तुं शक्यते। एवमत परवर्तिनामाचार्याणामस्ति। सम्भवत समाज सङ्घटित रक्षितुम् एतादृशी व्यवस्था परवर्तिकाले कृता। किन्तु मन्वनुसार ब्राह्मणो न कदापि शूद्रा भार्या

---
१ गोरक्ष्य पशुपालनम्।

ग्रहीतु शक्नोति। तस्या ग्रहणेन स भ्रष्टो भवतीति तन्मतम। यतो दारपरिग्रहो पत्न्या सह गृहस्थस्य प्रमुखधर्मस्य देवयज्ञादेराचरणार्थ क्रियते, अत शूद्राया ग्रहण न कथमपि कर्तु शक्यते ब्राह्मणेनेति तस्याभिप्राय। विलोमविवाहस्तु सर्वेषामपि त्रैवर्णिकाना कृते वर्जित आसीत्। स्वस्य वर्णादुच्चतरवर्गे जातया कन्यया सह विवाहो विलोम-विवाह उच्यते स्म। इद सर्वथा निन्दितमासीत्। एव सवर्णा द्विजात्यन्तर्गतामसवर्णा वा कन्या पत्नीत्वेन गृहीत्वा ब्रह्मचारी गृही गृहस्थो वा भवति स्म। 'ऋतौ भार्यामुपेयाद्' इतिनियमानुसार धर्मापत्य प्राप्तु दाराभिगमनमाचरन् गृहस्थ ब्रह्मचारिसम एव परिगण्यते स्म। मन्वर्थमुक्तावलीकारेण कुल्लूकभट्टेन[1] अनृतावप्युपेयान् पत्न्या प्रीत्यर्थमित्युक्तम्। एव स्वधर्ममाचरन् सन्ध्योपासन-वेदस्वाध्यायादिक ब्रह्मयज्ञ, होमादि-देवयज्ञ, श्राद्धतर्पणादि-पितृयज्ञम्, अतिथिसेवादि-नृयज्ञ वैश्वबल्यादि-भूतयज्ञ[2] चान्वाहिक[3] कर्म कुर्वन्नेव गृहस्थ सद्गति प्राप्नोति। चित्रकूटे वसन्त राममयोध्यामानेतु प्रयतमानो भरतो तमवेमाह—

> "धर्मेण, चतुरो वर्णान् पालयन् क्लेशमाप्नुहि।
> चतुर्णामाश्रमाणा हि गार्हस्थ्य श्रेष्ठमाश्रमम्॥
> प्राहुर्धर्मज्ञ ! धर्मज्ञास्त्वं कथं त्यक्तुमर्हसि।"[4] इति।

तृतीयो वानप्रस्थाश्रम। अस्य व्युत्पत्तिर्नैकप्रकारै क्रियते। वनाना समूहो वानम्, तत्र प्रकृष्ट यथा स्यात् तथा तिष्ठतीति वानप्रस्थ (प्र + स्था + क, कर्तरि)। वनमेव प्रस्थो देशो वनप्रस्थ, 'तत्र भव' (अष्टा ४।३।५३) इति वानप्रस्थ (वनप्रस्थ + अण्) इतिव्युत्पत्ति कृष्णमित्र-कृतामरकोशटीकायादत्ता। अस्मिन् आश्रमे ब्रह्मोपासनमेव प्रधान कर्म। यज्ञेषु पुन केवल पञ्चमहायज्ञा गृहस्थ-धर्मत्वेन पूर्वमुक्ता अत्रापि गृहीता वानप्रस्थस्य सर्वप्रधानचर्यारूपेण। मनुयाज्ञवल्क्ययोर्द्वयोरपि समानमेव मतमस्मिन् विषये। वानप्रस्थाश्रमग्रहणकाले तस्य पत्नी स्वेच्छया पुत्रादिभि सहैव वस्तु, सहधर्मचारिणी वा पत्या सह वन गन्तु तत्र च वस्तु शक्नोति। सन्यासाश्रमादयमेव भेदो वानप्रस्थाश्रमस्य। जीवित्वा सत्यपि पत्नी सर्वस्वत्यागपूर्वक पुत्रादिषु न्यस्तभारा पृथक्-क्रियतेऽत्र। अत्मकूट-

१ ऋतौ ऋतु ऋतु ऋतुकालेऽस्वकाले, तस्मिन्।
२ भूताना बलिना यज्ञ भूतयज्ञ।
३ अन्वहम् अनुदिन क्रियमाणम् आन्वाहिक दैनिन्दिनमित्यर्थ।
४ रामाय अयोध्या १६० ।२२३

दन्तोलूखलिक-कुटीचरादिभेदेन वानप्रस्थाश्चतुर्विधा उक्ता धर्मशास्त्रादिषु। वृक्षेभ्य प्राप्तानि फलान्यश्मभि कुट्टयित्वा भुङ्क्ते इति अश्मकुट्ट। एवं, दन्तैर्मुसलोलूखलादिकार्यं गृह्णातीति दन्तोलूखलिक.। वानप्रस्थाश्रमे तपस. प्रकारा एते, येनेदृश्य सज्ञान्तदाश्रमिणा भवन्ति।

चतुर्थाश्रम सन्यासाश्रम। 'अभय सर्वभूतेभ्यो दत्वा यश्चरते मुनि' इत्याद्युक्त्या सन्यासाश्रमग्रहणकाले प्राजापत्येष्टिं चरित्वा तस्या सर्वस्व दक्षिणारूपेण दत्वा, सर्वभूतेभ्यश्चाभय दत्वा मुनिव्रत गृह्णातीति विधि। मनुनाऽप्युक्तम्–

"प्राजापत्यां निरूप्येष्टिं सर्ववेदसदक्षिणाम्
आत्मन्यग्नीन् समारोप्य ब्राह्मण प्रव्रजेद् गृहात्।"

मनुते जानातीति मुनि (मन् + इन् + उत्वम्)। एव मौनमास्थाय एकान्ते तत्त्वमननमात्मचिन्तन वा कुरुते। अमरकोशे (२।७।३) अस्य भिक्षुनामोल्लेखो वर्तते येन 'भिक्षते तच्छील' (सनाशसभिक्ष उ (३।२।१६८) इत्यर्थे भिक्षुशब्दस्य निष्पन्नत्वाद् भिक्षाचर्याऽपि सन्यासिनो धर्मो भवति। भिक्षाचरणे परिव्रजन भवत्येव येन स परिव्राट् परिव्राजको वाप्यभिधीयते। ब्रह्मसाक्षात्कारस्तत्त्वज्ञान तद्द्वारा ससरणबन्धनान्मोक्षश्चास्याश्रमस्य परम लक्ष्यम्।

□

## यतो धर्मस्ततो जयः

धर्मो नाम धारकशक्तिकस्य तत्त्वविशेषस्यास्ति। योऽस्मान् सर्वान् धारयति, स धर्मः। धर्मः सर्वमिदं जगत्, तस्य समस्तान् प्राणिनः पदार्थांश्च धारयति, इदमेव तस्य धर्मत्वम्। समर्थकमस्य भगवतो व्यासस्य महाभारतीयं वचनमेतत्—'धारणाद् धर्म इत्याहुर्धर्मो धारयति प्रजाः'। कथनस्यास्य इदमेव तात्पर्यं यत् प्रजाभिर्धृतः सतत नित्यशश्च धार्यमाणस्ता धारयति। तस्मान्निश्चप्रचमेतद् यत् प्रजानां धारणक्षमताऽस्मिन् धर्मे एव वर्तते सर्वासां प्रजानां चिरकालं यावत् सुखेन स्थितिर्धर्मेणैव सम्भवति। यदा-यदा च धर्मस्य ग्लानिर्ह्रासो वा भवति अधर्मस्य चाभ्युत्थानं, तदा-तदा भूमावस्यामवतीर्य जगन्नियन्ता करुणावरुणालयः प्रभुर्धर्मस्य तदवलम्बिनां साधूनां च परित्राणम्, अधर्मस्य तत्पोषकानमसाधूनां च विनाशमवश्यमेव विदधाति। वर्ततेऽस्मिन् विषये प्रामाण्यं साक्ष्यं च गीतादिधर्मग्रन्थानां, भगवतादिपुराणानां, रामायणमहाभारतादि-काव्येतिहासानां च। अतएवोक्तम्—'यतो धर्मस्ततो जयः'। यतो मायामनुजोऽपि वस्तुतः प्रभुरेव भगवान् श्रीकृष्णो धर्मत्राता धर्मस्वरूप एव, यतश्च तदर्पितभावोऽर्जुनोऽपि परमधार्मिकः, अतएव धर्मस्य धर्मेण च जयं मनसि निधाय गीतोपसंहाररूपेण भगवान् वेदव्यासः एवं कथयति—

'यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः।
तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम॥'—गीता १८। ७८

अनेनैव धर्मस्य महत्त्वे सम्यक् प्रकटितेऽपि स्थूणानिखनन-न्यायेन पुनरपि महाभारते-स्थितं तस्य वचनान्तरमुदिध्यते—

ऊर्ध्वबाहुर्विरौम्येष न च कश्चिच्छृणोति मे।
धर्मादर्थश्च कामश्च, स धर्मः किं न सेव्यते॥

धर्मेणार्जितोऽर्थः स्वल्पोऽपि स्थायी सर्वकार्यसाधकश्च भवति। धर्मेण, तद्द्वारेणार्जितेना-र्थेन च प्राप्तः कामः एव परिणामे सुखकरो भवति। अतएव भगवता लोकनिकायनायकेन देवकीनन्दनेन भगवद्गीतायामेवमुक्तमर्जुनं प्रति—

बलं बलवता चाह कामरागविवर्जितम्।
धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ॥—७। ११

धर्मविषये भारतीयमनीषिणामेवविधाया दृष्टी सत्या, दनन्दिनजीवनेऽस्याचरणमेव भरतवर्षस्य सस्कृतिर्बभूव, या सस्कृतिर्दीर्घे कालान्तराले न केवलमस्माक राष्ट्रियस्वरूप निर्धारितवती प्रत्युत अस्माक राष्ट्रियैक्य राष्ट्रियैकात्म्य चापि जनयामास, जननीव सुत, सतत तद् ररक्ष च। ऐतिहासिक तथ्यमेतद् यदनेकशताब्दीषु विकसितया धर्मप्राणयाऽनया सस्कृत्या समस्तो भारतदेशोऽनेकराज्येषु विभक्तोऽपि समानधर्मसस्कृत्यनुयायी सन् एकराष्ट्रत्वेन सङ्घटित समेधितश्च। निस्सन्देह सास्कृतिकमैक्य सर्वाधिकतम मौलिकमाधारगत च भवति। अत एवेदमैक्यम् अभेद्यम् अविच्छेद्य स्थायि च भवति। भारतस्येद स्थायि सास्कृतिकमैकात्म्यमेवैतस्य राष्ट्रस्यैक्य सहस्राब्द्यवधिकेषु वाह्याक्रमणेषु अखण्डित रक्षितवत्। अनयैव सस्कृत्या भारतवर्षमात्मस्वरूपमखण्ड धृतवदस्मिन् दीर्घेऽप्यन्तराले।

यस्य धर्मस्याचरणेन देशस्य एवविधा राष्ट्रैक्य रक्षण परा स्थायिनी सस्कृतिर्जन्म लेभे, स किञ्चिद्विस्तरेण स्वरूपतो निरूपणमपेक्षते साम्प्रतम्। धर्मविषयकप्राचीनग्रन्थेभ्यो ज्ञायते यद् धर्मस्त्रिधा विभक्त—सामान्यधर्मो, राजधर्म, व्यवहारधर्मश्चेति। सर्वसामान्याना कृते कृतो निर्धारितो वा धर्म सामान्यधर्म। आचार परमो धर्म इति मनुवचनेन आचारविषयका नियमा सामान्यधर्मान्तर्गता आसन्। राज्ञा धर्मा राजधर्मा। राजभि स्वप्रजाविषये पालनीया आचरणीयाश्च धर्मा राजधर्मान्तर्गता। अद्यतनसविधानसमकक्षा एते धर्मा आसन्। मुख्यरूपेण स्वाम्यविधिर्दण्डविधिश्च व्यवहारधर्मान्तर्गतौ। व्यवहारो वाद, स च स्वाम्यादिविषयकोऽपराधविषयकश्च। तदुभयविषयको धर्मो व्यवहारधर्म। एषु त्रिविधेषु धर्मेषु सर्वसामान्यजनसम्बद्धाचरण-विषयका नियमा एव सामान्यधर्म-कक्षाम् अवगाहन्ते स्म। एते नियमा आचारसहिता[१] इत्युच्यन्ते स्म। एतान् निरूपयन् मनुरेवमाह स्वकीयस्मृतौ—

धृति क्षमा दमोऽस्तेय शौचमिन्द्रियनिग्रह।
धीर्विद्यासत्यमक्रोधो दशक धर्मलक्षणम्॥

१ Code of Conduct

सङ्क्षेपेणेमे एव नियमा योगसूत्रकारेण भगवता पतञ्जलिना पञ्चविधयमेष्वेव प्रतिपादिता—अहिंसासत्याऽस्तेयब्रह्मचर्याऽपरिग्रहा यमा (योग. २। ३०)। एष्वहिंसा प्राणिमात्र प्रतिआनृशस्यमक्षतिरवधश्च तेषाम। शस हिंसायामित्यस्माद् धातोर्नृशसशब्दो नरहिंसार्थक। प्राणिषु मुख्यत्वान्नर. प्राणिमात्रस्योपलक्षणमस्ति। ततो नृशसशब्द प्राणिहिंसार्थक प्राणिपीडार्थको वा वर्तते। न नृशस इत्यनृशसस्तस्य भाव आनृशस्यम्। प्राणिमात्र प्रति दयाभावोदयादेवानृशस्य मनुष्ये जायते। दयैवानृशस्य वक्तु शक्यते, प्राणिषु भूतेषु वा दया च सर्वतोऽधिकतरो मानवीय धर्म कथितो महावीरबुद्धादिभि सर्वैरेव महापुरुषै। 'आनृशस्य परो धर्म' इति भगवता वाल्मीकिनापि रामायणे उक्तम्। अस्य प्रतिध्वनि 'आत्मौपम्येन सर्वत्र दया कुर्वन्ति साधव' इत्यस्मिन्नपि वचसि श्रूयते। पुराणकृतो भगवतो व्यासस्योपदेश सारूपेण सगृह्णता केनाप्युक्तम्—

अष्टादशपुराणेषु व्यासस्य वचनद्वयम्।
परोपकार पुण्याय पापाय परपीडनम्॥

स्वय व्यासमुनिना भागवत कपिलदेवहूत्यो सवादे तथ्यमेतत् स्पष्टमुक्तम्—

द्विषत परकाये मा मानिनो भिन्नदर्शिन।
भूतेषु बद्धवैरस्य न मन शान्तिमृच्छति॥—भा. ३। २९। २३

तस्मात् मनस शान्त्यर्थ भूतेषु द्वेषवैरादिकमकृत्वा सममेकमेव वा तत्त्व सर्वत्र पश्यन्सर्वेषु पर प्रेम कुर्यात्। मायया मूढचेतसा विगतविवेकाना पुन वार्धकेऽपि दुश्चिकित्स्यमौढ्यवशादहिताचरण विराममेव न जानाति। दुर्भगास्ते सर्वथा। भर्तृहरिसदृशाना मतिमता मतेन विस्मयावह खलु तेषामेतादृश चरितम्—

व्याघ्रीव तिष्ठति जरा परितर्जयन्ती,
रोगाश्च शत्रव इव प्रहरन्ति कायम्।
आयु परिस्रवति भिन्नघटादिवाम्भो,
लोकस्तथाप्यहितमाचरतीति चित्रम्॥

अत एतत् सर्व विचार्य अहिंसाव्रत पालयन सर्वभूतहिते रतो भवेत्।

पूर्वोद्धृते मनूक्ते दशलक्षणात्मके धर्म विचारवीथिमानीते सुस्पष्टमेतत् तथ्य यद् धर्मस्य मूलभूतेष्वाधारभूतेषु वा तत्त्वेषु सत्यमप्यस्त्यम्। मुण्डकोपनिषदि अस्य महत्त्व

'सत्यमेव जयते, नानृतम्' इत्याद्युक्त्वा प्रकटितम्। स्वय भगवता मनुनाऽप्यस्य महत्त्व प्रतिपादयता एवमुक्तम्–

> यमो वैवस्वतो देवो यस्तवैष हृदि स्थित।
> तेन चेदविवादस्ते मा गङ्गा मा कुरून् गम ॥
> यस्य विद्वान् हि वदत क्षेत्रज्ञो नाभिशङ्कते।
> तस्मान्न देवा श्रेयासं लोकेऽन्य पुरुष विदु ॥–मनु ८। ९२ ९६

सर्वसयमनाद् यम परमात्मा, योऽन्तर्यामिरूपेण हृदि तिष्ठति। यदि यथार्थकथने तेन सहाविवादस्तर्हि तेन यथार्थकथनेन सत्याभिधानेनैव मानव कृतकृत्यो निष्पापस्तथा च पापनिर्हरणार्थ धर्मक्षेत्रकुरुक्षेत्रगमनस्य गङ्गास्नानस्य वा न काप्यपेक्षा। सर्वमाभ्यन्तरिक जानन् क्षेत्रज्ञोऽन्तर्यामी यस्य वदत पुरुषस्य विषये नाभिशङ्कते 'सत्यमय वदत्युतानृतम्' इति, तस्मादन्य श्रेयास प्रशस्ततर पुरुष देवा न जानन्ति। सत्यमेतदहिसया समन्वितमेव सत्य भवितुमर्हति यथा पूर्वमुद्धृतस्य पातञ्जलसूत्रस्य भाष्य कुर्वता व्यासदेवेनोक्तम्–'सत्य यथार्थे वाङ्मनसी। यथादृष्ट यथानुमित यथाश्रुत वाङ् मनश्च। परत्र स्वबोधसङ्क्रान्तये वागुक्ता। सा यदि न वञ्चिता भ्रान्ता वा प्रतिपत्तिवन्ध्या वा भवेदिति एषा सर्वभूतोपकारार्थ प्रवृत्ता, न भूतोपघाताय। यदि चैवमप्यभिधीयमाना भूतोपघातपरैव स्यात्, न सत्य भवेत्, पापमेव भवेत्। तेन पुण्याभासेन पुण्यप्रतिरूपकेण कष्टतम प्राप्नयात्। 'रामो द्विर्नाभिभाषते' इत्येतन्मात्रेणाल्पिष्ठवचसा वाल्मीकिरपि सत्यकथनस्य महन्महत्त्व प्रकटीकरोति।

सर्वसामान्यधर्मे पञ्चविधयमस्य तृतीयमस्तेयनामक तत्त्वमायाति। स्तेय चौर्य परस्वापहरणम्। एतच्च परधनादिक प्रति लोभेन स्पृहया क्रियते। लोभश्च पापस्य मूलमित्यनेकश उपाख्यानादिभि कथितम्। कामक्रोधाभ्या सहैव एत लोभमपि भगवान् श्रीकृष्णो गीताया नरकस्य द्वारत्रये परिगणयन्नाह–

> त्रिविध नरकस्येद द्वार नाशनमात्मन।
> काम क्रोधस्तथा लोभस्तस्मादेतत् त्रय त्यजेत्॥

अस्य लोभस्य स्पृहाया वा अभावे स्तेयस्याप्यभावो भविष्यति। योगभाष्यसारम्नु कारणकार्ययोरभेद गृह्णन् स्पृहामेवास्तेयम्–गृह्णानस्तेयमशास्त्रपूर्वक द्रव्याणा परत स्वीकरण तत्प्रतिषेध पुनरस्पृहारूपमस्तेयमिति।

चतुर्थो यमो ब्रह्मचर्याख्य । गुप्तेन्द्रियस्योपस्थस्य[1] संयमो ब्रह्मचर्यमिति योगभाष्ये व्यासदेवेनोक्तम्। जननेन्द्रियस्य निग्रह एव ब्रह्मचर्यम्। कामाख्यस्य विषयभोग-प्रबलेच्छाऽपरपर्यायस्य भावस्य उद्दामत्वादेव ब्रह्मचर्यमाचरितु दुष्करम्। वस्तुत क्रोधस्य मूल काम एव, यथोक्त भगवद्गीतायाम्–'कामात् क्रोधोऽभिजायते'। कामस्यापूर्त्यैव क्रोधो जायते। इद तु सर्वप्रमुख नरकद्वारम्। तस्मात् त्रयमेव त्यक्तुमुपदिदेश भगवान् देवकीनन्दन स्वभक्तमर्जुन प्रति। सृष्ट्यादौ देवासुरमनुष्याणा कृते प्रजापतिना ब्रह्मणा कृतो द-द-द इत्युपदेशो बृहदारण्यकोपनिषदि प्रसिद्ध एव। द-त्रयेण त्रयाणा कृते क्रमेण दम-दया-दानानामेवोपदेशो भगवता ब्रह्मणा दत्त । अनेनैव मानवजीवनस्य सार्थक्याय एतेषा धर्मस्कन्धाना महत्त्व सुस्पष्टम्।

पञ्चमो यमोऽपरिग्रह, स च भोग्यजातानामसञ्चयरूप । 'विषयाणामर्जन-रक्षण-क्षय-सङ्ग-हिंसादोषदर्शनाद् अस्वीकरणमपरिग्रह' इत्याह योगभाष्यकार । भोग्यानामर्जने रक्षणे च तत्परस्य पुरुषस्य तयो सङ्गोऽर्थात् आसक्तिर्जायते, तदर्थ प्रयासे क्रियमाणेऽपि तेषा क्षयो भवत्येव, तत्प्राप्तौ विघ्नान् कुर्वद्भि प्राप्ताना च भोग्यानामपहरण कुर्वद्भि पुरुषै सह सघर्षस्तज्जन्यो हिंसादिदोषो जायते। एवमनेकदोषदर्शनात् भोगविषया-णामस्वीकारोऽसञ्चयो वाऽपरिग्रह कथ्यते।

एते सर्वेऽपि पञ्च यमा मनुष्यस्य तत्तद्दोषाणा दुर्बलताना वा परिहारोपाया। तैस्त्वैर्युक्तो मनुष्यस्तु कष्ट प्राप्नोत्येव, मानवसमाजोऽपि भृश प्रभावित सन्तप्तश्च भवति। अभ्यासवैराग्यपूर्वक क्रमेण तेषा परिहारेण मनुष्यो मानवजीवनस्य पुरुषार्थचतुष्टयप्राप्तिपथेऽग्रेसरो भूत्वा दिनानुदिन शान्ति सुख च लभतेतरा, समाजोऽपि शान्त्या सुखपूर्वकमुन्नतिपथे अग्रसरो भवति। एते यमा पतञ्जलिना सर्वसामान्याना कृतेऽनिवार्यरूपेण विहितत्वात् देशकालाद्यनवच्छिन्ना महाव्रतमित्युक्ता अनन्तरसूत्रे–'जाति-देश-काल-समयानवच्छिन्ना सार्वभौमा महाव्रतम्' (योग २। ३१)। एषामभ्यासे पालने च देशकृत, कालकृत, जातिकृत, प्रचलिताचारपरम्परा-कृतो वाऽपवादो नैव वर्तते। "सर्वभूमिषु सर्वविषयेषु सर्वथैवाविदितव्यभिचारा सार्वभौमा महाव्रतमित्युच्यन्ते" इत्युक्त योगभाष्ये व्यासदेवेन। एवमिद प्रबल प्रमाणमेतेषा सर्वसामान्यधर्मत्वे। मनूक्तानामवशिष्टाना सामान्यधर्माणामेष्वेव यथायोग समावेशो भवति।

अस्तेयस्य निरूपणे यत् परस्वापहार स्तेयत्वेन कथितस्तद्विषये एतावदधिक वक्तव्य यदपहरणादिना सञ्चित धनादिक नैव न्यायेनार्जितम् भवति। अन्यायेनार्जितत्वात्

१ जननेन्द्रियस्य।

तद्धनादिकमशुचि अपवित्र वा भवति। सर्वषा शौचाना मध्येऽर्थशौचमेव पर शौच मनुना वर्णितम्–

सर्वेषामेव शौचानामर्थ-शौच पर स्मृतम्।
योऽर्थे शुचि स हि शुचिर्न मृद्वारि-शुचि शुचि ॥

पतञ्जलिनोक्तेषु पञ्चविधेषु नियमेषु सर्वप्रथम शौचमेव तच्च मन कायवचसा भेदात् त्रिविध–मानसिक वैचारिक वा, कायिक, वाचिक च। एषु कायादिकृताध्यवसायेन श्रमेण चार्जित धनादिक कायिकक्रियाफलरूपम् अतस्तत्सम्बद्ध शौच कायिक शौचम्, अशौच च कायिकमशौचम्। मानसिकशौचाशौचयो परम्परयाऽत्र करणत्वमस्त्येव। अर्थविषयकमशौच समाजे सर्वाधिकस्य भ्रष्टाचरणस्य कारणमितीदानीन्तनसमाज दृष्ट्वा सुष्ठु अनुमातु शक्यम्। एतत्परिहारार्थमादिकविना रामायेण वर्णितचरितस्य भगवतो रामस्यादर्श पुरत स्थापनीय–

नेय मम मही सौम्य ! दुर्लभा सागराम्बरा।
महीच्छेयमधर्मेण शक्तत्वमपि लक्ष्मण ॥
यद् विना भरत त्वा च, शत्रुघ्न वापि मानद।
भवेन्मम सुख किञ्चिद् भस्म तत् कुरुताच्छिखी ॥
–अयोध्या ७९ ।७, ८

चाणक्यस्यापि एतद्विषयिणी नीति पुरो देशवासिना निधातव्या–

अन्यक्लेशेन ये चार्था धर्मस्यातिक्रमेण च।
शत्रुणा प्रणिपातेन[१], ते ह्यर्था मा भवतु मे॥

सक्षेपत इमे एव केचन प्रमुखा सदाचारसम्बद्धा अवयवा सामान्यधर्मस्य, येषा दैनन्दिनाचरणेन अनुष्ठानेन च दीर्घावधिके काले क्रमेण विकसिताऽध्यात्म-प्रवणाऽभ्युदयनिश्रेयसप्रदायिनी आसेतुहिमाचल प्राप्तप्रसारा भारतीया सस्कृति भारतवर्षं बाह्याक्रमणेष्वपि अखण्डित धारयितु समर्था बभूव।

□

१ विनाशेन।

# गृहीत इव केशेषु मृत्युना धर्ममाचरेत्

महात्मनो महामतिमतो विदुरस्योक्तिरियं महाभारतादुद्धृता। तत्रोक्तं तेन—

'अजरामरवत् प्राज्ञो विद्यामर्थं च चिन्तयेत्।
गृहीत इव केशेषु मृत्युना धर्ममाचरेत्॥'

अस्या उक्तेरयमर्थः—विद्यावित्तयोरर्जने प्राज्ञ आत्मानमजरममरं च गृह्णीयान्न च जरामृत्युग्रस्तं, यतो हि जरामृत्युग्रस्तो जरामृत्युभाग् जनः स्वपार्श्वे समयाभावात् प्रत्येककार्ये शीघ्रतां विदधत् विद्यावित्तयोः सङ्ग्रहेऽपि शीघ्रतां विधास्यति, न च सङ्ग्रहः शैघ्र्येण सुशकः। उक्तं हि केनापि तथ्यानुभाविना मनीषिणा यत् 'जलबिन्दुनिपातेन क्रमशः पूर्यते घटः। स हेतुः सर्वविद्यानां धर्मस्य च धनस्य च' ॥ इति। विद्यावित्तयोर्धर्मस्य चापि सङ्ग्रहः क्रमश एव, शनैः शनैरेव भवति, नैकपद एव। यथा जलबिन्दुनिपातेन शनैः शनैर्घटः पूर्यते, तथैव क्षणशः कणशश्चैव विद्या अर्थश्च सञ्चीयेते। क्षणशः विद्या, कणशश्चान्, तद्द्वारेण च धनं सगृह्यते। एकेनैव कालेन साकल्येन दत्ता विद्या शिष्येण सम्यक् प्रकारेण परिणमयितुमात्मसात्कर्तुं च नैव शक्यते। तस्मात् क्रमेणैव शक्यते ग्रहीतुमुपदेशः शास्त्राणां नयज्ञानां च। धनमपि न्यायपूर्वं सत्यमार्गेणोपार्जयितुं प्रयत्यते चेत्तर्हि तदपि शनैः शनैरेव सङ्ग्रहीतुं वर्धयितुं च शक्यते, नैकपदे एव। एकपदे एव धनस्य वृद्धिस्तु अन्याय्यमार्गेणैव अनुचितसाधनैरेव कूटपूर्वकं छलपूर्वकं वा सम्पादयितुं शक्या, यथाऽधुनिकयुगे बहवोऽकिञ्चना अल्पेनैव कालेन सङ्गृहीतकाञ्चना प्रभूतधनाः प्रचुरपरिबर्हाश्च सञ्जाताः। द्वित्रैः पञ्चैरेव वा वर्षैः प्रभूतधनसङ्ग्रहः शङ्कामुपजनयति सङ्ग्रहीतुश्चारित्र्यशुद्धिविषये तस्यार्थशौचविषये च। आधुनिकेषु नवीनेषु च धनिकेषु अनल्पसङ्ख्याकाः शङ्कितचरिताः सन्ति। स्वदेशस्य स्वसमाजस्य च कलङ्कभूता एवं महाजनाः। भगवता मनुनाऽर्थशौचमेव परं शौचमुक्तम्—

"सर्वेषामेव शौचानामर्थशौचं परं स्मृतम्।
योऽर्थे शुचिः स हि शुचिर्न मृद्वारिशुचिः शुचिः ॥"—मनु० ५।१०६

मनीषिमूर्धन्यस्य मनोरनेन वचसैवार्थशौचस्य सर्वाधिक सर्वातिशायि महत्व सुव्यक्तमेव।

पूर्वमुद्धृते विदुर वचसि विद्यावित्ताभ्या सहैव धर्मस्यापि ग्रहण कृत किन्तु तत्रैवेद मप्युक्त यद् विद्यावित्तयो सङ्ग्रहमजरामर इव धर्मस्य च मृत्युना केशेषु गृहीत इव कुर्यात्। इद कस्मात्? सोऽपि पुन आजीवनमधर्मनिरतेनापराधवृत्तिकेन जनेनान्तिमसमये सहसैव कैश्चिदहोभिर्मासैर्हायनैर्वा सम्पादयितु सङ्ग्रहीतु च नैव शक्यते। महात्मना विदुरेण यदुक्त यद् धर्मानुष्ठानविषये मृत्युना केशेषु गृहीत इव अर्थात् मृत्युग्रस्त इव मृत्युमुखे स्थित इव शैघ्र्य विदधीत, क्षिप्रकारी भवेन्न पुनश्चिरकारी विलम्बी वा, तदस्मात् कारणाद् यत् न कोऽपि जानाति कदा इतो गन्तव्य प्रस्थातव्य वेति। अपश्चात्तापकर खलु सञ्चितधर्मणा मृत्यु। यदि मृत्योरागमनात् प्रागाजीवन धर्म सञ्चितस्तर्हि अकस्माद् मृत्यावागतेऽप्रत्याशितरूपेणाप्यन्तकाले उपस्थिते 'धर्मो मया नानुष्ठित, प्रमादेष्वेव समस्त जीवन व्यतीतमित्यादिपश्चात्तापो न भवेत्। तस्मादेव तैत्तिरीयोपनिषद शिक्षावल्ल्यामुपदिष्ट 'धर्मान्न प्रमदितव्यम्' इति। अन्यत्राप्युक्तम्—

> 'न त्यजेद् धर्ममर्यादामपि क्लेशदशाश्रित।
> हरिश्चन्द्रो हि धर्मार्थी सेहे चाण्डालदासताम्॥'[1]

अत एव 'गत कालो न चायाति' इति मनसि कृत्वा सदैव जागरूक सन्, नित्यमप्रमत्त सन् धर्मपरो भवेत्। 'पीत्वा मोहमयी प्रमादमदिरामुन्मत्तभूत जगत्' इति विचारयन् न कदापि प्रमादपरवशोऽधर्मपरायणश्च भवेत्। यतो हि अधर्म-विषवृक्षस्य सदैव कटुफलमेव, न कदापि सुस्वादु फल पच्यते। अत एव भगवता वेदव्यासेन महाभारते धर्मत्याग ऽनेकशो परिवर्जित। एकत्र स एव ब्रवीति—

> 'न जातु कामान्न भयान्न लोभाद्
> धर्म त्यजेज्जीवितस्यापि हेतो।' इति।

प्राणस्यापि हेतोर्धर्मो न त्यक्तव्य कि पुनरन्येषामित्यहो श्रेष्ठा निष्ठा धर्म भगवतो व्यासस्य।

---

१ आचार्य क्षेमेन्द्रस्योक्ति।

इदानीमय प्रश्न समुदेति यत्र को नाम धर्म इति। भगवता मनुना एव लक्षितो धर्म —

'धृति क्षमा दमोऽस्तेय शौचमिन्द्रियनिग्रह ।
धीर्विद्या सत्यमक्रोधो दशक धर्मलक्षणम् ॥'

इति। अत्रोक्तेषु दशतत्त्वेषु धर्म प्रायेण साकल्येनैव स्वरूपत समाहित इति निस्सन्देह वक्तु शक्यते। एषु प्रत्येकमधिकृत्यानेकैराचार्ये कविभिश्चानेकशो लिखितम्। निखिलमपि साङ्गोपाड् सस्कृतवाड्मय श्रुतिस्मृतिपुराणकाव्यात्मक परिव्याप्त वर्तते एतन्माहात्म्यख्यापकै सन्दर्भै । एतेषु धृतिर्धैर्य सन्तोषश्च। क्षमा परेणापकृतस्यापि त प्रत्यपकारानाचरणम्। दमो विकारहेतोर्विषयस्य सन्निधानेऽपि मनसोऽविक्रियत्वम्। अस्तेयमन्यायेन परधनाद्यग्रहणम्। शौच सामान्यतस्तु मृज्जलादिभिर्देहशोधन, किन्तु विशेषत सत्यपूतवचोग्रहणेन वाक्शोधन, लौल्यपरित्यागपूर्वक विषयेभ्य प्रत्याहारो निवृत्तिर्वा मन शोधनादिकम्। इन्द्रियनिग्रहो विषयेभ्यश्चक्षुरादिवारणम्। इद च तत्त्व सर्वसिद्धीना निदान, यथा मनुनैवोक्तमत्र–

'इन्द्रियाणा प्रसङ्गेन दोषमृच्छत्यसशयम्।
सन्नियम्य तु तानेव तत सिद्धि नियच्छति॥' (मनु २।९३)

इति। अपिच–

'इन्द्रियाणा विचरता विषयेष्वपहारिषु।
सयमे यत्नमातिष्ठेद् विद्वान् यन्तेव वाजिनाम्॥' (मनु २।८८)

इति। वाजिनामश्वाना यन्ता सारथिरिव विद्वान् विवेकी इन्द्रियाणा सयमे अप्रमत्त सन् यत्नमातिष्ठेदाचरेदिति मनोरभिप्राय। अस्य कारण ब्रुवन् श्रीकृष्णो गीतायामेवमुक्तवान्–

'यततो ह्यपि कौन्तेय ! पुरुषस्य विपश्चित ।
इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभ मन ॥'

इति। यत इन्द्रियाणि प्रमाथीनि प्रकृष्टतया बलवत्तरतया मथनशीलानि, अतो यततोऽपि प्रयत्न विदधतोऽपि विदुषो मनो हरन्ति विषयान् प्रतीति भगवत्कथनस्याभिप्राय । अन्यथाऽपि इदमेव तथ्यमग्रे प्रकाशित भगवता–

'इन्द्रियाणा हि चरता यन्मनोऽनुविधीयते।

तदस्य हरति प्रज्ञा वायुर्नावमिवाम्भसि॥' (गीता २। ६७) इति।

धीर्बुद्धि सदसद्विवेकिनी व्यवसायात्मिका यया शास्त्रादिभि प्रतिपादिताना तत्त्वाना ज्ञानम्। अन्यत्रापि च सन्देहपदेषु सन्देहनिरसनपूर्वक निश्चयो व्यवसायो निर्णयो वा क्रियते। ता विना शास्त्रादिग्रहण न सम्भवति। विद्याऽत्रात्मज्ञान येन जीवो मायाबन्धनाद्विमुक्तो भवति, यथोक्त श्रीमच्छङ्कराचार्येण 'सा विद्या या विमुक्तये'। वेत्त्यात्मानमिति विद्या। शब्दोऽय विद्धातो कर्तरि क्यप्-प्रत्ययेन निष्पन्नो भवति। अस्या विद्यायामेवान्येषा नवाना सदाचारभूताना तत्त्वाना धृत्यादीनामक्रोधपर्यन्ताना पर्यवसान, यथोक्त गीताया भगवतैव श्रीमुखेन 'सर्वं कर्माखिल पार्थ । ज्ञाने परिसमाप्यते' इति। अत एव च भगवताऽस्य परम पावित्र्य तत्रैव प्रतिपादित 'न हि ज्ञानेन सदृश पवित्रमिह विद्यते' इत्यादिवचसा।

'सत्य' यथार्थाभिधानम्। न चास्मात् परो धर्मोऽन्य कोपि विद्यते, विशेषतो यदि सर्वभूतहित परीक्ष्यैवोक्तमेतत्। यत 'सत्य यत् परदु खाय तत्र मौनपरो भवेत्' इति हि सन्नीति। स्वय मनुरपि एवविध स्वाभिमत प्रकटयन्नन्यत्राह—

'सत्य ब्रूयात् प्रिय ब्रूयान्न ब्रूयात् सत्यमप्रियम्'। (४।१३८) इति।

अप्रिय सत्य तदेव यत् परेषा दु खाय भवति। अत सत्य वस्तुतस्तदेव यत् सर्वभूतहिताय भवति।

अक्रोध क्रोधाभाव, क्रोधहेतौ सत्यपि क्रोधानुत्पत्तिरिति। 'क्रोधो मूलमनर्थानाम्' इति विचार्य क्रोधकारणे क्रोधहेतौ सत्यपि बुद्धिमान् पुरुष क्रोध सर्वथा परित्यजेत् परिहरेच्च। क्रोधपरवशस्य जनस्य सर्व एव विवेको नश्यति। किमुचित किं वानुचितमिति नष्टविवेक त न प्रतिभाति। तस्यामविवेकावस्थाया स कमप्यनर्थमाचरितु, कमप्यधर्मं कर्तुं शक्नोति। तस्मादधर्माचारादात्मान परिरक्षितु स क्रोध सर्वथैव परिहरेत्।

मनूपदिष्टाना दशतत्त्वाना यत् किञ्चिदुक्तमद्यावधि, तेनैतत्स्पष्ट यदेतेषु तत्त्वेषु कानिचिदान्तरिका मन सम्बन्धिनो धर्मा गुणा वा, कानिचिच्च बाह्या शारीरिकधर्मा। मानसिक एवाचारो व्यवह्रियते 'शील' 'स्वभाव' इत्यादिभिर्नामभि। अयमेवात्मगुण-नाम्नाप्युच्यते। शारीरिकस्त्वाचार 'सदाचार' 'सद्वृत्त' 'सदाचरणम्'

चारित्र्यमित्यादिभिर्नामभिरभिधीयते। मनुना प्रथमप्रकारका धर्मा यमान्तर्गता परिगणिताः, परवर्तिनश्च नियमान्तर्गता। चतुर्थाध्याये प्रोक्तं तेन यत् 'यमान् सेवेत सततं न नित्यं नियमान् बुधः' (४। २०४) इत्यादि। स्मर्तव्यमत्रैतत् तथ्यं यत् नियमापेक्षया यमानुष्ठानगौरवं ज्ञापनार्थमिदं कथनं न पुनर्नियमनिषेधार्थम्। आन्तरिकगुणाः शीलाख्या बाह्याचारापेक्षया गरीयास इति तु विदितचरं सर्वेषामेव विदुषाम्। द्वयोर्विवेकं विदधद् याज्ञवल्क्यः प्रायश्चित्ताध्याये (५।३१२।१३, १४) एवं ब्रवीति—

'ब्रह्मचर्यं दया क्षान्तिर्ध्यानं सत्यमकल्कता।
अहिंसाऽस्तेयमाधुर्ये दमश्चेति 'यमाः' स्मृताः॥
स्नानं मौनोपवासेज्यास्वाध्यायोपस्थनिग्रहाः।
'नियमो' गुरुशुश्रूषा शौचाक्रोधाऽप्रमत्तता॥'

इति। योगसूत्रकारस्य पतञ्जलेरपीदृश्येव धारणा—

'अहिंसा-सत्यास्तेय-ब्रह्मचर्याऽपरिग्रहा यमाः।
शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः।' (योग २।३०)

पतञ्जलिरपि मनुसदृगेव नियमापेक्षया यमानां गरीयस्त्वं तत्रैव प्रतिपादयति 'जातिदेशकालसमयानवच्छिन्नाः सार्वभौमा महाव्रतम्' (योग. २।३१) इति। आन्तरिक-बाह्याचारयोस्तारतम्यादेव द्वितीयाध्यायस्यादावेव धर्मविषये प्रमाणं विवृण्वता मनुना वेदादिभिः सह वेदविदां शीलं साधूनामाचारं च पृथक् पृथक् प्रमाणं ब्रवीति—

'वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम्।
आचारश्चैव साधूनामात्मनस्तुष्टिरेव च॥' (मनु २।६)

इति। किन्तूभयस्याप्याचारत्वान्मनुस्तयोरभेदमपि कुर्वन् दृश्यते। कथमन्यथा स प्रथमेऽध्याये धर्मस्य नित्यकर्तव्यतां कथयन् न श्रुतिस्मृत्युक्तमाचारमात्रं ब्रूयात्—

'आचारः परमो धर्मः श्रुत्युक्तः स्मार्त एव च।
तस्मादस्मिन् सदा युक्तो नित्यं स्यादात्मवान् द्विजः॥' (मनु. १।१०८)

इति एवं श्रुतिस्मृत्युक्तसदाचारस्यैव परमधर्मत्वात् मनुना तस्याः प्रशंसा दुराचारस्य च निन्दा तत्र-तत्र कृते। यथा—

'आचाराल्लभते ह्यायुराचारादीप्सिता प्रजा ।
आचाराद् धनमक्षय्यमाचारो हन्त्यलक्षणम् ॥'
दुराचारो हि पुरुषो लोके भवति निन्दित ।
दु खभागी च सतत व्याधितोऽल्पायुरेव च ॥' (मनु ४ ।१५६-५७) इति ।

यतोऽभ्युदय-नि श्रेयससिद्धि स धर्म इति वैशेषिकसूत्रोक्त महर्षिकणाद वृत लक्षणमपि मनुकृताल्लक्षणान्न भिद्यते, यतो लौकिकाभ्युदयसाधका अपि च पारलौकिकनि श्रेयससाधका सन्ति एते सर्वे सद्गुणा सदाचाराश्च । तत्रात्मज्ञानरूपिणी विद्या नि श्रेयससाधिका, अन्ये स्वाध्यायेज्याजपतपोदानदयेन्द्रियनिग्रहोपवासादयो यथायथमुभयसाधका । तदेतेषामाचरणे न कदापि विलम्बमालस्य वा कुर्यात्, मृत्युना गृहीतकेश इव शैघ्य कुर्यात् । यतो नैव ज्ञायते 'कदाऽस्माल्लोकात् प्रस्थान कर्तव्यमिति । सम्भ वेदिद यदद्यतोऽनन्तर श्वो[1] न लभ्येतेति । एव कथमितिचेद्, उक्त मतिमद्भिरस्मत्पूर्वजै —

'प्रोद्घाटितनवद्वारे पञ्जरे विहगोऽनिल ।
यदि तिष्ठति तदाश्चर्यं, प्रयाणे विस्मय कुत ॥'

इति । यस्मिन् मानवशरीर-पञ्जरे नैकमपितु नव द्वाराणि तान्यप्यहर्निशमेव प्रोद्घाटितानि विवृतानि, न च कदापि सवृतानि वर्तन्ते, तस्मिन् निवसत प्राणपक्षिणोऽवस्थाने एवाश्चर्यं, तत प्रस्थाने उड्डयने वा कुतो विस्मय ? स तु अवरोधाभावे कस्माच्चिदपि द्वाराद् कदापि उड्डयितु शक्नोति । तस्माद् विवेकिन कृते नित्य जागरूकताऽपेक्ष्यतेऽप्रमादश्च । श्रुतिरप्येवमेवोपदिशति—

'उत्तिष्ठत जाग्रत प्राप्य वरान् निबोधत' (कठ १ ।३ ।१४) इति ।

□

---

१ आने वाला कल (Tomorrow)

# संस्कृतवाङ्मये आध्यात्मिकचिन्तनम्

अध्यात्मज्ञान भारतीयमनीषायाश्चरमोत्कर्ष, तस्या सर्वतोऽधिक वैशिष्ट्यम्। किमिदमध्यात्म नाम ? आत्मान शरीरमधिश्रित तत्त्वमध्यात्मम् आत्मतत्त्वमित्यर्थ। स्वभावोऽध्यात्ममुच्यते' (गीता VII. ३) इत्यस्या भगवदुक्तौ अध्यात्मशब्दस्यायमेवार्थ स्वभावशब्देनोक्त। अस्मादेव आत्मसम्बन्धीत्यस्मिन्नर्थे 'आध्यात्मिक' शब्दस्य निष्पत्ति। विभक्त्यर्थेऽव्ययीभावसमासरूपोऽध्यात्मशब्द आत्मनीत्यात्मनो विषये सम्बन्धे इति वाऽर्थमभिधत्ते। एवमध्यात्मवाङ्मयम, आध्यात्मिकवाङ्मय च समानार्थकम्। अपि च अध्यात्मज्ञानम् आध्यात्मिकज्ञानमित्यपि समानार्थकम्। इद ज्ञानमपि आत्मस्वरूपविषयकत्वेन तत्प्राप्तिसाधनविषयकत्वेन च मुख्यत द्विविध भवति। साधनमपि कर्म-भक्ति-ज्ञानाष्टाङ्गयोगरूपेण चतुर्विधम्। एव चतुर्विधसाधनविषयक यत्किंचिदुक्त प्रतिपादित च तत्तद्ग्रन्थेषु, तत् सर्वमपि अध्यात्मवाङ्मये परिगणित भवेत। एव वैदिकसहिता, उपनिषदो, रामायण, महाभारत, योगवासिष्ठ, सनत्सुजातीयम्, भगवद्गीता, विष्णुभागवतादीनि पुराणानि, धर्मशास्त्राणि मनुयाज्ञवल्क्यादि-प्रणीता स्मृतय—एतत् सर्वमध्यात्मवाङ्मये समाविष्टम्। अतोऽतिरिक्तमपि सुबृहत् अध्यात्मवाङ्मय सस्कृते वर्तते। न्याय-साख्य-योग-ब्रह्मसूत्रादीनि दर्शनसूत्राणि, नारदशाण्डिल्यादि-प्रणीतानि भक्तिसूत्राणि, योगवासिष्ठ-योगयाज्ञवल्क्यादयो योगविषयका आस्तिक-नास्तिकपरम्परान्तर्गता ग्रन्था, दर्शनसूत्राणा भक्तिसूत्राणा च भाष्यादिग्रन्था— एतत् सर्वमपि तत्र समाविष्टम्। एतत् सर्वमाश्रित्य परवर्तिकालेषु लिखिता असख्या स्तुतिग्रन्था कर्म-भक्ति-ज्ञान-योगप्रतिपादकाश्च ग्रन्था एतदन्तर्भूता। नैतावदेव, अद्यावधि सतत विरच्यमाना आत्मविषयका अनेके सस्कृतग्रन्था अपि अध्यात्मवाङ्मयेऽन्तर्गता। एतदतिरिक्त काश्मीरशैवदर्शनस्य ग्रन्था, वीरशैवदर्शनस्य ग्रन्था, वैष्णवदर्शनाना सूत्रभाष्यादिग्रन्था तत्प्रकरणग्रन्था अन्ये चानेके आत्म-विषयका तन्त्रागमादिग्रन्था— सर्वेऽध्यात्मवाङ्मयेऽन्तर्गता। एव प्रभूतमाध्यात्मिक वाङ्मय सस्कृते वर्तते। सम्भवत एतत्समकक्ष आत्मविषयक वाङ्मय न कस्मिन्नपि देशे नापि वा कस्याञ्चिद् भाषायामेव वर्तते।

एवंविधस्याप्रतिमस्याध्यात्मिकवाङ्मयस्य कारणमिदमेव प्रतिभाति यद् भारतवर्षे स्वसभ्यताया आदिमयुगादेव—प्रारम्भिककालादेव—अस्य मनीषिणामृषिमहर्षीणा मतेनाध्यात्मिकज्ञानमेव सर्वातिशायि सर्वश्रेष्ठ ज्ञान मन्यते स्म। मध्यमपाण्डव प्रति स्वविभूतौ वर्णयता भगवता श्रीकृष्णेन सुस्पष्टमुक्त—'सर्गाणामादिरन्तश्च—। अध्यात्मविद्या विद्याना वाद प्रवदतामहमिति (गीता X. ३२)। ततोऽपि पूर्वमुपनिषद्-वाङ्मयेऽनेकश इद तथ्य प्रकाशितम्। मुण्डकोपनिषद आरम्भ एवास्य ब्रह्मविद्यापरनाम्न्या अध्यात्मविद्याया माहात्म्य प्रकटित भवति— ॐ ब्रह्मा देवाना प्रथम सम्बभूव, विश्वस्य कर्त्ता भुवनस्य गोप्ता। स ब्रह्मविद्या सर्वविद्याप्रतिष्ठामथर्वाय ज्येष्ठपुत्राय प्राह॥ (मुण्डक १११) सर्वासा विद्याना प्रतिष्ठामाधारभूता ब्रह्मविद्या ज्येष्ठपुत्राय प्राह देवाना प्रथमो ब्रह्मा इत्यस्या पक्तेस्तात्पर्यम्। ब्रह्मविद्यामिति पदस्य भाष्य कुर्वता भगवता श्रीशङ्करेण "ब्रह्मविद्या ब्रह्मण परमात्मनो विद्या, 'येनाक्षर पुरुष वेद सत्यम्' इति विशेषणात् परमात्मविषया हि सा। ब्रह्मणा वा अग्रजेनोक्तेति ब्रह्मविद्या।" इत्युक्तम्। एवमुभयथास्या माहात्म्य प्रकाश्यते। सर्वविद्याप्रतिष्ठामिति पदस्य व्याख्यायाम् एव तेनोक्तम्— "सर्वविद्याप्रतिष्ठा सर्वविद्याभिव्यक्तिहेतुत्वात् सर्वविद्याश्रयामित्यर्थ। सर्वविद्यावेद्य वा वस्त्वनयैव विज्ञायत इति 'येनाश्रुत श्रुत भवति, अमत मतमविज्ञात विज्ञातमिति' श्रुते"। इय विद्या क्रमेणाङ्गिरस प्राप्ता। त विधि-वदुपसद्य शौनक पप्रच्छ 'कस्मिन्नु भगवो विज्ञाते सर्वमिद विज्ञात भवतीति उत्तरत्वेन अङ्गिरसोक्तम्—'द्वे विद्ये वेदितव्ये इति ह स्म यद् ब्रह्मविदो वदन्ति परा चापरा च। तत्रापरा ऋग्वेदो यजुर्वेद सामवेदोऽथर्ववेद शिक्षा कल्पो व्याकरण निरुक्त छन्दो ज्योतिषमिति। अथ परा यया तदक्षरमधिगम्यते।' [मुण्डक ११।४-५] अक्षरपदेन स्पष्टमेव ब्रह्मणो ग्रहण प्रसङ्गप्राप्तत्वात्, 'किं तद् ब्रह्म' इति प्रश्नस्योत्तर ददतो भगवत श्रीकृष्णस्य 'अक्षर ब्रह्म परमम्' इत्युक्तेश्च। अनेनोपन्यासेन ब्रह्मविद्यापरनाम्न्या अध्यात्मविद्याया माहात्म्य सुप्रतिष्ठित भवति।

अन्यथाऽपि अस्या माहात्म्य प्रकटीभवति। छान्दोग्ये सप्तमाध्यायारम्भ एव मन्त्रविन्नारदो भगवन्त सनत्कुमारमुपसद्य 'अधीहि भगव' इति होवाच। त होवाच सनत्कुमार—यद्वेत्थ तेन मोपसीद, ततस्त ऊर्ध्वं वक्ष्यामीति। स होवाच—ऋग्वेद भगवोऽध्येमि। यजुर्वेद सामवेदमाथर्वण चतुर्थमितिहासपुराण पञ्चम, वेदाना वेद, पित्र्य, राशि, दैव, निधि वाकोवाक्यमेकायन देवविद्या ब्रह्मविद्या भूतविद्या क्षत्रविद्या नक्षत्रविद्या

सर्पदेवयजनविद्याम्, एतद् भगवोऽध्येमि। सोऽहं भगवो मन्त्रविदेवास्मि नात्मवित्। श्रुतं ह्येव मे भगवद्दृशेभ्यस्तरति शोकमात्मविदिति। सोऽहं भगव शोचामि। तं मा भगवाञ्छोकस्य पारं तारयत्विति। [VII। १। १-३] अनेन वचनोपन्यासेन आत्मज्ञानस्य शोकतारणसाधनतामुक्त्वा श्रुतिस्तस्या माहात्म्यं दृढरूपेण प्रकटयति। अस्या एव श्रुतेरग्रिमेऽष्टमाध्यायेऽपि "य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः।" इति कथनेन तदेव माहात्म्यं प्रकाशितं भवति। 'तं दुर्दर्शं गूढमनु—मत्वा धीरो हर्षशोकौ जहातीति कठोपनिषदुक्त्यापीदमेव तथ्यं प्रकटीभवति। एवम् अविद्याकामकर्मजननमरणादि-सकलदुःखेभ्यो निवृत्तिप्राप्तेरेकमात्रहेतुत्वादेव सर्वविद्यानां प्रतिष्ठामिमां ब्रह्मविद्यामाह भगवान् प्रजापतिर्ब्रह्मेति निष्कर्षः।

भारतस्येदमाध्यात्मिकचिन्तनमतिमहनीयं वर्तते। नेदं चिन्तनं बुद्धिमात्रकृतं प्रज्ञानरूपं, प्रत्युत 'नाविरतो दुश्चरितात्' इत्यादि श्रुतेः सच्चरितानुष्ठानपूर्वकं श्रवणमननाद्यनुष्ठानात्मकम्। धर्मापरपर्यायोऽयं सदाचारः धृतिक्षमादमास्तेयधीविद्यासत्यादिरूपो भवति। यथा भगवता मनुनोक्तम् 'धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः। धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम्' इति। वैयक्तिकोऽयं धर्मो विश्वस्तरे समष्टिस्तरे वा ऋतनाम्ना प्रसिद्धो वेदेषु परमेश्वरादपृथक् प्रथमसृष्टिरूपः यस्य ग्लानौ हानौ वा परमेश्वरः स्वयमेव तस्य रक्षार्थं, जगति पुनस्तस्य संस्थापनार्थं रामकृष्णाद्यनेकरूपं अस्मिन् जगति अवतरति। गीता[1]-भगवतादिषु[2] सुस्पष्टमुक्तमेतत्। वेदोपनिष-द्भ्योऽभ्यधिकतरोऽयमाध्यात्मिकचिन्तनविकास इत्यवधेयम्। अतिक्रान्तमर्यादं दैत्यराजं हिरण्यकशिपुं हन्तुं त्रैलोक्यभयं च हर्तुं स नृसिंहरूपेणावततारेति को न जानाति? नारदं प्रति स्वपित्रा प्रजापतिना भगवता ब्रह्मणा कृतमस्य वर्णनमीदृशं लभ्यते भागवते—त्रैविष्टपोरुभयहा स नृसिंहरूपं कृत्वा भ्रमद्भ्रुकुटिदंष्ट्रकरालवक्त्रम्। दैत्येन्द्रमाशु गदयाभिपतन्तमारादूरौ निपात्य विददार नखैः स्फुरन्तम्॥" (भाग. II. ७. १४) एवमेवातिक्रान्तमर्वमर्यादं लोकरावणं रावणं हन्तुमिक्ष्वाकुवंशे जातस्य राज्ञो दशरथस्य पुत्ररूपेणायोध्यायां जातो भगवान् रामो मर्त्यरूपोऽपि पदातिरिव सकल

---

१ गीता IV। ८-परित्राणाय साधूनां—धर्मसंस्थापनार्थाय सम्भवामि युगे युगे॥

२ भागवत I। ३।५-एतन्नानावताराणां निधानं बीजमव्ययम्। यस्यांशांशेन सृज्यन्ते देवतिर्यङ्नरादयः।

राक्षसकुलमवधीदिति तथ्य सर्वेषा हिन्दुधर्मावलम्बिना मनसि वरीवर्ति। श्रीकृष्णावतार वर्णयन् प्रजापतिपतिर्ब्रह्मा नारद प्रति एव वक्ति भागवते–"भूमी सुरेतरवरूथविमर्दिताया क्लेशव्ययाय कलयसितकृष्णकेश। जात करिष्यति जनानुपलक्ष्यमार्ग कर्माणि चात्ममहिमोपनिबन्धनानि॥" (भाग॥ ७ २६) इत्यादि। जगज्जन्मादिकारण सर्वव्यापक ब्रह्म कथमधर्मविनाशपूर्वक धर्मसस्थापनार्थं मनुजरूपेणावतीर्य स्वविभुत्वप्रभुत्वादिभ्यो विरहितो भवितुमर्हतीत्यादिशङ्कायाः समाधानार्थं वक्तु शक्यते यद् यथाऽऽकारेण लघुरपि रविर्वस्तुतो लघुर्नैव भवति यतो हि तस्योदये लोकत्रयस्यान्धकारोऽपयाति, तथैव भगवान् नारायणो भूमावावतीर्ण सन् अविभुरप्रभुश्च प्रतिभाति यद्यपि, तथापीदमविभुत्वादिक न वास्तवमपितु मायाकृतम्। इदमपि भक्तान् स्व प्रति आकृष्य तान् अनुगृहीतुमुपकर्तुं धन्य कर्तुं च तेन स्वीक्रियते। अन्यथाऽचिन्त्यम् अगोचरमधोक्षज 'नारायण' मनसाऽपि चिन्तयितु को नाम पारयति जन ? परिमिताकारे तु रूपगुणाद्याकर्षण वर्तते एव। स्वामी रामकृष्णपरमहस स्वानुभूतमेतत्तथ्यमेकदा स्वभक्तान् प्रति प्रकटीचकार। उक्त तेन–वशो यावत् लघ्वाकार स्वीकृत्य वशी नैव भवति तावत् तस्या स्वरस्य माधुर्यं नैव आयाति। एवमेव यावत् भूमा अपरिमितोऽपि नृसिह-राम-कृष्णादिरूपेण परिमिताकार नैव गृह्णाति, तावत् जगत्स्रष्टु रूप-धर्म-शौर्यादिगुणा जनसामान्यस्य कृते ग्रहणयोग्या नैव भवन्ति। उक्तभगवता कृष्णेनापि– 'अव्यक्ता हि गतिर्दु ख देहवद्भिरवाप्यते' इति। एव सुस्पष्ट यद् भारतीया आध्यात्मिकचिन्तनधारा उपनिषदादिपर्यन्तमेव विकासमनुबभूव तत पर चावरुद्धा जाता इत्येषा धारणा सर्वथा भ्रान्तिमूला। महनीयतमा अध्येता उपनिषदोऽध्यात्मविषये नान्तिमा शब्दा। रामायणमहाभारतभागवतादि-द्वारेण सा सतत परिवर्द्धमाना विकास लभमाना च इदानीमपि अनवरुद्धप्रवाहा वर्तते। धन्येयम् महनीया भारतीयाध्यात्मिकचिन्तनपरम्परा। किन्तु अतत्त्वज्ञा इमा अवरुद्धप्रवाहा विकासविरोधिनी च मत्वा उपेक्षन्ते। अस्या उपेक्षया ते एतल्लाभवञ्चिता आत्मन एव विनाश कुर्वन्ति।

अन्याप्येका भ्रान्तिरस्या विषये, सा च इयमेव यदयि वर्तमानजीवनोपेक्षिणी परलोकपरा परलोकपोषिणी च। 'यतोऽभ्युदय-नि श्रेयस-सिद्धि स धर्म' इत्यभ्युदयनि श्रेयसोभयलक्ष्य साधको धर्मो यस्या चिन्तनपरम्परायाम् अध्यात्मप्रतिष्ठित अध्यात्ममूलको वा, सा भारतीया चिन्तन-परम्परा लोकोपेक्षिणी कथ भवेत् ? मनुयाज्ञवल्क्यादीना धर्मशास्त्रकाराणा सुस्पष्ट मत यद् अध्यात्मज्ञानस्य मानवजीवने

विशिष्ट उपयोग। भगवता व्यासेन जीवने अर्थकामयोर्धर्ममूलकत्वाद् धर्मस्यैव सर्वाधिकाऽपेक्षा उद्घोषिता—

'ऊर्ध्वबाहुर्विरौम्येष, न च कश्चिच्छृणोति मे।
धर्मादर्थश्च कामश्च, स धर्म किं न सेव्यते॥'

यतो हि सर्वसामान्याना कृतेऽर्थ कामश्च सर्वथाऽपेक्षितौ तौ च धर्मं विना नैव सम्भवतस्तस्मात् तयोर्मूलत्वाद् धर्मो जीवनेऽवश्यमेवाचरणीय इति व्यासवचनस्य तात्पर्यम्। एव धर्मे बलमादधाना चिन्तनधारा इहलोकोपेक्षिणी कथ भवेत् ? तत सर्वविधो लौकिकोऽभ्युदय समृद्धिश्च अस्या साध्यम् इत्यत्र न कोऽपि सशय। एव सत्यपि,मोक्षापरपर्यायभूत नि श्रेयस अस्या परम साध्य भवत्येव। एव वर्तमानजीवनस्य लोकस्य चोपेक्षा इत्यस्या य दोषारोप, स सर्वथा मृषेव।

नो चेदेव, कथमस्मिन् देशे अध्यात्मज्ञाने चरमा काष्ठा गते, तत्समकालमेव लौकिककला-कौशलादीना, लोकोपयोगिना गणितज्योतिषकामशास्त्रायुर्वेदादीना, सर्वभूतहितकारिणा शास्त्राणा, कृषि-गोरक्ष वाणिज्यादीना सर्वविध सर्वोत्कृष्टश्च विकास समभविष्यत् ? ततो निश्चप्रचमेतत् यदस्माक भारतीया चिन्तनपद्धति सर्वविधमिष्ट साधयितु सर्वथा समर्था। केवलमस्मिन् सामर्थ्ये अस्माक दृढो विश्वासोऽपेक्षित। दृढ विश्वास प्रतीतिं वा विना नास्या आ हिमालयात् कन्याकुमारीपर्यन्त प्रसृते विशालेऽस्माक देशे, विदेशेषु चापि पूर्वदेव प्रचार सर्वथा वाञ्छितोऽपि कर्तुं शक्यते। अतोऽस्मिन् परमपवित्रे सर्वथापेक्षिते च कार्ये वय सद्य एव बद्धपरिकरा भवेम। एतस्य पूर्वजेभ्य प्राप्तस्य अनर्घस्य रिक्थस्य प्रचारप्रसारादिद्वारेण सर्वथा सरक्षणमस्माक सर्वेषा पवित्रतम कर्तव्यम्। एतस्य निर्देश पूर्वसूरिभिर्विचारकैश्च स्वामिदयानन्द-रामकृष्णपरमहस-विवेकानन्द-रमणमहर्ष्यरविन्दतिलक-गान्ध्यादिभि स्वस्वचरितद्वारेण तत्तत्काले कृत।

□

# प्राणस्वरूपविमर्शः

मानवशरीररचनाया प्राणा सर्वाधिक महत्त्वपूर्णानि तत्वानि। जीवनादभिन्ना एते प्रायेण वर्ण्यन्ते, जीवनमेव च सर्वस्व प्राणिशरीरे। यतो यावच्छरीरे प्राणा जीवन वा तावदेव जगत सर्वे व्यापाराश्चलन्ति, उपरतेषु प्राणेषु सर्व समाप्त भवति, न कोऽपि व्यापारो न वा क्रिया भवति। किन्तु प्राणानामेतेषा विषये नैकमत्य दार्शनिकाना विचारपराणाम्। केषाञ्चित् मतेन वायुरूपा एते प्राणास्तदभिन्न, अपरेषा च मतेन नैते वायवोऽपितु ततो भिन्ना। न चाप्येते वायुक्रियारूपा। पुनश्च केषाञ्चिन्मनीषिणा मतेनैते एकादशेन्द्रियाणा व्यापारा वृत्तयो वा, अपरेषा च मतेन त्रयाणामन्तकरणानामेव वृत्तय एते। एवमनेकविधा विवादा प्रसृता एतेषा विषये, येन विप्रतिपत्तिज सशयो मनसि पद लभते। एव सति सामान्यरूपेणेय जिज्ञासा जायते यत् किमेते प्राणा, किस्वरूपा, किवृत्तय, कुतो वा जायन्ते, उताहो नित्या एते ? एतदर्थ तेऽत्र सूक्ष्मेक्षिकया मीमासितव्या।

अन्तकरणत्रयस्य सामान्यासामान्योभयविधा वृत्ति प्रतिपादयता ईश्वरकृष्णेन *ऊनत्रिंशसाख्यकारिकाया*[१] *प्राणाना वायुत्वेन चर्चा कृता। ते च वायुरूपा पञ्च प्राणा* अन्तकरणाना सामान्या सम्मिलिता वृत्तिरुक्ता। असामान्या अर्थात् विशिष्टा वृत्तयो व्यापाराश्च क्रमेण स्वालक्षण्यमर्थात् स्वलक्षणभूतानि सङ्कल्पाभिमानाध्यवसाया सन्ति। एवमीश्वरकृष्णमतेन पञ्च प्राणा वायव एव न ततो भिन्ना ते चान्तकरणत्रयस्य वृत्तय। कारिकाटीकाकारो वृद्धवाचस्पतिरपि 'त्रयाणा करणाना पञ्च वायवो जीवन वृत्ति, तद्भावे भावात् तदभावे चाभावात्' इत्युक्त्वा मूलगत सिद्धान्तमेव समर्थयति। पञ्च प्राणवायव एव जीवन, तदेव च त्रयाणान्तकरणाना सम्मिलितमेक कार्यम् इति कथनस्य तात्पर्यम्। जीवनमर्थात् शरीधारण कार्यमन्तकरणानामित्यन्यत्रापि[२] उक्त वाचस्पति-मिश्रेण—बुद्ध्यहङ्कारमनासि तु स्ववृत्त्या प्राणादिलक्षणया धारयन्ति— एव धार्यमपि

---

१ स्वालक्षण्य वृत्तित्रयस्य सैषा भवत्यसामान्या।
सामान्यकरणवृत्ति प्राणाद्या वायव पञ्च ॥

२ द्रष्टव्या, द्वात्रिंशकारिकायास्तत्त्वकौमुदी।

पृथगुपदेशाद्' इति ब्रह्मसूत्रे वायुतत्सञ्चाराभ्यामतिरेकस्य प्राणेऽवधारणाच्च।" इति। अत्रोद्धृताया प्रश्नश्रुतौ वायु प्राणस्य कार्यमुक्तम्। अतो द्वयोरैक्यस्य कथा दूरेऽपास्ता। किन्तु भिक्षो साङ्ख्यप्रवचनभाष्ययोगवार्तिकयोर्न मतैक्य वायुप्राणयोर्विषये परिलक्ष्यते। पूर्वमुक्त यत् साख्यप्रवचनभाष्ये भिक्षुणा प्राणस्य वायोर्भिन्नत्व प्रतिपादित साङ्ख्यसूत्रकारिकयोश्चोक्त द्वयोरैक्य न प्राधान्येनापितु प्राणाना वायुवत् सञ्चाराद् गौणदृष्ट्यैव प्रतिपादितम्। एते च प्राणा अन्त करणत्रयस्य परिणामभेदा इत्यपि तत्र प्रतिपादितम्। किन्तु योगवार्तिके स 'उदानजयाज्जलपङ्ककण्टकादिष्वसङ्ग उत्क्रान्तिश्च (३।३९) इति योगसूत्रस्य 'समस्तेन्द्रियवृत्ति प्राणादिलक्षणा जीवनम्' इति व्यासभाष्यमनुसरन् प्राणान् नान्तकरणस्य परिणाममपितु एकादशेन्द्रियाणा कथयति— 'जीवननाम्नी सर्वेन्द्रियाणा वृत्ति प्राणनापाननादिरूपेत्यर्थ' इति। किन्तु प्राणस्यान्त करणपरिणामत्वमुक्त्वा तस्य रहस्यमुद्घाटयन् भिक्षु (२।३१) साख्यसूत्रभाष्यमेवमुपसहरति—'अतएव लिङ्गशरीरमध्ये प्राणानामगणनेऽपि न न्यूनता, बुद्धेरेव क्रियाशक्त्या सूत्रात्मप्राणादिनामकत्वादिति। अन्त करणपरिणामेऽपि वायुतुल्यसञ्चारविशेषाद् वायुदेवताधिष्ठितत्वाच्च वायुव्यवहारोपपत्तिरिति'। एव भिक्षुमत स्वतोविरोधेन दूषित प्रतीयते। एकतस्तु स योगभाष्यमनुसरन् योगवार्तिके प्राणाना सर्वेन्द्रियपरिणामत्व प्रतिपादयति, अपरत साङ्ख्यसूत्रप्रवचनभाष्ये तेषामन्त-करणपरिणामत्व कथयति। अन्त करणत्रयेऽपि केवल बुद्धेरेव सूत्रात्मा प्राण इति वा नाम इति तस्याभिमतम्। इम स्वतोविरोध परिहर्तुं न कोऽपि प्रयास परिलक्ष्यते भिक्षो। तेन तस्यैतद्विषयक वास्तविक मन्तव्यमज्ञानप्रायमेव।

प्राणो महत्तत्वान्तर्गत इति भिक्षुदृष्टिरागमेन समर्थयितु शक्यत एव। उक्त हि अहिर्बुध्न्यसहितायाम्—'महान् नाम महत्तत्त्वमव्यक्तादुदित मुने। कालो बुद्धिस्तथा प्राण इति त्रेधा स गीयते॥' (७।८) इति। अस्याभ्यन्तरकरणवृत्तित्व सर्वेन्द्रियवृत्तित्वमर्थात् बाह्यकरणवृत्तित्वमपि च मुख्यगौणदृष्ट्याश्रयेण तथैव समर्थयितु शक्यते यथा भिक्षुणा गौणदृष्ट्या तस्य साख्यप्रोक्त वायुत्व समर्थितम्। प्राणो मुख्यतस्तु आभ्यन्तरकरणवृत्ति, शरीराभ्यन्तरे स्थितत्वात्। किन्तु यतो हि आभ्यन्तरकरणेषु बाह्यकरणानि द्वाराणि[1]

---

१ द्रष्टव्या, साख्यकारिका ३५—सान्तकरणा बुद्धि सर्वं विषयमवगाहते यस्मात्।
तस्मात् त्रिविध करण द्वारि द्वाराणि शेषाणि॥

तस्माद् गौणदृष्ट्या व्यासभाष्ये प्रतिपादित भिक्षुणा चानुसृतम् 'समस्तेन्द्रियवृत्ति प्राणादिलक्षणा जीवनम्' इति मत समर्थयितु शक्यम्।

प्रदर्शित प्राणस्याभिर्यथा विज्ञानभिक्षुणा न वायुक्रिये पृथगुपदेशादिति वेदान्तसूत्रस्वारस्येन साङ्ख्यमतेऽपि प्राणस्य वायुत्ववायुपरिणामत्वे प्रतिषिद्धे, तत्प्रतिपादनपराणि वाचस्पत्यविरुद्धमतान्यपि च प्रत्याख्यातानि। किन्तु तेन साङ्ख्ययोगदर्शनयो गौणदृष्ट्या प्रतिपादित प्राणस्य वायुत्वमित्युक्त्वा समाधान कृतम्। योगोक्त समस्तेन्द्रियवृत्तित्व च तस्य बाह्येन्द्रियाणामन्तःकरणद्वारत्वेन समर्थितम्। एव प्राणस्यान्तःकरणवृत्तित्व वायुभिन्नत्व च भिक्षोर्मतमिति आयाति।

प्राणस्य वायोर्भिन्नत्व वायुक्रियायाश्च भिन्नत्व तु शङ्कराचार्यस्यापि मत, किन्तु तस्यान्तःकरणवृत्तित्व न शङ्करस्याभिमतम्। 'न वायुक्रिये पृथगुपदेशात्' (ब्रह्मसूत्र २।४।९) इत्यस्य भाष्य कुर्वता तेनैवमुक्तम्—"न वायु प्राणो, नापि करणव्यापार। कुत ? पृथगुपदेशात्। वायोस्तावत् प्राणस्य पृथगुपदेशो भवति—'प्राण एव ब्रह्मणश्चतुर्थ पाद, स वायुना ज्योतिषा भाति च तपति च' (छान्दोग्य ३।१८।४) इति। न वायुरेव सन् वायो पृथगुपदिश्येत। तथा करणवृत्तेरपि पृथगुपदेशो भवति, वागादीनि करणान्यनुक्रम्य तत्र तत्र पृथक् प्राणस्यानुक्रमणात्। वृत्तिवृत्तिमतोश्चाभेदान्नहि करणव्यापार एव सन् करणेभ्य पृथगुपदिश्येत। तथा 'एतस्माज्जायते प्राणो मन सर्वेन्द्रियाणि च। ख वायु (मुण्डक २।१।३) इत्येवमादयोऽपि वायो करणेभ्यश्च प्राणस्य पृथगुपदेशा अनुसर्तव्या।" एव शङ्कराचार्यमतेन प्राणो न वायुर्न वा करणानि। समस्ताना करणानामेका सम्मिलिता वृत्ति प्राण इति यद् योगभाष्ये एव च (शङ्कराचार्यव्याख्यानुसारेण) साङ्ख्येऽपि कथित, तन्न सम्भवतीति आचार्येणात्र कथितम्। ननु पञ्जरचालनन्यायेनैतद् भविष्यति। यथैकपञ्जरवर्तिन एकादशपक्षिण प्रत्येक प्रतिनियतव्यापारा सन्त सम्भूयैक पञ्जर चालयन्ति, एवमेकशरीरवर्तिन एकादश प्राणा प्रत्येक प्रतिनियतवृत्तय सन्त सम्भूयैका प्राणाख्या वृत्ति प्रतिलप्स्यन्त इतीम पूर्वपक्ष प्रत्याचक्षाण आचार्य एव कथयति—"युक्त प्रत्येकवृत्तिभिरवान्तरव्यापारै पञ्जरचालनानुरूपैरेवोपेता पक्षिण सम्भूयैक पञ्जर चालयेयुरिति। तथा दृष्टत्वात्। इह तु श्रवणाद्यवान्तरव्यापारोपेता प्राणा न सम्भूय प्राण्युरिति युक्त, प्रमाणाभावात्। अत्यन्तविजातीयत्वाच्च श्रवणादिभ्य प्राणनस्य। तथा प्राणस्य श्रेष्ठत्वाद्युद्घोषण

गुणभावोपगमश्च त प्रति वागादीना, न करणवृत्तिमात्रे प्राणेऽवकल्पते।" एव वागादिभ्य एकादशेन्द्रियेभ्य प्राणस्य श्रेष्ठत्वकथनात्, अपि च एकादशेन्द्रियाणा श्रवणादीना प्राणात् *सर्वथा विजातीयत्वाद्,* न *समस्तेन्द्रियाणमेका सम्मिलिता प्राणाख्या* वृत्तिरपितु वायुक्रियाभ्यामन्य प्राण इत्याचार्यस्याभिमतम्। यदि प्राण इन्द्रियाणा वृत्तिस्तर्हि वागादीन्द्रियाणामेव प्राधान्य प्राणस्य तु गुणभावो भवेत्, यावच्छ्रुति प्राणस्य ज्येष्ठत्व श्रेष्ठत्व प्राधान्य च वागादीना च गुणभाव कथयति[1]। कथ तर्हि प्राणस्येन्द्रियवृत्तित्वमित्यभिप्राय आचार्यस्य। पुनश्च श्रवणादीनामपरिस्पन्द प्राणश्च परिस्पन्दात्मक एव च तेभ्य प्राणस्य विजातीयत्व सुस्पष्टम्। कथ तर्हि प्राण श्रवणादीन्द्रियाणा वृत्तिर्भवितुमर्हति ? आभ्या महत्त्वपूर्णकारणाभ्या प्राणस्य करणवृत्ते पृथक्त्व सिद्धम्।

किन्त्वन्या श्रुति प्राणस्य वायुत्व कथयति—य प्राण स वायुरिति। अस्या समाधानमाचार्य एव करोति—'*वायुरेवायमध्यात्ममापन्न* पञ्चव्यूहो विशेषात्मनाऽवतिष्ठमान प्राणो नाम भण्यते, न तत्त्वान्तर नापि वायुमात्रम्। अतश्चोभे अपि भेदाभेदश्रुती न विरुध्येते"। आचार्यस्य कथनस्यायमभिप्रायो यत् न वयुमात्र प्राणो न वा वायुभिन्न तत्त्वान्तरम् अपितु वायुभेद एव। देह प्राप्त पञ्चावस्थो विकारात्मना स्थितो वायुरेव प्राण। यथा मृदोऽवस्थाविशेषो घट मृदात्मा, तथा वायोरवस्थाविशेष प्राणो वाय्वात्मा। किन्तु नाय प्राणो वायुमात्र न वाऽन्यो वायुतत्त्वात् अपितु शरीरे प्रतिष्ठितो वाय्ववस्थाविशेष एव। अतएव उभेऽपि भेदाभेदश्रुती सुश्लिष्टे सङ्गते च।

प्राणस्य प्राधान्य श्रेष्ठत्व चोपरि उक्तम्। किन्तु यथा चक्षुरादीना जीव प्रति *गुणभूतत्वात् जीवस्य च प्राधान्यात् जीव स्वतन्त्र, एव प्राणोऽपि प्राधान्यात् यदि जीववदेव* स्वतन्त्रस्तर्हि द्वयो स्वतन्त्रयोरेकस्मिन् शरीरे एकवाक्यत्व नोपपद्यते, एव विरुद्धानेकदिक्क्रियतया देह उन्मथ्येत। अस्या शङ्काया समाधानमनन्तर कथितेन सूत्रेण

---

१ (१) द्रष्टव्या छान्दोग्यश्रुति ५/१/१ –प्राणो वाव ज्येष्ठश्च श्रेष्ठश्च।
(२) प्रश्न० ६/४ –स प्राणमसृजत्। प्राणाच्छ्रद्धा ख वायुर्ज्योतिराप पृथिवीन्द्रिय मनोऽन्नमन्नाद्वीर्यं तपो मन्त्रा कर्म लोका लोकेषु नाम च।
(३) बृहदा० ६/१/१३– न वै शक्ष्यामस्त्वदृते जीवितुम्।

क्रियते वेदान्तदर्शने। तच्चेदम्— चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्य (ब्रह्मसूत्र २/४/१०)। अस्य व्याख्यानं शङ्कराचार्येण स्वभाष्ये एवं कृतम्— "तुशब्द प्राणस्य जीववत् स्वातन्त्र्य व्यावर्तयति। यथा चक्षुरादीनि राजप्रकृतिवज्[1] जीवस्य कर्तृत्व भोक्तृत्व च प्रति उपकरणानि न स्वतन्त्राणि, तथा मुख्योऽपि प्राणो राजमन्त्रिवज् जीवस्य सर्वार्थकरत्वेनोपकरणभूतो न स्वतन्त्र। कुत ? तत्सहशिष्ट्यादिभ्य। तैश्चक्षुरादिभि सहैव प्राण शिष्यते प्राणसंवादादिषु। समानधर्मणा च सह शासन युक्त बृहद्रथन्तरादिवत्। आदिशब्देन संहतत्वाचेतनत्वादीन् प्राणस्य स्वातन्त्र्यनिराकरणहेतून् दर्शयति।" यथा मन्त्री इतरेषु नैयोगिकेषु प्रधानोऽपि राजानमपेक्ष्यास्वतन्त्र, एव प्राणोऽपि चक्षुरादिषु प्रधानोऽपि जीवेऽस्वतन्त्र इति भाष्यकारस्य कथनस्याभिप्राय।

पूर्वम् प्राणो न वायुमात्र न वा वायुभिन्न तत्त्वान्तरमपितु देह प्राप्त पञ्चावस्थो विकारात्मना स्थितो वायुरेव प्राण इति यदुपस्थापित सिद्धान्तत्वेन, तद्विषये शङ्केय जायते यद् यदि वायुविकारात्मना स्थितो वाय्वात्मा प्राणस्तर्हि प्राणस्य वाय्वपेक्षया श्रेष्ठत्व ज्येष्ठत्व च श्रुतिषु कथमनेकश कथितम्। पूर्वोद्धृतप्रश्नश्रुतौ श्रूयते ईदृश ज्येष्ठत्वम्—'स प्राणमसृजत्। प्राणाच्छ्रद्धा ख वायुर्ज्योतिराप' इत्यादि। तथा छान्दोग्यश्रुतावपि—'प्राणो वाव ज्येष्ठश्च श्रेष्ठश्च' इति। शङ्केयमसमाहितैव तिष्ठति। अस्या समाधान प्रश्नश्रुते शाङ्करभाष्यात् प्राप्तु शक्यते। 'स' इत्यनेन षोडशकल सर्वज्ञ सर्वेश्वर पुरुष गृहीत आचार्येण, 'प्राण' इत्यनेन च हिरण्यगर्भ सर्वाधिकारी सर्वप्राणिकरणाधार। भाष्य त्वीदृश प्रवर्तते— "ईश्वरेणैव सर्वाधिकारी प्राण पुरुषेण सृज्यते। कथम् ? स पुरुष उक्तप्रकारेणेक्षित्वा[2] प्राण हिरण्यगर्भाख्य सर्वप्राणिकरणाधारम् अन्तरात्मानमसृजत सृष्टवान्। तत प्राणाच्छ्रद्धा सर्वप्राणिना शुभकर्मप्रवृत्तिहेतुभूताम्। तत कर्मफलोपभोगसाधनाधिष्ठानानि कारणभूतानि महाभूतान्यसृजत।" अनेन भाष्यसन्दर्भेण सर्वथा सुस्पष्ट यदस्मिन् प्रश्नश्रुतिसन्दर्भे प्राणो हिरण्यगर्भ सर्वप्राणिना समष्टिभूत सर्वाधिकारी, न च व्यष्टिरूप प्रत्येकशरीरगत प्राण। हिरण्यगर्भसूक्तेऽपि ऋग्वेदीये 'हिरण्यगर्भ समवर्तताग्रे भूतस्य जात पतिरेक आसीत्' इत्यादिरूपेणायमेव सर्वेषा प्राणिना

१ राज प्रकृतय प्रजा तद्वत्।

२ प्रश्न ६।३-स ईक्षाञ्चक्रे कस्मिन्नहमुत्क्रान्त उत्क्रान्तो भविष्यामि, कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामीति।

पति सर्वाधिकारी महाप्राण एव स्तुत । अस्मादेव प्राणात् आकाशवाय्वादीनि महाभूतानि जातानि, न पुन व्यष्टिप्राणात् यस्तु शरीरगतवायुविकार एव पूर्वमुक्त । वाय्वादीना प्रभवस्य हिरण्यगर्भाख्यस्य प्राणस्य वाय्वपेक्षया ज्येष्ठत्व श्रेष्ठत्व च एव सुस्पष्ट भवति । अयमेव हिरण्यगर्भ पूर्वोद्धृतेऽहिर्बुध्न्यसहिताश्लोके 'महान्' इति नाम्ना गृहीत[१] । अयमेव चात्र 'काल इति, बुद्धिरिति, प्राण इति स त्रेधा गीयन' इत्युक्तम् । 'एतस्माज्जायते प्राणो मन सर्वेन्द्रियाणि च । ख वायुर्ज्योतिरापश्च पृथिवी विश्वस्य धारिणी ॥'[२] इतिमुण्डकश्रुतावपि प्रश्नश्रुतेरेव विषयो विवृत । अत्रापि परमाक्षरात् परमेश्वरात् सर्वप्रथम प्राणस्तदनन्तर च महाभूतानि सर्वेन्द्रियाणि अन्यानि च तत्त्वानि समुत्पद्यमानानि प्रदर्शितानि, एव निश्चप्रच समष्टिभूतस्य हिरण्यगर्भमहदादिनामधेयस्य सर्वप्रथम जातस्य महाप्राणस्य सर्वभूतेभ्यो ज्येष्ठत्व श्रेष्ठत्व च । व्यष्टिप्राणस्यापि न सर्वेन्द्रियवृत्तित्व न वाऽन्तःकरणवृत्तित्वमपितु शरीरगतवायुविकारात्मकमिति हि वेदान्तविदा मनीषिणा मनीषा ।

□

१ अहिर्बुध्न्य ७।८ —महान् नाम महत्त्वमव्यक्तादुदित मुने । कालो बुद्धिस्तथा प्राण इति त्रेधा स गीयते ॥

२ मुण्डक २।१।३

## ब्रह्मणः स्वरूपं महिमा च

'द्वे विद्ये वेदितव्ये इति ह स्म यद् ब्रह्मविदो वदन्ति परा चैवापरा च। तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति। अथ परा यया तदक्षरमधिगम्यते'। (मुण्डक १।४।४-५) परा विद्या तु सा यस्याः प्रतिपाद्यमक्षरतत्त्वमेव। एतच्च परममक्षरं 'अक्षरं ब्रह्म परममिति' भगवदुक्त्या ब्रह्मैवास्ति। इदं ब्रह्म देवानां प्रथमात् विश्वकर्तुः क्षरमयाद्ब्रह्मणोऽपि परमन्यत् सनातनमक्षरमव्यक्तम्। यथा श्रीमद्भगवद्गीतायां 'परस्तस्मात्तु भावोऽन्योऽव्यक्तोऽव्यक्तात् सनातनः। यः सर्वेषु भूतेषु नश्यत्सु न विनश्यति॥' (८।२०) इत्याद्युक्तेरपि सुस्पष्टम्। इदमेव सनातनमक्षरं ब्रह्म 'परः पुरुषः' इति विवृण्वन् भगवान् श्रीकृष्णः 'अनन्यया भक्त्याऽस्य लभ्य' इत्यपि तथ्यं तदनन्तरमेव विवृणोति। -पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया। यस्यान्तःस्थानि भूतानि येन सर्वमिदं ततम्॥ द्रष्टव्य (८।२२) अस्मादेव परमपुरुषादस्मादेवाक्षरात् परमात्मनो निखिलमपि विश्वं तथैव सम्भवति तत्रैव च लीयते यथोर्णनाभेस्तन्तवः ऊर्णा वा सम्भवन्ति तत्रैव च लीयन्ते। यथा मुण्डके एव स्पष्टीकृतम्—

> 'यथोर्णनाभिः सृजते गृह्णते च
> यथा पृथिव्यामोषधयः सम्भवन्ति।
> यथा सतः पुरुषात्केशलोमानि
> तथाक्षरात् सम्भवतीह विश्वम्॥-१।१।७

आचार्यशङ्करोऽस्य सृष्टिविषयेऽतिमहत्त्वपूर्णमेकं तथ्यं प्रकटयन् ब्रवीति यत् 'यथैते दृष्टान्तास्तथा विलक्षणं सलक्षणं निमित्तान्तरानपेक्षाद् यथोक्तलक्षणात् अक्षरात् सम्भवति उत्पद्यते' इति। अस्मात् स्पष्टमेतद्यत् सर्वसामर्थ्यवान् परमेश्वरो जगत् अन्यानपेक्ष एवाक्षेव सृजति। तैत्तिरीयोपनिषदो भृगुवल्ल्याः प्रथमानुवाकेऽपि ठमम्नाय पुत्राय भृगवे देवो वरुण इदमेव तथ्यं प्रकाशयति—"यतो वा इमानि भूतानि जायन्ते, येन

जातानि जीवन्ति, यत्प्रयन्त्यभिसंविशन्ति, तद्विजिज्ञासस्व तद् ब्रह्म इति।' अत्रैतावदेवाधिक कथितं यदनेनैव ब्रह्मणा सर्वाणि 'जातानि' भूतानि जीवन्ति। अर्थादत्र स्थितान्येव प्राणान् धारयन्ति सृष्टे स्थितिकाले। प्रलयकाले च इदमेव प्रयन्ति प्रतिगच्छन्ति अभिसंविशन्ति, तादात्म्यं प्रतिपद्यन्ते। इदमेवोपनिषद्वाक्यमाश्रित्य भगवता कृष्णद्वैपायनेन स्वब्रह्मसूत्रस्यादावेव *'जन्माद्यस्य यत'* इति ब्रह्म-लक्षणं विहितम्। श्रीमद्भागवतेऽपि तथ्यमेतदनेकशः प्रतिपादितम्। यथा श्रीकृष्णावतारे देवक्या स्तुतौ—

त्वत्तोऽस्य जन्मस्थितिसंयमान् विभो! वदन्त्यनीहादगुणादविक्रियात्।
त्वयीश्वरे ब्रह्मणि नो विरुध्यते त्वदाश्रयत्वादुपचर्यते गुणैः॥
—१०।३।१९

*शङ्कराचार्यस्तदनुयायिनश्चेदं ब्रह्मणस्तटस्थलक्षणं ब्रुवन्ति। यथा नदीतटे स्थितैः* वृक्षैर्नद्याः सङ्केतः क्रियते तज्जिज्ञासुं प्रति, तदनुसारं तत्र गतेन तेन च नदी प्राप्तुं शक्यते, तथैव ब्रह्मण्यारोपितेन जगज्जन्मादिकार्येण तत्प्राप्तये तज्जिज्ञासून् प्रति श्रुतयः सङ्केतं कुर्वन्तीति तेषां तात्पर्यम्। तस्य ब्रह्मणः सच्चिदानन्दात्मकं स्वरूपलक्षणमपि श्रुत्यादौ अनेकशः कथितं यथा तैत्तिरीयस्यैव भृगुवल्लीतः पूर्वमागतायां ब्रह्मानन्दाख्यवल्ल्या आदिमेऽनुवाके एवमुक्तम्—ॐ ब्रह्मविदाप्नोति परम्। तदेषाभ्युक्ता—'सत्यं ज्ञानमनन्तं ब्रह्म। यो वेद निहितं गुहायां परमे व्योमन्, सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चितेति' (तैत्ति० २।७।१)। पञ्चमे चानुवाकेऽन्तत 'आनन्द आत्मा' इत्युक्तम्। 'अनन्तम्' इति पदेन लौकिकसत्यज्ञानादेरस्य वैशिष्ट्यमनन्तसत्यज्ञानानन्दरूपं श्रुतिः प्रकटयति। भागवतेऽपि 'सत्तामात्रं निर्विशेषं निरीहं स त्वं साक्षाद्विष्णुरध्यात्मदीपः' इत्यादि प्रकारेण ब्रह्मणः सत्तामात्रत्वं,

'वदन्ति तत् तत्त्वविदस्तत्त्वं यज्ज्ञानमद्वयम्।
ब्रह्मेति परमात्मेति भगवानिति शब्द्यते॥' (भाग० १।२।११)

इत्यादिरूपेण च तस्य अद्वयज्ञानरूपत्वं च प्रतिपादितम्। *'सत्यं ज्ञानमनन्तं ब्रह्म'* इत्यादिकथनानन्तरमेव 'यतो वा इमानि भूतानि जायन्ते' इत्यादिकथनमस्ति, तत्समर्थनं च 'तस्माद्वा एतस्मादात्मनः आकाशः सम्भूतः, आकाशाद्वायुः, वायोरग्निः, अग्नेरापः, अद्भ्यः पृथिवी, पृथिव्या ओषधयः, ओषधीभ्योऽन्नम्, अन्नात् पुरुषः' इत्यादिप्रकारेण प्राप्यते।

यत्स्वरूपलक्षणचर्चायामस्यानन्दरूपता सक्षेपेण चर्चिता, 'तद्विशेषमीमासा ब्रह्मानन्दवल्ल्या अष्टमेऽनुवाके एव प्राप्यते–'भीषाऽस्माद्वात पवते, भीषोदेति सूर्य । भीषास्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चम । सैषाऽऽनन्दस्य मीमासा भवति। युवा स्यात् साधु युवाऽध्यायक । आशिष्ठो द्रढिष्ठो बलिष्ठ । तस्येय पृथिवी सर्वा वित्तस्य पूर्णा स्यात्। स एको मानुष आनन्द । ते ये शत मानुषा आनन्दा, स एको मनुष्यगन्धर्वाणा[1] x x स एको[2] देवगन्धर्वाणामानन्द x x स एक पितृणाम् x x स एक आजानजाना[3] देवानाम् xx स एक कर्मदेवानाम्[4] x x स एको देवानाम्[5] x x स एक इन्द्रस्य xx स एको बृहस्पते x x स एक प्रजापते x x स एको ब्रह्मण आनन्द । श्रोत्रियस्य चाकामहतस्य'। सर्वस्यैवास्य प्रकरणस्यानन्दवल्ल्यर्थस्य सक्षेपत प्रकाशनार्थैष मन्त्रो भवति–'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह। आनन्द ब्रह्मणो विद्वान् न बिभेति कुतश्चन' इति। अस्य नवमानुवाकस्थितस्य मन्त्रस्य भाष्य कुर्वन् आचार्यशङ्कर कथयति–"त ब्रह्मण आनन्द श्रोत्रियस्यावृजिनस्याकामहतस्य सर्वैषणाविनिर्मुक्तस्यात्मभूत विषयविषयिसम्बन्ध विनिर्मुक्त स्वाभाविक नित्यमविभक्त परमानन्द ब्रह्मणो विद्वान् यथोक्तविधिना, न बिभेति कुतश्चन निमित्ताभावात्। न हि तस्माद्विदुषोऽन्यद्वस्त्वन्तरमस्ति भिन्न, यतो बिभेति। य एव वेद यथोक्तमद्वैतमानन्द ब्रह्म वेद, तस्यात्मभावेन दृष्टे पुण्यपापे निर्वीर्य अतापके जन्मान्तरारम्भके न भवत ।" एतया विस्तृतचर्चया ब्रह्मण परमानन्दरूपता तद्विदुषश्च ज्ञानिन पुनर्जन्माभाव स्पष्टो भवति। वस्तुतो मनुष्या अन्ये चापि प्राणिन स्वभावत आनन्द सुखमेव वाऽन्विष्यन्ति, यतो हि समेषा मूलमय ब्रह्मानन्द एव।

सर्वथा निर्गुणत्रिय निर्विकार निष्कल निरञ्जन ब्रह्म कथ चतुर्दशलोकात्मकनिखिलब्रह्माण्डनिकायभूतस्य जन्म स्थिति-भङ्गकारण भवतीत्यस्योत्तरमुपनिषत्सु अनेकशोऽनेकधा दत्तम्। 'तस्मान्मायी सृजते विश्वमेतत्' इत्यतिसक्षिप्तमुत्तर श्वेताश्वतरोपनिषद । मुण्डकेऽपि 'यथा सुदीप्तात् पावकाद्विस्फुलिङ्गा सहस्रश प्रभवन्ते सरूपा। तथाऽक्षराद् विविधा सोम्य ! भावा प्रजायन्ते तत्र

---

१ मनुष्या सन्त कर्मविद्याविशेषाद् गन्धर्वत्व प्राप्ता मनुष्यगन्धर्वा ।–शा भा

२ देवगन्धर्वा जातित एव।–शा भा

३ आजानजा देवा स्मार्तकर्मविशेषतो देवस्थानेषु जाता ।–शा भा

४ कर्मदेवा, ये वैदिकेन कर्मणाऽग्निहोत्रादिना केवलेन देवानपियन्ति ।–शा भा

५ देवा इति त्रयस्त्रिशद् हविर्भुज ।–शा भा (अष्टौ वसव एकादशरुद्रा द्वादशाऽदित्या इन्द्र प्रजापतिश्चेति)

त्वेवापियन्ति (मु० २। ९) इत्याद्युक्तम्। पूर्वोद्धततैत्तिरीयश्रुतिसन्दर्भेऽपि यतो वा इमानीत्यादिना जन्मस्थितिभङ्गकारि ईश्वराख्यं ब्रह्मैवेत्युक्तम्। 'तज्जलानिति शान्त उपासीत,' इति शाण्डिल्यविद्यायामपि एवंविधं ब्रह्मोपास्यमित्युक्तम्। एतस्यैव वर्णनं प्रायेण गीतामहाभारतभागवतादिपूपलभ्यते। 'अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाग्विवृताश्च वेदाः। वायुः प्राणो हृदयं विश्वमस्य, पद्भ्यां पृथिवी, ह्येष सर्वभूतान्तरात्मा' (मुण्डक० २।१।५) इति, 'यथोर्णनाभिस्तन्तुनोच्चरेद् यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्ति, एवमेवास्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि व्युच्चरन्ति' (बृहद० २।१।२०) इति, 'एतस्य वा प्रशासने गार्गि! सूर्याचन्द्रमसौ विधृतौ तिष्ठतः x x द्यावापृथिव्यौ x x निमेषा मुहूर्ता x x संवत्सरा विधृतास्तिष्ठन्ति x x। एतस्याक्षरस्य प्रशासने गार्गि! ददतो मनुष्याः प्रशंसन्ति यजमानं देवा दर्वीं पितरोऽन्वायत्ता' (बृहद्०३।८।९) इति चास्यैव महिमा गीतः। महाभारते शरशय्यामधिशयानेन भीष्मेण कृतायां भगवत्स्तुतौ मुण्डक-बृहदारण्यकयोरिव एतत् सर्वं हृदयावर्जकरीत्या वर्णितम्—

'यस्याग्निरास्यं द्यौर्मूर्धा खं नाभिश्चरणौ क्षितिः।
सूर्यश्चक्षुर्दिशः श्रोत्रे तस्मै लोकात्मने नमः॥
यस्य केशेषु जीमूता नद्यः सर्वाङ्गसन्धिषु।
कुक्षौ समुद्राश्चत्वारस्तस्मै तोयात्मने नमः॥'

वैदिकसंहितासु पुनः,

'एतावानस्य महिमा ततो ज्यायाँश्च पूरुषः।
पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि॥
चन्द्रमा मनसो जातश्चक्षोः सूर्योऽजायत।
श्रोत्राद्वायुश्च प्राणश्च मुखादग्निरजायत॥
नाभ्या आसीदन्तरिक्षं शीर्ष्णो द्यौः समवर्तत।
पद्भ्यां भूमिर्दिशः श्रोत्रात् तथा लोकानकल्पयन्॥'

इत्यादिप्रकारेण परमपुरुषस्य नारायणस्य लोकातिगो महिमा वर्णितः, प्रपञ्चितश्चायं समस्तेऽप्यनन्तरवर्तिनि संस्कृतवाङ्मये। अयमेव महेश्वरस्त्रिभिर्गुणैर्युक्तो ब्रह्मविष्णुशिवरूपेण जगतः सृष्टिस्थितिविनाशकार्यं सम्पादयति विष्णुपुराणस्य।

'सृष्टिस्थित्यन्तकरणीं ब्रह्मविष्णुशिवाभिधाम्।
स संज्ञां याति भगवानेक एव जनार्दनः॥'

इति श्रीमद्भागवतस्य च

'सत्त्व रजस्तम इति प्रकृतेर्गुणास्तैर्युक्त पर पुरुष एक इहास्य धत्ते।
स्थित्यादये हरि-विरिञ्चिहरेतिसज्ञा, श्रेयासि तत्र खलु सत्त्वतनोर्नृणा स्यु ॥'
(१।३।२३) इति गीतायाश्च

अविभक्त च भूतेषु विभक्तमिव च स्थितम्
भूतभर्तृ च तज्ज्ञेय ग्रसिष्णु प्रभविष्णु च॥' (१३। १६)

इत्यादिवचनानि अस्मिन् विषये प्रमाणम्।

अस्माद् ब्रह्मणो जीवात्मनो भेदो नैव तात्त्विक पारमार्थिको वाऽपितु व्यावहारिकोऽविद्याकृत एव। तथ्यमिद श्रुत्यादिष्वनेकश प्रतिपादितम्। कठश्रुते

अग्निर्यथैको भुवनप्रविष्टो, रूप रूप प्रतिरूपो बभूव।
एकस्तथा सर्वभूतान्तरात्मा, रूप रूप प्रतिरूपो बहिश्च॥
वायुर्यथैको भुवन प्रविष्टो, रूप रूप प्रतिरूपो बभूव।
एकस्तथासर्वभूतान्तरात्मा, रूप रूप प्रतिरूपो बहिश्च।
—(२।२।९,१०)

बृहदारण्यकस्य 'नेह नानास्ति किञ्चन', छान्दोग्यस्य 'स य एषोऽणिमैतदात्म्यमिद सर्वं, तत् सत्य स आत्मा श्वेतकेतो' (६।१३।३) श्रीमद्भागवतस्य च,

यथा ह्यवहितो वह्निर्दारुष्वेक स्वयोनिषु।
नानेव भाति विश्वात्मा भूतेषु च तथा पुमान्॥ (१।२।२२)

तथा च

'स्वयोनिषु यथा ज्योतिरेक नाना प्रतीयते।
योनीना गुणवैषम्यात् तथात्मा प्रकृतौ स्थित॥ (३।२८।४३)

इत्यादिवचनान्यपि जीवब्रह्मणो पारमार्थिकमभेदमेव समर्थयन्ति। एव पारमार्थिकमभेदमेव विज्ञाय अनुभूय च जीवो जन्ममरण-बन्धनाद् विमुक्तो भवति, अथवा 'मृत्यो स मृत्युमाप्नोति य इह नानेव पश्यति' बृहदारण्यकाप्येतज्ज्यतश्चज्ञायते। एव परमात्मनोऽन्येभ्यश्च स्वस्याभेदानुभूतिरेव मानव जीवनस्य सर्वोत्तम पुरुषार्थो यदर्थं निखिलापि साधनसम्पत्तिरपेक्ष्यते। एतयैव ससरणान्मुक्तिर्जायते।

# औपनिषदं ब्रह्म तत्सृष्टिश्च

उपनिषदामिदमित्यौपनिषदमुपनिषत्सम्बन्धि इत्यर्थः। अथवा उपनिषत्सु भवमौपनिषदम्। उपनिषत्सु प्रतिपादितमित्यर्थः। तादृशं ब्रह्म, तेन कृता सृष्टिश्चास्य निबन्धस्य प्रतिपाद्यम्। काश्चेमा उपनिषदः, किस्वरूपाः किंनाम्न्यश्च। वेदवाङ्मये चतस्रः संहितास्तदुपरि लिखिता ब्राह्मणाख्य-व्याख्याग्रन्थाश्च प्रामुख्येनान्तर्भूताः। कर्मकाण्डप्रधानानां ब्राह्मणग्रन्थानामेव उत्तरवर्तिभागाश्चिन्तनोपासनादिप्रधाना आरण्यकसंज्ञकाः। एतेषां चारण्यकानामेव परिशिष्टरूपा उपनिषदो, या उत्कृष्टात्मचिन्तनज्ञानप्रधाना आध्यात्मिकग्रन्थाः। एवं सिद्धान्ततः प्रत्येकोपनिषदः सम्बन्धः कस्याश्चिद् वैदिकशाखाया ब्राह्मणग्रन्थेन सह स्यात्। यथोक्तं मुक्तिकोपनिषदि- एकैकस्यास्तु शाखाया एकैकोपनिषन्मता इति। एवं प्रत्येकशाखायाः स्वीयं ब्राह्मणमारण्यकमुपनिषच्च भवेदित्यनुमीयते। साम्प्रतमनेकाः शाखास्तद्ग्रन्थाश्च कालकवलिताः। फलतोऽवशिष्टानामपि शाखानामेकैकस्या उपनिषदिदानीं नोपलभ्यते, येन शाखाभिः साक्षात्सम्बद्धानामुपनिषदां सङ्ख्या प्रायेण पञ्चदशैव वर्तते। अन्यथा तु विंशत्यधिकं शतद्वयं प्राप्येयं सङ्ख्या साम्प्रतम्। वस्तुतस्तु एता उपनिषदोऽर्वाचीनास्तत्तत्सम्प्रदायानुसारिण्यो मौलिकाभ्यः प्राचीनोपनिषद्भ्यः प्रतिपाद्यविषयादिदृष्ट्या पर्याप्तभिन्नाः। अतोऽस्य निबन्धस्य कृते तु प्रतिनिधिभूता दश एव प्राचीना उपनिषदः पर्याप्ताः स्युः। एताश्च ईश-केन-कठ-प्रश्न-मुण्डक-माण्डूक्य-तैत्तिरीयैतरेय-छान्दोग्य-बृहदारण्यकोपनिषदः। एतदतिरिक्तं श्वेताश्वतर-मैत्रायणी-नृसिंहतापिन्योऽपि पर्याप्तमहत्वमावहन्ति। यथावसरं यथापेक्षं चासामेव प्रतिपाद्यसामग्र्या ब्रह्मणः स्वरूपं संक्षेपेण प्रस्तूयते।

उपनिषच्छब्दवाच्याया अविद्यातज्जन्यसमस्तानर्थविनाशिन्या विद्याया विषयभूतस्यात्मतत्त्वस्य ब्रह्मणो वा किं स्वरूपम्? ब्रह्मविद्याचार्येण यमेन नचिकेतसे अस्योत्तर ददता एवमुक्तम्—

अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत्।
अनाद्यनन्तं महत परं ध्रुवं, निचाय्य तन्मृत्युमुखात् प्रमुच्यते ॥
(कठ १/३/१५)

इति। अत्र ब्रह्म अव्यय व्ययरहितमविनाशि कथितम्। कथमेतत् ? यदि शब्दादिमत्तद् व्येति, इद तु अशब्दादिमत्त्वादव्ययं नित्यम्। इतश्चापि नित्यम्—अनादि, अविद्यमान आदि: कारणमस्य तदिदमनादि। सर्वमादिमत् कार्यत्वादनित्यं स्वकारणे प्रविलीयते यथा पृथिव्यादि। इद सर्वकारणत्वादकार्य ततश्च नित्यम्। नैतस्य कारणमस्ति यस्मिन्निद प्रविलीयेत। अनन्तमिति कथनेनापि इदमेव तथ्य प्रकटितम्। महतो बुद्धेः पर विलक्षण, नित्यविज्ञप्तिस्वरूपत्वात्। यथा भागवतेऽपि— 'वदन्ति तत् तत्त्वविदस्तत्त्व यज्ज्ञानमद्वयम्'। सर्वसाक्षि हि सर्वभूतात्मत्वाद् ब्रह्म, यथोक्तम्—

एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते।
दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभि ॥ (कठ १/३/१२)

ध्रुव च कूटस्थनित्य, न तु पृथिव्यादिवदापेक्षिकनित्यत्वमस्य। तदेवम्भूतं ब्रह्म आत्मान निचाय्य अवगम्य मृत्युमुखात् प्रमुच्यते। अविद्याकामकर्मलक्षणात् ससारी जीव इत्यग्रे प्रतिपादयिष्यते। मुण्डकेऽपि अक्षरब्रह्मणोऽस्य समान वर्णनं प्राप्यते, तच्चेदम्—

यत्तदद्रेश्यमग्राह्यमगोत्रमवर्ण –
मचक्षु श्रोत्रं तदपाणिपादम् ।
नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं
यद्भूतयोनिं परिपश्यन्ति धीराः ॥ (मुण्डक १/१/६)

पूर्वोद्धृतकठमन्त्रापेक्षया अत्र केवल 'भूतयोनि' भूताना कारणं पृथिवीव समस्तस्थावरजङ्गमानाम् इत्यधिकमुक्तम्।

इदं भूतयोनित्वमनन्तरमेव निरूप्यते। सर्वेषां योनिं सर्वेषामात्मभूतमिदमक्षरं परं ब्रह्म धीरा धीमन्तो विवेकिन एव परिपश्यन्ति। यया च विद्यया ईदृशमक्षरमधिगम्यते सा परा विद्येति। 'अथ परा—यया तदक्षरमधिगम्यते' (मुण्डक १/१/५) इत्यादि पूर्वमन्त्रतो ज्ञायते।

किन्तु यद् ब्रह्म आत्मा वा 'अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात् कृताकृतात्।। अन्यत्र भूताच्च भव्याच्च' इत्यादि प्रकारेण जिज्ञासित नचिकेतसा, कथ तस्य भूतयोनित्व सङ्गत भवेत् ? मुण्डकेऽस्य प्रश्नस्य समाधानमेव कृतम्—

यथोर्णनाभि सृजते गृहणते च,
यथा पृथिव्यामोषधय सम्भवन्ति।
यथा सत पुरुषात् केशलोमानि,
तथाक्षरात् सम्भवतीह विश्वम्।। (मुण्डक १/१/७)

यथा लूता किञ्चिदपि कारणान्तरमनपेक्ष्य स्वयमेव सृजते स्वशरीराव्यतिरिक्तानेव तन्तून् बहि प्रसारयति, पुनस्तानेव गृह्णते च अर्थात् गृह्णाति स्वात्मभावमेवापादयति, *तथैव निमित्तान्तरानपेक्षाद् यथोक्तलक्षणात् अक्षरात् विलक्षण सलक्षण च विश्वमिह* ब्रह्माण्डे ससारमण्डले वा सम्भवति। अनेन सुस्पष्टमेवैतत् सिद्ध्यति यन्निमित्तोपादानोभयमेव कारणमस्य जगतोऽक्षर ब्रह्मैव। इदमेव चाभीष्ट सर्वासामुपनिषदाम् इति ततत्स्थलेभ्योऽन्वेषणीयम्। केन क्रमेणैतत् जगज्जायत इत्यग्रिमयोर्मन्त्रयोरेव वर्णितम्—

तपसा चीयते ब्रह्म ततोऽन्नमभिजायते।
अन्नात् प्राणो मन सत्य लोका कर्मसु चामृतम्।।
य सर्वज्ञ सर्वविद् यस्य ज्ञानमय तप।
तस्मादेतद् ब्रह्म नाम रूपमन्न च जायते।।
(मुण्डक १/१/८-९)

अनयोरिद तात्पर्य—तपसा अर्थात् उत्पत्तिविधिज्ञानेन भूतयोन्यक्षर ब्रह्म चीयते, उत्पिपादयिषदिद जगद् अङ्कुरमिव बीजमुच्छूनता गच्छति। तत उपचिताद् ब्रह्मण अन्नमव्याकृत व्याचिकीर्षित साधारण कारणम् ससारिणामुत्पद्यते। ततश्चाव्याकृतादन्नात् "प्राणो हिरण्यगर्भो ब्रह्मणो ज्ञानक्रियाशक्त्यधिष्ठितो जगदात्मा, तस्माच्च मन सङ्कल्प-विकल्पसशयनिर्णयाद्यात्मकम् अभिजायते। तस्मात् मनस सत्यम् आकाशादिभूतपञ्चकम्, तस्माच्च भूतपञ्चकादण्डक्रमेण सप्त 'लोका' भूरादयो जायन्ते। तेषु लोकेषु मनुष्यादिप्राणिक्रमेण 'कर्माणि', कर्मसु च निमित्तभूतेषु 'अमृत' कर्मज फल जायते।

कर्मजस्य फलस्य 'अमृतम्' इति संज्ञा कुतः ? यतो यावत् कर्माणि कल्पकोटिशतैरपि न विनश्यन्ति, तावत् तेषां फलमपि न विनश्यति। इममेवार्थमुपसंजिहीर्षुणा ऋषिणाऽनन्तरे मन्त्रे पुनरपि एवमुच्यते—यः अक्षराख्यः सर्वज्ञः सर्ववित् परमेश्वरः, यस्य च विश्वसृष्टिस्थितिसंहारविषयकज्ञानमयं तपो विद्यते, तस्मादेव एतत् पूर्वोक्तं कार्यलक्षणं ब्रह्म हिरण्यगर्भाख्यं जायते। किञ्च, नाम यज्ञदत्तदेवदत्तादिकं, रूपं शुक्लनीलपीतादिकं, अन्नं च व्रीहियवादिलक्षणं जायते। इदमन्नं स्थूलं सर्वप्राणिव्यवहारयोग्यं पूर्वमन्त्रोक्तात् सूक्ष्मतमाद् अव्याकृतात् जगतः साधारणकारणात् 'अन्नात्' सर्वथा भिन्नम् इत्यवधेयम्। सर्वथा सुस्पष्टमेतत् तथ्यं यत् समस्तमपि विश्वम्—आ ब्रह्मणः स्तम्बादिपर्यन्तं निखिलं ब्रह्माण्ड—परब्रह्मणः परमात्मनः परमेश्वराज्जायते। अतएवाग्रेऽपि—

> दिव्यो ह्यमूर्तः पुरुषः सबाह्याभ्यन्तरो ह्यजः।
> अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात् परतः परः॥
> एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च।
> खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी॥
> (मुण्डक. २/१/२-३)

इत्याद्युक्तम्।

प्रश्नोपनिषद्यपि एतदेव वस्तुजातम् 'आत्मन एष प्राणो जायते' (३/३) इत्यादिनोक्तम्। तैत्तिरीयेऽपि भृगुवल्ल्यां पितरं वरुणदेवम् उपदेशार्थमुपसन्नाय भृगवे 'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत् प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व, तद्ब्रह्मेति' (३/१), ब्रह्मवल्ल्यां च 'तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः, आकाशाद् वायुः, वायोरग्निः, अग्नेरापः, अद्भ्यः पृथिवी, पृथिव्या ओषधयः, ओषधीभ्योऽन्नम्, अन्नात् पुरुषः' (२/१) इत्याद्युक्तम्।

ऐतरेयोपनिषत्तु 'आत्मा वा इदमेक एवाग्र आसीन्नान्यत् किञ्चन मिषत्। स ईक्षत लोकान्नु सृजा इति। स इमाँल्लोकानसृजत्'(१।१)इत्यादिकथनेनैव प्रारभते। अत्र 'एक एवाग्र आसीत्' इति कथनेनात्मनः एकत्वमपि विश्वयोनित्वादधिकं कथितं भवति। परमतत्त्वमेकमद्वितीयमिति उपनिषदां महत्त्वपूर्णः सिद्धान्तः। एतच्च सिद्धान्तभूतं मतमनेकशः अनेकत्र प्रतिपादितम्। यथा कठोपनिषदि,

अग्निर्यथैको भुवनं प्रविष्टो
रूपं रूपं प्रतिरूपो बभूव।
एकस्तथा सर्वभूतान्तरात्मा,
रूपं रूपं प्रतिरूपो बहिश्च॥
वायुर्यथैको भुवनं प्रविष्टो,
रूपं रूपं प्रतिरूपो बभूव।
एकस्तथा सर्वभूतान्तरात्मा
रूप रूपं प्रतिरूपो बहिश्च॥ (कठ २/२/९-१०)

एतदेव'एतस्मादाम्मन आकाश सम्भूत'इत्यादि तैत्तिरीयोपनिषत्सन्दर्भेऽप्युक्तम्। अत्र ब्रह्मणि आत्मशब्दप्रयोगात् वेदितुरात्मैव ब्रह्म न ततो भिन्नमिति ज्ञायते। अपि च, तत्रैव 'स यश्चाय पुरुषे यश्चासावादित्ये, स एक' (तैति ३/१०/४), ईशेऽपि 'योऽसावसौ पुरुष सोऽहमस्मि' (१६) इत्युक्तम्। बृहदारण्यकेऽपि द्वितीयाध्याये 'अथात आदेशो नेति नेति। न ह्येतस्मादिति नेत्यन्यत् परमस्ति–" (२।३।६)। मधुब्राह्मणेऽपि पृथिव्यप्तेजोवाय्वादित्यचन्द्राकाशादिषु स्थितस्य तेजोमयामृतमयपुरुषस्य, शरीरे स्थितस्य तेजोमयामृतमयपुरुषस्य चाभेदमुक्त्वा तयोर्ब्रह्मत्वमुक्तम्।

अन्यत्रापि 'स यो ह वै तत्परम ब्रह्म वेद, ब्रह्मैव भवति' (मुण्डक ३/२/९) इति। भूम्न परब्रह्मण सुखरूपत्वात् ब्रह्मविदो नित्यसुखरूपमात्मानमनुभवन्ति। इदमैकान्तिकमेकत्व प्रतिपादित बृहदारण्यके–'न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्त, यत् पश्येत्' (४/३/२३)। अपि च–'स एष नेति नेत्यात्मा_' (४/५/१५)। छान्दोग्येऽपि 'एकमेवाद्वितीयम्' (६।२।१) इत्युक्तम्। एव सर्वासूपनिषत्सु ऐकात्म्यमद्वैत वा सिद्धान्तत्वेन सुप्रतिष्ठितम्।

□

# औपनिषदो मोक्षस्तदुपायश्च

उपनिषदितिशब्दस्य व्युत्पत्तिप्रदर्शनेन सङ्क्षेपेणाधिकारिविषयसम्बन्ध-प्रयोजनाख्याश्चत्वार अनुबन्धा अपि प्रदर्शिता भवेयुर्यतस्तस्माद् व्युत्पत्तिरेव पुर स्थाप्यते प्रथमम्। विशरणगत्यवसादनार्थस्य षद्लृधातोरुपनिपूर्वस्य क्विप्प्रत्ययान्तस्य रूपमुपनिषदिति। शङ्कराचार्यैरुपनिषच्छब्दस्यार्थं प्रकाशयद्भिरेवमुक्तं कठोपनिषद्-भाष्ये— "उपनिषच्छब्देन च व्याचिख्यासितग्रन्थप्रतिपाद्यवेद्यवस्तुविषया विद्योच्यते। केन पुनरर्थयोगेन ? ये मुमुक्षवो दृष्टानुश्रविकविषयवितृष्णा सन्त उपनिषच्छब्दवाच्या वक्ष्यमाणलक्षणा विद्यामुपसद्योपगम्य तन्निष्ठतया निश्चयेन शीलयन्ति तेषामविद्यादे ससारबीजस्य विशरणाद्धिंसनाद् विनाशनाद् विद्या उपनिषदित्युच्यते—'निचाय्य तन्मृत्युमुखात् प्रमुच्यते' (कठ. १/३/१५) इति। पूर्वोक्तविशेषणान् मुमुक्षून् वा पर ब्रह्म गमयतीति ब्रह्मगमयितृत्वेन ब्रह्मविद्योपनिषद्। तथा च वक्ष्यति—ब्रह्मप्राप्तो विरजोऽभूद् विमृत्यु' (कठ. २/३/१८) इति। लोकादिर्ब्रह्मजज्ञो योऽग्निस्तद्विषयाया विद्याया द्वितीयेन वरेण प्रार्थ्यमानाया स्वर्गलोकप्राप्तिहेतुत्वेन गर्भवासजन्यजराद्युपद्रववृन्दस्य लोकान्तरे पौनःपुन्येन प्रवृत्तस्यावसादयितृत्वेन शैथिल्यापादनेन अग्निविद्याप्युपनिषदित्युच्यते। तथा च वक्ष्यति—'स्वर्गलोका अमृतत्व भजन्ते' (कठ. १/१/१३) इति। अविद्यादिससारहेतुविशरणादे सदिधात्वर्थस्य ग्रन्थमात्रेऽसम्भवाद् विद्याया च सम्भवात्। ग्रन्थस्यापि तादर्थ्येन तच्छब्दोपपत्ते, आयुर्वै घृतमित्यादिवत्। तस्माद् विद्याया मुख्यया वृत्त्योपनिषच्छब्दो वर्तते, ग्रन्थे तु भक्त्येति।" नो चेत्, तर्हि ग्रन्थाध्ययनमात्रेणैवानर्थनि-वृत्तिर्भवेत् किन्तु न सा भवति। "एवमुपनिषच्छब्दनिर्वचनेनैव विशिष्टोऽधिकारी विद्यायामुक्त। विषयश्च विशिष्ट उक्तो विद्याया पर ब्रह्म प्रत्यगात्मभूतम्। प्रयोजन चास्या विद्याया उपनिषदो वा आत्यन्तिकी ससारनिवृत्तिर्ब्रह्मप्राप्तिलक्षणा, सम्बन्धश्चैवम्भूतप्रयोजनेनोक्त।" ब्रह्मप्राप्तिलक्षणा ससारनिवृत्तिरेव मोक्ष उच्यते, यस्य पर साधन ब्रह्मात्मैक्यज्ञान-लक्षणा परा विद्या ब्रह्मविद्या वा उपनिषच्छब्दवाच्येति पूर्वविवेचनात् सुस्पष्टम्। सर्वासूपनिषत्सु ऐकात्म्यमद्वैत वा सिद्धान्तत्वेन सुप्रतिष्ठितम्। अखण्डानन्दाद्वयं ब्रह्मैव एकमात्र वस्तु इति वेदान्तानामुपनिषदां टिण्डिमघोष। अस्यैव

सत्यस्याज्ञानेन बन्धो, ज्ञानेन मोक्ष । आत्मज्ञान विना मुक्ति कथमपि न सम्भवति इति तासा मान्यता। अत्र "ऋते ज्ञानान्न मुक्ति"रित्यात्मकानि वचासि सर्वासूपनिषत्सु प्रायश प्राप्यन्ते। सुष्ठूक्त मुण्डके—

वेदान्तविज्ञान-सुनिश्चितार्था
सन्यासयोगाद्यतय शुद्धसत्त्वा ।
ते ब्रह्मलोकेषु परान्तकाले
परामृता परिमुच्यन्ति सर्वे ॥ (मु ३/२/६)

वेदान्तविज्ञानस्यार्थ पर आत्मा, तन्निश्चयेन सशयविपर्ययरहितज्ञानेन, 'परामृता' जीवन्त एव ब्रह्मभूता । ससारिणा ये मरणकालास्तेऽपरान्ता, तानपेक्ष्य मुमुक्षूणा ससारावसाने देह-परित्यागकाल 'परान्त'। परान्तकाले देहत्यागसमये ब्रह्मलोकेषु[१] ब्रह्मण्येव परिमुच्यन्ति भिन्नाकाशवन्निवृत्तिमुपयान्ति। यथा घटे भिन्ने नष्टे वा तदुपहितो घटाकाशोऽपि निवृत्तो भवति कारणाभावे कार्याभावात्, तथैवात्मविद्ययाऽविद्याया कृतनिवृत्तौ जीवात्मनो जीवत्व निवृत्त भवति, ब्रह्मत्व बृहत्तमत्व च प्रकटीभवति घटाकाशस्य महाकाशवत्। इयमेवावस्था मुक्तिरित्युच्यते, परमानन्दरूपा चेय, यतो हि ब्रह्मतैव बृहत्तमतैव सुखरूपा, अल्पता तु दुःखरूपा। यथोक्त छान्दोग्ये—"यो वै भूमा तत् सुख, नाल्पे सुखमस्ति। भूमैव सुख, भूमा त्वेव विजिज्ञासितव्य इति"। (७/२३/१) बृहदारण्यके च इदमेव तथ्य "न तस्य प्राणा उत्क्रामन्ति, ब्रह्मैव सन् ब्रह्माप्येति।" इति सक्षेपेणोक्तम्। इयमेवोपनिषदुक्ता मुक्ति । आत्मविज्ञानमेव चास्या आत्यन्तिकमैकान्तिक च कारणम्—"यश्चायमस्या पृथिव्या तेजोमयोऽमृतमय पुरुषो, यश्चायमध्यात्मं शारीरस्तेजोमयोऽमृतमय पुरुषोऽयमेव स योऽयमात्मा, इदममृतमिद ब्रह्मेद सर्वम्।" (बृहदा २/५/१)

इदानीमय महत्त्वपूर्ण प्रश्न उत्तिष्ठति यदात्मविज्ञानस्य किं कारण, कथञ्चास्योत्पत्ति ? बृहदारण्यकोपनिषद मैत्रेयीब्राह्मणे स्वस्य ब्रह्मनिष्ठा पत्नी मैत्रेयी प्रति अमृतत्वस्य साधन प्रतिपादयता महर्षियाज्ञवल्क्येनात्मनो दर्शनमुपदिष्ट, तस्य च साधनत्वेन श्रवणमनननिदिध्यासनान्यात्मनो उपदिष्टानि—"आत्मा वा अरे द्रष्टव्य श्रोतव्यो मन्तव्यो निदिध्यासितव्य । मैत्रेयि । आत्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेद

१ ब्रह्मैव लोको ब्रह्मलोकस्तस्मिन् ब्रह्मण्येव इत्यर्थ ।

सर्वं विदितम्" (२/४/५)। एतानि श्रवणमनननिदिध्यासनानि एवात्मसाक्षात्कारस्यात्म-दर्शनस्य वाऽन्तरङ्गभूतानि साक्षात्कारणानि। एतद्विषयक.

श्रोतव्य श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभि ।

मत्वा च सतत ध्येय एते दर्शनहेतव "॥

इति सङग्रहश्लोक वेदान्तवाङमये सुप्रसिद्ध.। एतेषामपि सम्प्राप्तौ नित्यानित्यवस्तु-विवकेहामुत्रार्थफलभोगविराग-शमदिषट्कसम्पत्ति-मुमुक्षुत्वरूप साधनचतुष्टय परम्परया कारणम्। बहिरङ्गभूतानि एतानि चत्वारि, यतो हि एतै सम्पन्न एव प्रमाता श्रवणमनननिदिध्यासनैरात्मज्ञान प्राप्तु समर्थ । एतच्च समस्तेऽपि उपनिषद्वाङ्मये तत्र-तत्र क्वचिद् विस्तरेण क्वचिच्च सङ्क्षेपेण प्रतिपादितम्। यथा कठोपनिषदि—

नाविरतो दुश्चरितान्नाशान्तो नासमाहित ।

नाशान्तमानसो वाऽपि प्रज्ञानेनैनमाप्नुयात् ॥ (१/२/२४)

यथा वा वृहदारण्यके—"तदेतत् त्रय शिक्षेद्, दम दान दयामिति" (५/२/३)। "तमेत वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन, एतमेव विदित्वा मुनिर्भवति। एतमेव प्रव्राजिनो लोकमिच्छन्त प्रव्रजन्ति। ते ह स्म पुत्रैषणायाश्च वित्तैषणायाच लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति" (४/४/२२) इति च। मुण्डकेऽपि शमदमश्रद्धातपोभैक्ष्यचर्यादिरपेक्षा एव प्रदर्शिता आत्मस्वरूपजिज्ञासुभ्य साधकेभ्य—

"तप-श्रद्धे ये ह्युपवसन्त्यरण्ये

शान्ता विद्वासो भैक्ष्यचर्यां चरन्त ।

सूर्यद्वारेण ते विरजा प्रयान्ति

यत्रामृत स पुरुषो ह्यव्ययात्मा॥" (१/२/११)

उपवसन्ति सेवन्ते, विरजा विरजस क्षीणपुण्यपापकर्माण । यत्र सत्यलोकादौ। अमृत स पुरुष प्रथमजो हिरण्यगर्भ, अव्ययात्मा यावत्-समारस्थायी। क्रममुक्तिरेषोक्ता। प्रसङ्गतस्तप-आदिकमप्युक्तम्। एव यज्ञादीनि श्रौतकर्माणि ईश्वरार्पणभावेन कृतानि चित्तशुद्धि विदधति, शुद्धमेव चित्त चाञ्चल्यरहित समाधानयोग्य

च भवति, समाधानयोग्यतया सम्पन्नेनैव च चित्तेन सूक्ष्मतम आत्मा कथञ्चिदुपासितु शक्य । प्रणवे तस्य ध्यानमुपासन वा सुशकत्वात् प्रभविष्णुत्वाच्च सर्वोत्कृष्टमुत्तम च। सूक्ष्मतमस्य ध्यानार्थ मनस किमप्यालम्बनमावश्यक, प्रणवश्च ब्रह्मण श्रेष्ठमालम्बनमुक्त कठे–

एतदालम्बन श्रेष्ठमेतदालम्बन परम्।

एतदालम्बनं ज्ञात्वा ब्रह्मलोके महीयते॥ (१/२/१९)

भगवान् पिप्पलादोऽपि जिज्ञासमानाय सत्यकामाय प्रोवाच–"एतद्वै सत्यकाम पर चापरश्च ब्रह्म यदोङ्कार । तस्माद् विद्वानेतेनैवायतनेनैकतरमन्वेति" (प्रश्न ५/२)। परमक्षर पुरुषाख्यम् अपरञ्च प्राणाख्य प्रथमज यत्, तदोङ्कार एव। अस्य भाष्य कुर्वता भगवता शङ्कराचार्येणापि उक्तम्–"पर ब्रह्म शब्दाद्युपलक्षणानर्हं सर्वधर्मविशेषवर्जितमतो न शक्यमतीन्द्रियगोचरत्वात् केवलेन मनसाऽवगाहितुम्। ओङ्कारे तु विष्ण्वादिप्रतिमास्थानीये भक्त्यावेशितब्रह्मभावे ध्यायिना तत् प्रसीदतीत्येतदवगम्यते शास्त्रप्रामाण्यात्। तथाऽपर च ब्रह्म। तस्मात् पर चापर च ब्रह्म यदोङ्कार इत्युपचर्यते। तस्मादेव विद्वान् एतेनैवात्मप्राप्तिसाधनेनैव ओङ्काराभिध्यानेन एकतर परमपर वा ब्रह्मान्वेत्यनुगच्छति। नेदिष्ठ ह्यालम्बनमोङ्कारो ब्रह्मण ।" भाष्यकारस्य कथनस्येदमेव तात्पर्य यदोङ्कारस्य जपेन, तत्र च ब्रह्मदृष्ट्याधानेन परमात्मा प्रसीदति। अतएव कठप्रश्नमुण्डकमाण्डूक्यतैत्तिरीयच्छान्दोग्यबृहदारण्यकादिषु विशेषतो बहुश अस्य माहात्म्य प्रतिपादितम्। मुण्डके–

"प्रणवो धनु शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते।

अप्रमत्तेन वेद्धव्य शरवत् तन्मयो भवेत्॥ (२/२/४)

इति। "ओमित्येव ध्यायथ आत्मान स्वस्ति व पराय तमस परतात्।" (२/२/६) इतिवोक्तम्। प्रकृष्ट नूयते स्तूयते सर्वैरिति प्रणव ओमित्यर्थ । यथा धनुषि सहित शर दूरस्थ लक्ष्य विध्यति तन्मयश्च भवति, तथैव प्रणवेन ओङ्कारेणाभ्यस्यमानेन सस्क्रियमाण आत्मा चित तदवच्छिन्न ससारी जीवस्तदालम्बनोऽप्रतिबन्धेनाक्षरे ब्रह्मणि सम्यक् तिष्ठति। एवमक्षरे लक्ष्ये प्रवेशकारणमोङ्कार। माण्डूक्येऽपि–"ओमित्येतदक्षरमिद सर्वं तस्योपव्याख्यान भू [illegible]

च 'ओमित्येतदक्षरमुद्गीथमुपासीत, ओमिति ह्युद्गायति' (१/१) इत्युक्तम्। अस्य श्रुतिवाक्यस्य भाष्य विदधता श्रीशङ्करेण ओङ्कारस्य माहात्म्य सुष्ठु प्रतिपादित, तच्चैवम्—"ओमित्येतदक्षर परमात्मनोऽभिधान नेदिष्ठम्। तस्मिन् हि प्रयुज्यमाने स प्रसीदति, प्रियनामग्रहणे इव लोक। तदिहेतिपर प्रयुक्तमभिधायकत्वाद्व्यावर्तित शब्दस्वरूपमात्र प्रतीयते। तथा च अर्चादिवत् परस्यात्मन प्रतीक[१] सम्पद्यते। एव नामत्वेन प्रतीकत्वेन च परमात्मोपासन-साधन श्रेष्ठमिति सर्ववेदान्तेष्ववगतम्। जपकर्मस्वाध्यायाद्यन्तेषु च वहुश प्रयोगत् प्रसिद्धमस्य श्रैष्ठ्यम्।" अत कर्माङ्गावयवभूते ओङ्कारे परमात्मप्रतीके दृढामैकाग्र्यलक्षणा मति सन्तनुयात्। स्वयमेव श्रुतिरोङ्कारस्योद्गीथशब्दवाच्यत्वे हेतुमाह-ओमिति ह्युद्गायति, ओमित्यारभ्य हि यस्मादुद्गायत्यत उद्गीथ ओङ्कार इत्यर्थ। बृहदारण्यक-भाष्येऽपि प्रायेण समानमेव व्याख्यान कृत भाष्यकारेण। अस्माद् ब्रह्मोपासनेऽस्य महत्त्वमञ्जसैव ज्ञातु शक्यते। एवमादित्ये, हृदये, अन्यत्रापि च ब्रह्मण उपासन समस्तेऽपि उपनिषद्वाङ्मये प्राप्यते, किन्तु विस्तरभयात् तत्सर्वं नात्र विव्रियते।

□

---

१ मूर्ति।

# गीतोक्तः कर्मयोगः

योग उपाय। कर्म एव योग कर्मयोग। यदा कर्म सत्त्वशुद्धिद्वारेण तत्त्वज्ञानस्योपाय सत् ब्रह्मप्राप्तेर्मोक्षप्राप्तेर्वा उपायो भवति तदैव तत् कर्मयोग उच्यते। श्रीमद्भागवते एकादशे स्कन्धे उद्धवमुपदिशन् भगवान् श्रीकृष्ण एव कथयति–

'योगास्त्रयो मया प्रोक्ता नृणा श्रेयोविधित्सया।

ज्ञान कर्म च भक्तिश्च नोपायोऽन्योऽस्ति कुत्रचित्॥'

इति। एव श्रेय प्राप्तेर्मोक्षप्राप्तेर्वा उपायास्त्रिविधास्तेषु कर्माप्येकम्। यतश्च कर्म सर्वेषा प्राणिना स्वभाव एव अतस्तत् सर्वथा सुलभमपि। उच्यते भगवता श्रीकृष्णेन गीतायाम्–

'न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत्।

कार्यते ह्यवश कर्म, सर्व प्रकृतिजैर्गुणै॥' (गीता ३। ५)

*अपि च–'शरीरयात्रापि च ते न प्रसिद्ध्येदकर्मण' (गीता ३। ८) इत्यादि।* यदा प्रकृतेर्गुणै सत्त्वरजस्तमोभिर्ह्यवश सन् सर्व एव जन कर्म कार्यते, यदा कोऽपि क्षणमपि कर्म अकुर्वन् न तिष्ठति, यदा च अकर्मणो मानवस्य शरीरयात्रापि कर्माभावे न सिद्ध्येत्, तदा कर्म करणीयमेवेति निश्चप्रच भगवदुक्त्या। किन्तु भगवत एवेयमप्युक्तिर्यद् 'यज्ञार्थात् कर्मणोऽन्यत्र लोकोऽय कर्मबन्धन'। (गीता ३। ९) यज्ञार्थं कृत कर्मैव मोक्षसाधन, तदन्यथा कृत तु बन्धनकारि भवतीत्यस्या पङ्क्तेस्तात्पर्यम्। पूर्वमप्युक्तमेव यत् ज्ञानयोग *इव, भक्तियोग इव च कर्मयोगोऽपि मोक्षकारी न बन्धनकारी भवति। एतस्मादिदमायाति* यद् यज्ञार्थं कृत कर्मेव कर्मयोग कथ्यते, स एव च मोक्षकारी, न सामान्य कर्म यत् सासारिकजनैर्फलाकाङ्क्षया समाद्रियते।

*अथ कोऽय यज्ञ किञ्च यज्ञार्थं कर्म इति जिज्ञासा साम्प्रत स्वभावत* एवोदेति। यज्ञार्थात्कर्मणोऽन्यत्रेत्याद्यनन्तरमेव अस्या समाधान स्वयम् भगवतैव सविस्तर कृतम्, तच्चैवम्–

'सहयज्ञा प्रजा सृष्ट्वा पुरोवाच प्रजापति ।
अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् ॥
देवान् भावयतानेन ते देवा भावयन्तु व ।
परस्पर भावयन्त श्रेय परमवाप्स्यथ ॥
इष्टान् भोगान् हि वो देवा दास्यन्ते यज्ञभाविता ।
तैर्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेन एव स ॥
यज्ञशिष्टाशिन सन्तो मुच्यन्ते सर्वकिल्बिषै ।
भुञ्जते ते त्वघ पापा ये पचन्त्यात्मकारणात् ॥'
(गीता ३ । १०-१३)

इति । 'एष यज्ञो सर्वासा प्रजानामिष्टकामधुक् हे मानवा । अनेन यज्ञेन यूय देवान् भावयत प्रसादयत ते च देवा यज्ञभाविता युष्मभ्यमिष्टान् भोगान् दास्यन्ति, एव च परस्पर भावयन्तो यूय सर्वे पर श्रेयोऽवाप्स्यथ' इति सृष्टेरादौ प्रजापतेरादेश उपदेशो वा मनुष्याणा कृते आसीदिति भगवद्वचनेन ज्ञायते। एव तर्हि यज्ञकर्म इष्टाना भोगाना साधक, न पुनरपवर्गस्य मोक्षस्य वा साधक, ब्रह्मप्राप्तिकारक वेति प्रतीयते । किन्त्वनन्तरमेवोक्तयो श्लोकयो[1] स्पष्टीकृतमिद यत् तत्तद्देवतोद्देशेन कृतो द्रव्यत्यागरूपो यज्ञो वेदोपदिष्टकर्मरूपत्वाद् वेदोद्भव । वेदश्चाक्षरब्रह्म-समुद्भव । एतस्मान्मूलकारणत्वात् सर्वगत ब्रह्म स्वकार्यभूते यज्ञे नित्य तथैव प्रतिष्ठित, यथा सर्वेषु मृत्तिकाकार्येषु घटशरावोदञ्चनादिषु मृत्तिका, यथा वा सर्वेषु सुवर्णकार्यजातेषु मुद्रिकाकुण्डलादिषु सुवर्ण प्रतिष्ठितम्। पुन कार्यस्य कारणात्मकत्वात् कारणानन्यत्वाद् 'यज्ञो वै विष्णुरि'त्यपि श्रुतिप्रूक्तम्। एव 'यज्ञार्थं कर्म' विष्ण्वर्थं भगवदर्थं वा कृत कर्म, तच्च निष्काममेव कर्तुं शक्यम्। अत सर्वफलेच्छाराहित्येन कृत कर्मैव कर्मयोग, अयमेव च बन्धनविमोक्षकारी स्वरूपोन्मीलको वा। फलेच्छया कृत कर्म तु बन्धनकारि, यतो हि कृतस्य कर्मण

[1] 'अन्नाद् भवन्ति भूतानि पर्जन्यादन्नसम्भव ।
यज्ञाद् भवति पर्जन्यो यज्ञ कर्मसमुद्भव ॥
कर्म ब्रह्मोद्भव विद्धि ब्रह्माक्षरसमुद्भवम् ।
तस्मात् सर्वगत ब्रह्म नित्य यज्ञे प्रतिष्ठितम् ॥' (गीता ३ । १४-१५)

सिद्ध्यसिद्ध्यो कर्ता सुखी दु खी च भवति, स्वफलभूतसुखदु खद्वारेण कर्म कर्तरि नरे लिप्यते, एव च शुभाशुभस्य तस्य कर्मण फलोपभोगाय स पुनर्जन्म लभते, तत्र च पुन कर्म करोति यस्य फलत्वेन पुनर्जन्म लभते। एवमस्मादनन्तजन्ममरणपरम्पराभ्यासान[1] कदापि मोक्षो घटते, यथोक्त पञ्चदश्या विद्यारण्येन—

'कुर्वते कर्म भोगाय कर्म कर्तुं च भुञ्जते।
नद्यां कीटा इवावर्तादावर्तान्तरमाशु ते
व्रजन्तो जन्मनो जन्म लभन्ते नैव निर्वृतिम्॥' (पञ्चदशी, १।३०)

इति। इदमप्यत्रावधेयम्—'देवा अपि विष्णोरशा महात्मन' इति कृत्वा यदि तेभ्योऽपि स्वार्थं परित्यज्य स्वेष्टभोगादिकवार्तां विहाय च परार्थभावेन सेवाभावेन वा द्रव्यत्यागरूपो यज्ञ सम्पाद्येत, तर्हि फले स्पृहाभावात् न किमपि शुभमशुभ वा फल स दास्यति। प्रत्युत चित्तशुद्धे. सत्त्वशुद्धेर्वा उद्भावक स भवेत्। शुद्धे एव चित्ते ज्ञानोपदेशग्रहणस्य योग्यता यज्ञकर्तरि उत्पद्यते। तमुपदेश गुरोर्गृहीत्वा, तज्जन्य परोक्ष ज्ञानम् च मननिदिध्यासनादिना अपरोक्ष साक्षात्कारात्मकमनुभूत्यात्मक वा सम्पाद्य कर्ता सकलबन्धनोत्पादकादज्ञानाद्विमुक्तो भवति ब्रह्मरूपश्च जायते। गीताया उपोद्-घातभाष्ये एतत् सर्वं स्पष्टीकृत भाष्यकारेण शङ्कराचार्येण, तच्चैवम्—'अभ्युदयार्थोऽपि य प्रवृत्तिलक्षणो धर्मो वर्णाश्रमाश्चोद्दिश्य विहित स देवादिस्थानप्राप्तिहेतुरपि सन् ईश्वरार्पणबुद्ध्याऽनुष्ठीयमान सत्त्वशुद्धये भवति फलाभिसन्धिवर्जित, शुद्धसत्त्वस्य च ज्ञाननिष्ठायोग्यताप्राप्तिद्वारेण ज्ञानोत्पत्तिहेतुत्वेन च नि श्रेयसहेतुत्वमपि प्रतिपद्यते।' 'यज्ञो दान तपश्चैव पावनानि मनीषिणाम्' इत्यादेर्गीताश्लोकस्य भाष्येऽपि शङ्कराचार्येणैवमेवोक्तम्— 'पावनानि विशुद्धिकारणानि, मनीषिणा फलानभिसन्धीनाम्' इति। एव भाष्यकारस्येद मन्तव्य यत् ते एव मनीषिणो ये फलानभिसन्धयोऽफलाकाङ्क्षिणो निष्कामकर्मकर्तार. कर्मयोगिन ।

गीतायामय कर्मयोगो योग-बुद्धियोग-समत्वयोगादिभिरपि नामभिर्बोध्यते। यथा 'योग. कर्मसु कौशलम्' इत्यत्र, 'समत्व योग उच्यते' इत्यत्र च योगशब्देन, 'दूरेण ह्यवर कर्म बुद्धियोगाद् धनञ्जय' इत्यत्र बुद्धियोगशब्देन च कर्मयोग एव गृह्यते। 'समत्व योग उच्यते' इति कथनेन समत्वयोगोऽपि नाम भवत्येव कर्मयोगस्य। अस्य कर्मयोगस्य स्वरूप

[1] अभ्यास अर्थात् पुन:पुन: या बार बार होना

भगवता 'कर्मण्येवाधिकारस्ते मा फलेषु कदाचन। मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि' (गीता २।४७) इत्यस्मिन् श्लोके उद्घाटितम्। एतदनुसारं फलार्थं कर्मानुष्ठानं दोषावहम्, यतो हि फलार्थं कृतेन कर्मणा लोकस्य बन्धनमुत्पद्यते, 'यज्ञार्थात् कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः' (गीता ३।९) इति अग्रे उक्तत्वात्। तस्मात् फलाकाङ्क्षारहित्येन कर्मानुष्ठेयम्, एवमेवानुष्ठितं च कर्म योगोऽर्थात् भगवत्प्राप्त्युपायो मोक्षप्राप्तेः साधनं वा भवति। अयमेव कर्मयोगोऽनन्तरे श्लोके भगवता समत्वमुच्यते—'योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा धनञ्जय। सिद्ध्यसिद्ध्योः समो भूत्वा, समत्वं योग उच्यते॥ (गीता २।४८) इति। कर्मणः सिद्ध्यसिद्ध्योः साफल्यवैफल्ययोः समत्वमेव सुखदुःखोभयराहित्यमेव योगः। अयं चाफलाकाङ्क्षिणः एव कृते सम्भवति। अनन्तरं[1] एव श्लोकेऽयं समत्वयोगो भगवता बुद्धियोग उच्यते'—दूरेण ह्यवरं कर्म बुद्धियोगाद् धनञ्जय। बुद्धौ शरणमन्विच्छ कृपणाः फलहेतवः॥' (गीता २।४९) इति। सिद्ध्यसिद्ध्योर्बुद्धेः सुख-दुःखाभ्यामविक्रियमाणत्वमेव, 'दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः' इति भगवद्वचनानुसारं बुद्धेरेकरूपत्वमेव, अर्थात् तस्याः समत्वमेव बुद्धियोगः। यतः अचञ्चला स्थिरा बुद्धिरेव भगवत्प्राप्तेर्योगः साधनं, तस्या एव भगवत्स्वरूपोन्मीलकत्वात्। अतएव बुद्धियोगात् फलहेतुकं कर्म दूरेण ह्यवरमर्थादत्यन्तमपकृष्टं नितरां निकृष्टमुक्तं भगवता। तस्मात् समत्वरूपा अर्थात् साफल्यवैफल्याभ्यामविक्रियमाणा बुद्धिरेव सर्वथा समाश्रयणीया श्रेयस्कामेनेत्यनन्तरे श्लोके भगवतोच्यते—'बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते। तस्माद् योगाय युज्यस्व योगः कर्मसु कौशलम्॥' इति। फलेच्छया कृतं कर्म बन्धनकारीत्युक्तं, फलाकाङ्क्षाराहित्येन कृतं तदेव सत्त्वशुद्धिरूपायाः ज्ञानयोग्यतायाः सम्पादनेन, तद्द्वारा च क्रमेण ज्ञानप्राप्तिद्वारेण मोक्षकारि। इयमेव च कर्मकर्तुः महत् कौशलं यत् स्वभावतो बन्धनकारि अपि कर्म मोक्षकारि क्रियतेऽनेन बुद्धियोगेन योगेन वा। एवं कर्मसु एवंविधं कौशलमेव योग उक्तोऽत्र भगवता। इदमेव गीतोक्तस्य कर्मयोगस्य सुस्पष्टं स्वरूपम्।

अस्य गीतोक्तकर्मयोगस्य स्मारकं श्रीमद्भगवद्गीतायाः पर्याप्तपूर्वभाविन्याः ईशावास्योपनिषदः 'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः। एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे॥' (ईश. २) इति वचनम्। अत्र प्रतिपादितं यदिह जीवनेऽग्निहोत्रादीनि

१ अनन्तरे अर्थात् ठीक बाद वाले।

शास्त्रविहितान्येव कर्माणि परार्थं कुर्वन् शतं समाः अर्थात् पूर्णं मानवजीवनं जीवितुमिच्छेत् नरः। 'इतः'— परार्थकर्मानुष्ठानात्, अन्यथा— प्रकारान्तरं न वर्तते येन त्वयि नरे कर्म न लिप्यते, येन त्वं कर्मफलविमुक्तो भवेरिति तात्पर्यं श्रुतिवचनस्य। एवं कर्मयोग एवास्यापि प्रतिपाद्यविषयः।

## गीतोक्तो ज्ञानयोगः

पद्मनाभस्य भगवत श्रीकृष्णस्य श्रीमुखान्निसृताया श्रीमद्भगवद्गीताया सर्वाधिकचर्चितौ विषयौ कर्मयोगज्ञानयोगौ। अष्टादशाध्यायिन्या गीताया प्रथमषट्के प्राधान्येन कर्मयोग, अन्तिमषट्के च ज्ञानयोगश्चर्चित। भक्तिरनयोर्द्वयोरन्तरेऽपि समाविष्टा, अथ चाम्या पृथक् शुद्धा भक्तिरितिनाम्ना अमिश्रितरूपेणापि वर्तते। मध्यषट्केऽस्य भक्तियोगस्य चर्चा। एव कर्मभक्तिज्ञानयोगाख्यास्त्रयोऽपि ब्रह्मप्राप्तेर्योगा उपाया (साधनानि) वाऽत्र सविस्तर चर्चिता। इय चर्चा न केवलमर्जुनस्यैव कृतेऽपितु तत्सदृशानामन्येषा च कर्तव्याकर्तव्येषु मूढानामनेकेषा मानवाना कृते। कर्मयोगो गीताया क्वचिद् योगनाम्ना यथा 'एषा तेऽभिहिता साङ्ख्ये बुद्धिर्योगे त्विमा शृणु। बुद्ध्या युक्तो यया पार्थ । कर्मबन्ध प्रहास्यसि॥' (गीता २। ३९) क्वचिन् समत्वनाम्ना, यथा 'योगस्थ कुरु कर्माणि सङ्ग त्यक्त्वा धनञ्जय। सिद्ध्यसिद्ध्यो समो भूत्वा समत्व योग उच्यते॥ (गीता २। ४८), क्वचिद् बुद्धियोगनाम्ना, यथा 'दूरेण ह्यवर कर्म बुद्धियोगाद् धनञ्जय। बुद्धौ शरणमन्विच्छ कृपणा फलहेतव॥' (गीता २। ४९), क्वचित् मदर्थकर्मनाम्ना, यथा 'मदर्थमपि कर्माणि कुर्वन् सिद्धिमवाप्स्यसि', क्वचिच्च मत्कर्मनाम्ना, यथा 'मत्कर्मकृन्मत्परमो मद्भक्त (११।५५) इत्यादिप्रकारेणानेकश उल्लिखितो व्याख्यातश्च। भक्तियोगोऽपि 'मय्यासक्तमना पाथ योग युञ्जन् मदाश्रय' (गीता ७।१), अभ्यासयोगयुक्तेन चेतसा नान्यगामिना' (गीता ७।८), 'अनन्यचेता सतत यो मा स्मरति नित्यश' (गीता ७।१४) 'सतत कीर्तयन्तो मा यतन्तश्च दृढव्रता। नमस्यन्तश्च मा भक्त्या नित्ययुक्ता उपासते॥' (९।१४) 'पत्र पुष्प फल तोय यो मे भक्त्या प्रयच्छति' (९।२६) 'मन्मना भव मद्भक्तो मद्याजी मा नमस्कुरु। मामेवैष्यसि युक्त्वैवमात्मान मत्परायण॥' (९।३४), 'मच्चित्ता मद्गतप्राणा बोधयन्त परस्परम्। कथयन्तश्च मा नित्य तुष्यन्ति च रमन्ति च॥' (१०।९), 'नम पुरस्तादथ पृष्ठतस्ते नमोऽस्तु ते सर्वत एव सर्व'। (११। ४०) 'भक्त्या त्वनन्यया शक्य अहमेवविधोऽर्जुन। ज्ञातु द्रष्टु च तत्त्वेन प्रवेष्टु च परन्तप॥' (११।५४) 'मय्येव मन आधत्स्व मयि बुद्धि निवेशय' (१२।८) इत्यादिप्रकारेणानेकशो वर्णित। ज्ञानयोग कर्मभक्तियोगाभ्या सह

तत्पर्यवसानरूपेण तत्र तत्र कथितोऽपि प्राधान्येन स्वतन्त्रतया वाऽनेकशो वर्णितो व्याख्यातश्च।

तृतीयाध्यायस्यारम्भ एव 'लोकेऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता मयानघ। ज्ञानयोगेन साङ्ख्याना कर्मयोगेन योगिनाम्॥' (गीता ३। ३) इति यदुक्त भगवता, तत् पूर्वं द्वितीयाध्याये उक्तौ ज्ञानकर्मयोगौ परामृशति। ज्ञानयोग प्राधान्यत द्वितीयाध्यायस्य द्वादशश्लोकादारभ्य पञ्चविंशश्लोकपर्यन्त विवृतो वर्णितो वा कर्मयोगश्च चत्वारिंशश्लोकादारभ्य त्रिपञ्चाशश्लोकपर्यन्त निरुपित। इमावेव लक्ष्यीकृतौ भगवता एकोनचत्वारिंशे श्लोके–

'एषा तेऽभिहिता साङ्ख्ये बुद्धिर्योगे त्विमा श्रृणु।
बुद्ध्या युक्तो यया पार्थ कर्मबन्ध प्रहास्यसि॥' (२। ३९)

अर्थात् साख्ये साङ्ख्ययोगे ज्ञानयोगे वा एषा बुद्धिस्तेऽभिहिता योगे कर्मयोगे तु इमा बुद्धिमग्रे वक्ष्यमाणा श्रृणु, यया बुद्ध्या युक्तस्त्व शुभाशुभकर्मजात फलभोगबन्ध परित्यक्तु समर्थो भविष्यसि।

द्वितीयादावुक्तस्य ज्ञानयोगस्य स्वरूप भगवद्वचनादीदृश तिष्ठति–

'न त्वेवाह जातु नास न त्व नेमे जनाधिपा।
न चैव न भविष्याम सर्वे वयमत परम्॥
अविनाशि तु तद् विद्धि येन सर्वमिद ततम्।
विनाशमव्ययस्यास्य न कश्चित् कर्तुमर्हति॥
य एन वेति हन्तार यश्चैन मन्यते हतम्।
उभौ तौ न विजानीतो नाय हन्ति न हन्यते॥
न जायते म्रियते वा कदाचिन्नाय भूत्वा भविता वा न भूय।
अजो नित्य शाश्वतोऽय पुराणो न हन्यते हन्यमाने शरीरे॥
वासासि जीर्णानि यथा विहाय नवानि गृह्णाति नरोऽपराणि।
तथा शरीराणि विहाय जीर्णान्यन्यानि सयाति नवानि देही॥

एषा वचनाना सार सक्षेपेणैतावदेव यत् देही पृथक्, देहोऽनित्यो जन्म-मृत्युभाग्, देही पुनर्नित्यो जन्मजराव्याधिमृत्युरहित । न चाय देही देहधर्मैरिन्द्रियादिधर्मैर्वा कदमपि कदापि सम्पृक्तो भवति। अय न केवल नित्योऽपितु सर्वव्यापक, न देहाद्याकारै परिच्छिद्यतेऽपितु आकाशवत् सर्वगत । एव देशकालाद्यनवच्छिन्नचिद्रूपोऽयमात्मा देहेन सह देहीवाभाति, देहवानिव लक्ष्यते। अतो देहे शस्त्रादिभिर्हन्यमाने आत्मानमेव हन्यमान मन्यते। किन्तु नाय हन्यते, देहे छिद्यमानेऽपि नाय छिद्यते। वस्तुतो अमरत्वान्नाय म्रियते, न वा जायते। य एव जानाति स स्वमरणभयात् अन्यमारणपापाच्च मुच्यते। तस्माद् मरणमारणभयाच्छून्य 'युध्यस्व भारत' इति भगवताऽर्जुन सम्बोधित ।

सूक्ष्मेक्षिकया विचारे कृते प्रतिभातीद यत् द्वितीयाध्यायोक्तोऽय ज्ञानयोग साङ्ख्यानां पुरुषप्रकृतिविवेकख्याते सत्त्वपुरुषान्यताख्यातेर्वा न कथमपि भिद्यते। प्रकृतिपुरुषौ द्वावप्यनादी नित्यौ च। किन्तु पुरुषश्चेतन प्रकृतिरचेतना, पुरुषो निर्गुणोऽतएव च निर्विकारोऽपरिणामी वा, प्रकृतिश्च त्रिगुणात्मिका अतएव च परिणामिनी। एव द्वयोर्भेदो विवेक पार्थक्य वा निरन्तरम्। परिणामिन्या प्रकृतेरेव सम्भवन्ति सर्वे विकारा। तस्मात् सर्वमेव भूतभौतिकजातमपि जडमचेतन वा विकारित्वादनित्य च। देहेन्द्रियमनोऽहङ्कारबुद्धयोऽपि प्रकृते कार्यत्वात् अनित्या, निर्विकारात् नित्यात् पुरुषादात्मनो वा सर्वथा विविक्ता भिन्नस्वरूपा वा। गीताया ज्ञानप्रधानस्य तृतीयकाण्डस्य आदिम एवाध्याये त्रयोदशात्मके एतत् सर्वमेतावत्स्पष्टरूपेण निरूपित यत् साङ्ख्ययोगाख्यस्य गीतोक्तज्ञानयोगस्य साङ्ख्यदर्शनोक्तात्मज्ञानत्वे न मनागपि लेशोऽपि कस्याप्युद्भवति। एव तत्रोक्तम्—

'प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि।
विकारांश्च गुणांश्चैव विद्धि प्रकृतिसम्भवान्॥
कार्यकरणकर्तृत्वे हेतु प्रकृतिरुच्यते।
पुरुष सुखदुःखानां भोक्तृत्वे हेतुरुच्यते॥
पुरुष प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान् गुणान्।
कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु॥'
—गीता १३/ १९-२१

इति। गीताया एषु श्लोकेषु साङ्ख्यदर्शनस्यैवाध्यात्मज्ञान प्रकृतिपुरुषविवेकपर सङ्क्षेपेण प्रतिपादितम्। गीतोक्तज्ञानयोगस्य प्रकृतिपुरुषविवेकज्ञानात्मकमतत् प्रथमसोपान प्राचीनसाख्यदर्शनादेव गृहीत स्याच्चद् भगवता तर्हयस्य तत एव साङ्ख्ययोग इति नाम भगवता कृत भवेदिति सम्भावना।

किन्तु गीताया भगवतोक्तमिद ज्ञान न साङ्ख्यशास्त्रीयाध्यात्मज्ञानमात्रमिति निश्चितम्। इद तथ्य मनसि नित्य धृत स्यात् न च कदापि विस्मरणायम्। प्रश्नोऽयमिदानीमुत्तिष्ठति यद् भगवतोपदिष्टमेतज् ज्ञान साङ्ख्यदर्शनोक्ताज् ज्ञानात् कियताशेन केन रूपेण वा विशिष्यते। अस्य समाधान विस्तरेणोपलभ्यत गीतायास्त्रयोदश पञ्चदशाष्टादशाध्यायेषु। त्रयोदशाध्यायस्यैकादशे श्लाक 'अध्यात्मज्ञाननित्यत्व तत्त्वज्ञानार्थदर्शनम्। एतज्ज्ञानमिति प्रोक्तम् इत्याद्युक्तम्। तत्र अध्यात्मज्ञान आत्माऽनात्मनोर्विवेकज्ञान तस्य नित्यत्व सदैव उपस्थितत्वम्। तत्वज्ञान स्यार्थो विषयस्तत्त्वज्ञानार्थ ब्रह्म पुरुषोत्तमो वा तस्य दर्शन साक्षात्कारस्तत्त्वज्ञानार्थदर्शनम्। एतस्मात्स्पष्टमेतत् तथ्य यद् गीतोक्तज्ञानस्यैका धू साख्यदर्शनोक्त आत्मा पुरुषो वा। अन्या च धूर्वेदान्तोक्त ब्रह्म। नेद ब्रह्म साङ्ख्यदर्शने कुत्रापि प्रोक्तम्। ज्ञानस्यास्य विषय विवृण्वता भगवता अर्जुन प्रत्यवमुक्तम्—

'ज्ञेय यत् तत् प्रवक्ष्यामि यज्ज्ञात्वाऽमृतमश्नुते।
अनादिमत् पर ब्रह्म न तत् सन्नासदुच्यते॥
सर्वत पाणिपाद तत् सर्वतोऽक्षिशिरोमुखम्।
सर्वत श्रुतिमल्लोके सर्वमावृत्य तिष्ठति॥
सर्वेन्द्रियगुणाभास सर्वेन्द्रियविवर्जितम्।
असक्त सर्वभृच्चेव निर्गुण गुणभोक्तृ च॥
बहिरन्तश्च भूतानामचर चरमेव च।
सूक्ष्मत्वात् तदविज्ञेय दूरस्थ चान्तिके च तत्॥
अविभक्त च भूतेषु विभक्तमिव च स्थितम्।
भूतभर्तृ च तज्ज्ञेय ग्रसिष्णु प्रभविष्णु च॥
ज्योतिषामपि तज्ज्योतिस्तमस परमुच्यते।
ज्ञान ज्ञेय ज्ञानगम्य हृदि सर्वस्य विष्ठितम्॥'

—गीता १३।१२ १६

एषु श्लोकेषु विवृतमुन्मीलितं च ब्रह्म तदेव यद् वेदोपनिषत्सु वेदान्तशास्त्रीयग्रन्थेषु च अनेकशो निरूपितम्। ब्रह्मैतत् स्वरूपतो निर्गुणमपि सृष्ट्याद्यर्थं सगुणम्, सूक्ष्मत्वाद् अविज्ञेयं, दूरस्थं चापि अन्तरङ्गत्वेन समीपस्थं सर्वेषु प्राणिषु विभक्तमिव स्थितमपि वस्तुतोऽविभक्तम्। साङ्ख्यस्य पुरुषस्तु नैकः अपितु असङ्ख्य एव।

वेदान्तसूत्रे 'जन्माद्यस्य यतः' इति यद् ब्रह्मलक्षणमुक्तं तदेवात्राप्यनुसृतम्। स एव परमेश्वरः पुरुषोत्तमो वा सृष्टि-काले जगत्सृष्ट्यर्थं रजोगुणोपहितः प्रभविष्णुर्ब्रह्मा भवति, स्थितिकाले तस्य पालनार्थं सत्त्वगुणोपहितो भूत-भर्ता विष्णुर्भवति, संहारकाले च विनाशार्थं तमोगुणोपहितो ग्रसिष्णु रुद्रो भवति। एवं स एकोऽपि त्रिधा भवत्यनेकधा भवति। अयमेव परमात्मा अव्यभिचारिण्या भक्त्या तत्त्वज्ञानस्य विषयः सन् ज्ञानगम्यो ज्ञेयश्चाच्यते। नित्यबोधरूपत्वात् स एव ज्ञानमप्युच्यते। अस्यैव तत्त्वज्ञाने-नामृतत्वप्राप्तिर्जन्ममरणादिबन्धनान्मोक्षप्राप्तिर्वा भवतीति तथ्यं '*यज्ज्ञात्वाऽमृतमश्नुते*' इत्युक्त्वा प्रकटितं गीताकारेण। सम्पूर्णः पञ्चदशाध्यायोऽस्यैव पुरुषोत्तमस्य परमात्मनः स्वरूपनिरूपणपरत्वात् पुरुषोत्तमयोग उक्तः। एवं च शान्तिलाभार्थमस्यैवेश्वरस्य शरणप्राप्तिरुपदिष्टा गीतोपसंहारे भगवता श्रीकृष्णेन—

'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति।
भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया॥
तमेव शरणं गच्छ सर्वभावेन भारत।
तत्प्रसादात् परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम्॥
मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु।
मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे॥
सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज।
*अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः॥*'
—गीता १८।६१, ६२, ६५, ६६)

एवमत्र गीतायां भगवदुपदिष्टो ज्ञानयोगः सङ्क्षेपेण स्वरूपतः प्रकटीकृतः।

□

# मनुष्यजीवनस्य सार्थकता

इह जगति मनुष्ययोनौ, तत्राप्युत्तमकुले जन्म, सतां सङ्गश्च सर्वथा दुर्लभाविति वदता केनापि कविना यदुक्तम्–

'संसारसागरमिमं भ्रमता नितान्तं
'जीवेन मानवभवः समवापि दैवात्।
तत्रापि यद् भुवनमान्यकुले प्रसूति
सत्सङ्गतिश्च तदिहान्धकवर्तकीयम्॥'

इति, तत् सर्वथा सत्यम्। विगतजन्मनामसंख्यपुण्यैरेव मानजन्म प्राप्यते, तत्रापि विद्यावृत्तादिविभूषिते कुले जन्म कस्यचिद् विरलस्यैव महात्मनो जायते। उक्तं हि भगवता गीतायाम्–

'प्राप्य पुण्यकृतां लोकानुषित्वा शाश्वतीः समाः।
शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते॥
अथवा योगिनामेव कुले भवति धीमताम्।
एतद्धि दुर्लभतरं लोके जन्म यदीदृशम्॥' (गीता ६,४१-२)

उच्चकुले तपस्विनामेव जन्म जायते, 'आकरे पद्मरागाणां जन्म काचमणेः कुतः'? सतां महात्मनां सङ्गश्चापि प्रभूततपस एव फलम्। तस्मादेव एतत्त्रयस्य प्राप्तिरन्धकवर्तकीयन्यायेनैव भवतीति दिव्यदृष्टिना कविना उक्तम्। कथनस्येदमेव तात्पर्यं यद्दुर्लभं मानवजन्म सर्वथा सार्थकं सम्पादनीयं, नेदममूल्यं जीवनं व्यर्थमेव नेयम्। उक्तं हि सूक्तिप्रियेण भारविणा–

'स पुमानर्थवज्जन्मा यस्य नाम्नि पुरः स्थिते।
नान्यामङ्गुलिमभ्येति सङ्ख्यायामुद्यताङ्गुलिः॥
गुरून् कुर्वन्ति ते वंश्यानन्वर्था तैर्वसुन्धरा।
येषां यशांसि शुभ्राणि ह्रेपयन्तीन्दुमण्डलम्॥'

इति। तस्मात् सर्वगुणसम्पन्नमात्मानं कर्तुं प्रयत्नेन मानवो येन स्वधवलयशसा स्वं स्वीयं कुलं स्ववंश्यांश्च समुन्नयेत्। गुणा एव पूजास्थानं गुणिष्विति सदैव स्मरणीयम्। के ते गुणाः कर्माणि च ये सर्वथाऽभिलषणीया यैश्च मनुष्यस्तद्वंशस्तद्देशश्च प्रख्यातयशसो भवन्ति ? एषा मीमांसा अस्मत्पूर्वजैर्मनीषिभिः कविभिराचार्यैश्चानेकशः कृता वर्तते ज्ञानस्याक्षय्यभाण्डारे संस्कृतवाङ्मये। अतस्तत एव केचित् प्रमुखा गुणा कर्माणि तद्धियन्ते यैर्मनुष्यो मनुष्यो भवति, यैस्तस्य मानवयोनौ जन्म सार्थकं भवति।

सर्वप्रथमं तु भगवतो मनोस्तस्मिन्नुपदेशोऽवधानं देयं यस्तेन सामान्यतः समस्तकर्मविषये दत्तः स्वप्रज्ञानां कृते। उक्तं तेन—

'यत् कर्म कुर्वतोऽस्य स्यात् परितोषोऽन्तरात्मनः।
तत् प्रयत्नेन कुर्वीत विपरीतं तु वर्जयेत्॥'

इति। एवंविधमेव कर्म एतादृश एवाचारो मनुना धर्म इत्युक्तः। धर्मस्य पञ्चप्रमाणेषु स्वमनसः परितोषोऽर्थात् स्वात्मनस्तुष्टिरपि एकमिति भगवता मनुनाऽन्यत्रोक्तम्—
वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम्। आचारश्चैव साधूनामात्मनस्तुष्टिरेव च॥'
इति। नहि यत् कर्माऽऽचरतो वा मनः उद्विजते तत् कथमपि साधु। जीवननिर्वाहहेतो-र्धनादिकस्य महती अपेक्षा सर्वेषामतस्तस्मिन्नासक्तिर्मोहो वा सर्वसामान्यो भवति। इयमासक्तिरस्मा मोह एवौचित्यानौचित्यविवेकं मनुष्यस्य हरति येन स परहिंसादिकं परधनापहरणादिकं च पापमधर्मं वाऽऽचरति। अतएवोक्तं भारविणा किराते—

'अभिद्रोहेण भूतानामर्जयन् गत्वरीः श्रियः।
उदन्वानिव सिन्धूनामापदामेति पात्रताम्॥'

इति। चाणक्येनापीदृश्येव नीतिर्निर्धारिता स्वग्रन्थेषु—

'अत्यक्लेशेन ये ह्यर्था धर्मस्यातिक्रमेण च।
शत्रूणां प्रणिपातेन ते ह्यर्था मा भवन्तु मे॥'

इति। अर्थादिकविषये यत् स्वाभाविकमाकर्षणं मानवमनसो यश्च मोहस्तस्य, स यदि प्रयत्नपूर्वकं जीयेत कथञ्चित्तर्हि पापस्याधर्मस्य वा विरुद्धं क्रियमाणः सङ्घर्षः प्रायेण जित एवेति मन्येत। एतत् सर्वं धनसम्पदादिकं तु भोगसङ्ग्रहार्थमेव, ते च भोगाः सांसारिकाः सर्वे एव क्षणभङ्गुराः। उक्तं भारविणा किरातार्जुनीये काव्ये—

'श्वस्त्वया सुखसंवित्तिः स्मरणीयाऽधुनातनी।
इति स्वप्नोपमान्मत्वा कामान् मा गास्तदङ्गताम्॥'

इति। एवं विचारणापरः पुरुषः क्रमेण विवेके उदीयमाने धनसम्पदादिषु तैः प्राप्तव्येषु विषयभोगादिषु चासङ्गं दूरीकर्तुं समर्थो भवेत्। धर्माचरणस्य कृते इदं सर्वतोऽधिकं महत्त्वपूर्णम्। अयमेव सतां मार्गः। इममनुसृत्य यत्किञ्चिदपि लभ्येत तदेव बहु मन्येत। यथोक्तम् 'अनुसृत्य सतां वर्त्म, यत् स्वल्पमपि तद् बहु' इति। तच्च स्वस्योपयोगे आनयेत्, परेभ्योऽप्यर्थिभ्यो यथाशक्ति दद्यात्, यतो हि श्रीः कदर्यस्य निष्फला। दानेनैव धनस्य शोभा, तेनैव च मनुष्यः स्वीयं सहजं लोभाख्यम् नरकस्य द्वारं जयेत्।

मानवजीवनस्य सार्थक्यं विदधदपरोऽपि एको गुणो यो दयाऽऽनृशंस्यादिभिर्नामभिर्बोध्यते। 'आनृशंस्यं परो धर्मः' इति महर्षिणाऽऽदिकविना वाल्मीकिना प्रोक्तम्। 'आत्मौपम्येन सर्वत्र दयां कुर्वन्ति साधवः' इत्यनेनोक्तम्। सर्वे एव जीवात्मानः एकस्यैव परमात्मनोऽशा रूपाणि वेति विचारे मनसि उदिते परत्वभावेनानुदिनं क्रियमाणोऽत्याचारो नृशंसता कठोरतादि कथमपि कर्तुं न शक्यते। यस्य जनस्य मनसि दयाभावो नैव वर्तते, यः परस्योत्पीडनकृतां व्यथां नैव जानाति, स पाषाणहृदयः केन लक्षणेन मानवो वक्तुं शक्यते। 'आत्मनः प्रतिकूलानि परेषां न समाचरेत्' इति स्मार्तं वचः धर्मसर्वस्वम् प्रकटयति। यदि ताडनेन स्वस्य पीडा जायते तर्हि तेनान्येष्वपि सैव भवेदिति विचार्य परपीडनाद् विरमेत्। पुराणकृतो भगवतो व्यासस्य सर्वपुराणप्रोक्तमुपदेशं साररूपेण सङ्गृह्णता केनाप्युक्तम्—

'अष्टादशपुराणेषु व्यासस्य वचनद्वयम्।
परोपकारः पुण्याय पापाय परपीडनम्॥'

इति। परस्योपकारात् नाधिकतरं पुण्यं, परपीडनाच्च नाधिकतरं पापं किञ्चिद्वर्तते इति तात्पर्यम्। तस्मात् परपीडनं परित्यज्य परोपकारमेव सर्वथा विदधीत, क्रूरताविशसना[1]द्याचरणं हित्वा सर्वेषु दयां कुर्यात्। तेषां हितमेव मनसा वाचा कर्मणा चाचरेत्। जीवनं सार्थकं कर्तुमेतस्मादधिकतरं गुरुतरं वा नान्यत् किमपि कर्म प्रभवति। अनेन दयेत्यपरनामधेयेनानृशंस्येन क्रोधाख्यं स्वीयं महारिपुं जेतुं प्रयतेत मानवः। यतो

१ विशसनं हिंसा।

हि लोभ इवाय क्रोधोऽपि नरकस्य द्वारत्वात् महारिपुर्मनुष्यस्य। उक्त हि भगवता गीताया यत्—

'त्रिविध नरकस्येद द्वार नाशनमात्मन।
काम क्रोधस्तथा लोभस्तस्मादेतत् त्रय त्यजेत्॥' (गीता १६ २१)

तत्र लोभस्य मनुष्येषु प्राधान्यात् सर्वप्रथम तस्यैव प्रतीकार उक्तोऽस्मिन् निबन्धे। क्रोधस्यासुरेषु प्रायस्त्वात् मनुष्येष्वपि च प्रकाम विद्यमानत्वात् तदनन्तर प्रतीकार उक्त। इदानी देवेषु प्रायस्त्वात् मनुष्येषु असुरेष्वपि च सुतरा विद्यमानत्वात् महारिपोर्नरकद्वारस्य कामस्यापि प्रतीकारो वक्तव्य। त विना मानवजीवन न सर्वथा सार्थक भवेत्।

वस्तुतस्तु क्रोधस्यापि मूल काम एव, यथोक्त गीताया 'कामात् क्रोधोऽभिजायते' इति। तस्मात् क्रोधस्य परिहारार्थ कामस्यापि परिहारोऽपरिहार्य। 'अथ केन प्रयुक्तोऽय पाप चरति पूरुष' इत्येव पृष्टोऽर्जुनेन भगवान् श्रीकृष्ण एवमाह—

'काम एष क्रोध एष रजोगुण-समुद्भव।
महाशनो महापाप्मा विद्ध्येनमिह वैरिणम्॥
इन्द्रियाणि मनो बुद्धिरस्याधिष्ठानमुच्यते।
एतैर्विमोहयत्येष ज्ञानमावृत्य देहिनम्॥
तस्मात् त्वमिन्द्रियाण्यादौ नियम्य भरतर्षभ।
पाप्मान प्रजहि ह्येन ज्ञानविज्ञाननाशनम्॥'
(गीता ३ ३७, ४०,४१)

इति। एव भगवान् करुणावरुणालयोऽतिकृपया रजोगुणसमुद्भूत काम क्रोधसहित पापस्य कारणमकथयत्। अपि च, एतस्य परिहारोपायमपि कथितवान्। यतो हि इन्द्रियमनोबुद्धयोऽस्याधिष्ठान, यत्र स्थितोऽय काम सपरिवारस्तैर्ज्ञानमावृत्य जीव विमोहयति, अत सर्वप्रथममिन्द्रियाण्येव नियम्याय पाप्मा हन्तव्य। एव इन्द्रियाणा निग्रह एव सर्वप्रथम सोपान कामजये। तदनन्तरमिन्द्रियनिग्रहपूर्वक मनोबुद्ध्योर्निग्रह कार्य। एव चित्तशमनपूर्वक कामो जेतव्य इति भगवदुक्तेस्तात्पर्यम्। अहो कीदृशी कृपालुता भगवतो यत्परवश स स्वभक्ताना कृते महापाप्मन कामस्य वासस्थान,

मोहोत्पादनकरणानि, तन्निग्रहपूर्वकं तस्य जयश्चेत्येतत्सर्वमेकपद एवोक्तम्। एत प्रबलतम नरकद्वारमविजित्य मानव आत्मान समुन्नेतु जीवनस्य च सार्थक्य सम्पादयितु न कथमपि सफलो भवेत्। सृष्ट्यादौ देवासुरमनुष्याणा कृते प्रजापतिना ब्रह्मणा कृत 'द द द' इत्युपदेश उपनिषत्सु प्रसिद्ध एव। द-त्रयेण त्रयाणा कृते क्रमेण दम-दया-दानानामेवोपदेशो भगवता प्रजापतिना दत्त.। दमेन काम, दयया क्रौर्यं दानेन च लोभ जयेत्। अनेनैव जीवनस्य सार्थक्याय एतेषा महत्त्व सुस्पष्ट भवति।

पूर्वेभ्योऽतिरिक्त केचनान्येऽपि गुणा यथा सत्यसन्धत्व कृतज्ञत्व, मनोवचनकर्मैक्य, परनिन्दाराहित्य, भावसशुद्धिश्च, यैर्विना मानवस्य जीवन न सशोभते। सत्यसन्धत्व भगवतो रामस्य चरित्रस्य महती विशेषता कथिताऽदिकविना वाल्मीकिना—

"न हि प्रतिज्ञा कुर्वन्ति वितथा सत्यवादिन.।

लक्षण हि महत्त्वस्य प्रतिज्ञा-परिपालनम्॥"

इति। भगवतो रामस्य प्रतिज्ञा-परिपालन, तस्य सत्यसन्धत्व कस्याविदित लोकेऽस्मिन्? एवमेव भीष्मपितामहस्यापि सत्या सन्धा लोकविदिता। भ्रात्रोर्मृत्यौ जाते मात्रा सत्यवत्या आत्मान राज्येऽभिषेचयितु निवेदितो यदाह—

"विक्रम वृत्रहा जह्याद्, धर्मं जह्याच्च धर्मराट्।

न त्वह सत्यमुत्स्रष्टु व्यवस्येय कथञ्चन॥"

इति, तस्य परिपालनमाजीवन कृतवान् येन भीष्मप्रतिज्ञत्वाद् लोके 'भीष्म' इति स्पृहणीया किन्तु साधारणजनदुर्लभामाख्या स प्राप। य स्ववचन नैव परिपालयति रक्षति वा, त को नाम जनो विश्वसेत्? अविश्वासस्य पात्र सन् स कस्यादरस्य सम्मानस्य वा पात्र भवेत्? अनादृतस्य सम्मानविरहितस्य वा जीवन निरर्थकमेव। उक्त हि अर्थगौरवमय्या वाण्या कुशलेन वक्त्रा भारविणा स्वकीये किरातार्जुनीयाख्ये महाकाव्ये— 'जन्मिनो मानहीनस्य तृणस्य च समा गति., इति, 'पुरुषस्तावदेवासौ यावन्मानान्न हीयते' इति च।

कृतज्ञतापि मानवजीवनस्य सर्वोत्तमगुणेष्वन्यतमो गुणो यतस्तस्मादेवास्य माहात्म्य प्रख्यापयन्ती कुन्ती युधिष्ठिर प्रति एवमाह—

"एतावानेव पुरुष. कृतं यस्मिन् न नश्यति।

यावच्च कुर्यादन्योऽस्य, कुर्याद् बहुगुण तत.॥"

इति। यो ऽकृतज्ञ, य कृतमुपकार विस्मरति, य कृतघ्न, स मनुष्येष्वधमाधम । एवविधस्य पामरस्य [१]पृथग्जनस्योन्नति कदापि कथमपि नैव भवितु शक्नोति। भवति चेत् कथमपि न सा स्थायिनी। कृतघ्नताया महत्तर पाप नैव कल्पयितु शक्यते। एव सत्यपि अल्पीयास एव कृतज्ञा दृश्यन्ते, विशेषतोऽस्मिन्नधुनातने युगे। महाकविना भासेनापि स्वकीये स्वप्नवासवदत्तनाम्नि नाटके ईदृश एव विचार प्रकटीकृत 'कर्तार सुलभा लोके विज्ञातारस्तु दुर्लभा' इति। गुणाना कर्तारो हितसम्पादका वा लोके सुलभा किन्तु गुणाना विज्ञातारोऽर्थात् कृतज्ञा दुर्लभा एव।

परेषा निन्दापि कृतघ्नतेव महान् दुर्गुणो दोषो वा। परनिन्दकस्य न कुत्रापि सम्मान आदरो वा भवति। सर्वथा घृणापात्र सर्वेषा चानादरपात्र स भवति।

'यदीच्छसि वशीकर्तु जगदेकेन कर्मणा।

परापवादसस्येभ्यश्चरन्ती गा निवारय॥'

इति सिद्धान्तित केनापि मतिमता नीतिज्ञेन। इद सर्वथा सत्यमेव। यदि कस्यापि गौरन्यस्य सस्य चरति तर्हि तेन सह तस्य कलहो वैर वा जायते। एवमेव यस्य गीर्वाणी परस्यापवाद निन्दा वा आचरति चेत्, तर्हि तेन सह कृतनिन्दस्य पुरुषस्य कलह एव जायेत, न पुन प्रीति। प्रीतिस्तु प्रशसावचनै मधुरवचनैश्च जायते। तैरेव जगद् वशीकर्तु शक्यते न पुनर्निन्दावचनै ।

मनोवचनकर्मैक्य महात्मत्वस्य, तदनैक्य च दौरात्म्यस्य निश्चित लक्षणम्। यथोक्तम्—

'मनस्येक वचस्येक कर्मण्येक महात्मनाम्।

मनस्यन्यद् वचस्यन्यत् कर्मण्यन्यद् दुरात्मनाम्॥'

इति। यस्य मनस्यन्यद् वर्तते, वचसा किञ्चिदन्यत् प्रकाशयति, कर्मणा च तस्मादप्यन्यत्, न स साधु सज्जनो वा। स तु दुर्जन दुरात्मा खलश्च। यस्य पुनर्मनोवचनकर्मस्वैक्य, स साधुर्महात्मा सत्यवादी च। एतादृश पुरुष सर्वस्य जगतो जगदीशस्य च प्रियो भवति, यतो हि स्वकर्मभिरेव मानसिकवाचिककायिकै तस्य

१ नीचस्य

भावसशुद्धिर्ज्ञायते। इयमेव च भगवतः सर्वाधिक प्रिय वस्तु। अनया विना यज्ञजपतपासि सर्वाण्यव निरर्थकानि। यथोक्तम्–

'वेदास्त्यागश्च यज्ञाश्च नियमाश्च तपांसि च।
न विप्रदुष्टभावस्य सिद्धि गच्छन्ति कर्हिचित्॥'

इति। एतद्विषये 'भावसशुद्धिरित्येतत् तपो मानसमुच्यते' इति स्वयमेवाह भगवान् श्रीकृष्ण गीतायाम्। अस्या भावसशुद्धेरधिकतर न किमपि वर्तते लौकिका लौकिकोभयविधसुखस्य साधनेषु। एतद्विषये श्रीमद्भागवतस्यापि वचन प्रमाणम्–

'यदा न कुरुते भाव सर्वभूतेष्वमङ्गलम्।
समदृष्टेस्तदा पुंस सर्वा सुखमया दिश।'

इति। [1]'कृतिभिर्भक्तै शुद्धभावेनानुस्मृतो भगवान् सद्य एव तया हृद्यवरुध्यते। अयमेव परमो लाभो लोकेऽस्मिन् जातस्य जीवस्य, यतो हि एतेनैव सर्वतोऽधिक कृतकृत्यता सार्थकता च जीवनस्यास्य।

एव हीमे केचित् प्रधाना प्रमुखा वा गुणा यैर्जीवन कृतकृत्य सार्थक च भवति। विस्तरभियाऽन्येऽनेके गुणा न वर्णनविषयतामत्र नीता।

□

---

१ सरस्त कृत देसा ते कृतिन, तै।

## रे चित्त ! चिन्तय चिरं चरणौ मुरारेः

को नाम मुरारिर्यस्य चरणौ चिर चिन्तनीयौ ? यो मुरस्यारि, य कस्मिंश्चित् काले मुरनामक राक्षस हतवान्, योऽस्य सर्गस्य पर सत्य, परमार्थत पराऽपर ब्रह्म, योऽस्य जगत स्रष्टा, पालक, संहर्ता च, यश्चादिकवये ब्रह्मणे सङ्कल्पमात्रेण वेद ददौ, यथा भागवतस्यादावेव मङ्गलश्लोके वर्णितम्—

'जन्माद्यस्य यतोऽन्वयादितरतश्चार्थेष्वभिज्ञ स्वराट्
तेने ब्रह्म हृदा य आदिकवये मुह्यन्ति यत्सूरय ।
तेजोवारिमृदा यथा विनिमयो यत्र त्रिसर्गोऽमृषा
धाम्ना स्वेन सदा निरस्तकुहक सत्य पर धीमहि ॥' —भाग १ १ १

इति । अथ च, यथा तत्रैवाष्टमे स्कन्धे ग्राहग्रस्तेन गजेन वर्णितम्—

'यस्मिन्निद यतश्चेद येनेद य इद स्वयम् ।
योऽस्मात् परस्माच्च परस्त प्रपद्ये स्वयम्भुवम् ॥
यस्य ब्रह्मादयो देवा वेदा लोकाश्चराचरा ।
नामरूपविभेदेन फल्ग्व्या च कलया कृता ॥
यथार्चिषोऽग्ने सवितुर्गभस्तयो निर्यान्ति सयान्त्यसकृत् स्वरोचिष ।
तथा यतोऽय गुणसम्प्रवाहो बुद्धिर्मन खानि शरीरसर्गा ॥
स वै न देवासुरमर्त्यतिर्यङ् न स्त्री न षण्ढो न पुमान् न जन्तु ।
नाय गुण कर्म न सन्न चासन् निषेधशेषो जयतादशेष ॥'
—भाग ८ ।३ ।३ ६

इति । य भागवतीं कथामारभमाणो वैयासिकि शुकदेव एव स्मरति—

'नम परस्मै पुरुषाय भूयसे सदुद्भवस्थाननिरोधलीलया ।
गृहीतशक्तित्रितयाय देहिनामन्तर्भवायानुपलक्ष्यवर्त्मने ॥'
—भाग २४।१२

इति। य ब्रह्मा कृष्णरूपेणावतरिष्यमाणम् एव स्तौति–

'मत्स्याश्वकच्छपनृसिंहवराहहसराजन्यविप्रविबुधेषु कृतावतार।
त्व पासि नस्त्रिभुवन च यथाधुनेश ! भार भुवो हर यदूत्तम ! वन्दन ते ॥'
—भाग १०।२।४०

इति। य च वसुदेव एव स्तौति–

'त्वत्तोऽस्य जन्मस्थितिसयमान् विभो ! वदन्त्यनीहादगुणादविक्रियात्।
त्वयीश्वरे ब्रह्मणि नो विरुध्यते त्वदाश्रयत्वादुपचर्यते गुणै ॥'
—भाग १०।३।१९

इति। एव रजस्सत्त्वतमोगुणैर्ब्रह्मविष्णुमहेशरूपाणि धारयन्, भुवोऽघभारहरणाय सद्धर्मरक्षणाय च मत्स्यकच्छपवराहनृसिंहवामनरामकृष्णादिरूपै सर्गान्तरेषु काले कालेऽवतरन् पुरुषोत्तम परमेश्वर एव मुरारिपदस्यार्थत्वेन ग्राह्य इति निर्गलितार्थ।

एवविधस्य भगवतश्चरणौ किमर्थ चिन्तनीयौ ध्यातव्यौ स्मरणीयौ वा, इत्यस्य प्रश्नस्योत्तर श्लोकस्य द्वितीयचरणे दत्त यदीदृश वर्तते–'पार गमिष्यसि यतो भवसागरस्य' इति। भगवन्मुरारेश्चरणयो स्मरण ध्यान चिन्तन वा भवसागरस्य पार नेतृ स्मर्तृन् ध्यातृन् चिन्तकाश्च। चरणाभ्यामेव देवाना स्मरणमारभ्यत इति विधि। देवाधिदेवस्यापि विषये स एव विधि। एव भगवच्चरणयोश्चिन्तन स्मरण वा प्रभोरेव चिन्तन, भगवत एव स्मरण, परमेश्वरस्यैव ध्यानम्। एतयोर्महिमान्वितयो प्रभुचरणयो चिन्तन स्मरण वाऽनेकशोऽनेकत्र विहित भागवतेऽन्यत्रापि। भागवते, यथा–

'यद्यप्यसौ पार्श्वगतो रहोगतस्तथापि तस्याङ्घ्रियुग नव नवम्।
पदे पदे, का विरमेत तत्पदाच्चलापि यच्छ्रीर्न जहाति कर्हिचित् ॥'
—(भाग १।११।३३)

परमरमणी भगवती श्रीश्चलापि भगवतो यच्चरण-युगल सकलगुणगणनिधानभूत न कदापि जहाति तस्मादेव च कारणात् स्वस्य श्रीरिति नाम सर्वथा सार्थक करोति 'श्रयति नित्य भगवच्चरणौ न च कदापि स्वप्नेऽपि जहातीति श्री', तस्मान्महिमान्वितचरणयुगलात् का नाम स्त्री विरमेत्।

यथा च-

> 'अथापि यत्पादनखावसृष्ट जगद् विरिञ्चोपहृतार्हणाम्भ ।
> सेश पुनात्यन्यतमो मुकुन्दान् को नाम लोके भगवत्पदार्थ ॥
> यत्रानुरक्ता सहसैव धीरा व्यपोह्य देहादिषु सङ्गमूढम्।
> व्रजन्ति तत् पारमहंस्यमन्त्य, यस्मिन्नहिंसोपशम स्वधर्म ॥'
>
> —भाग. १।१८।२१, २२

अथ यत्पादनखावसृष्टमपि विरिञ्चापहृतमर्घ्योदक सशिव जगत् पुनाति, तस्मान्मुकुन्दाद् व्यतिरिक्त को नाम भगवत्पदार्थो लोके ? यस्मिन् पादेऽनुरक्ता धीरा सहसैव देहादिषु ऊढ धृत वा सङ्ग परिहृत्य तदन्त्य पारमहस्य सन्यासाख्य व्रजन्ति यस्मिन् अहिंसाशमादय स्वधर्मा भवन्ति।

यथा च-

> 'यच्छौचनिस्सृतसरित्प्रवरोदकेन तीर्थेन मूर्ध्न्यधिकृतेन शिव शिवोऽभूत्।
> ध्यातुर्मन शमलशैलनिसृष्टवज्र ध्यायेच्चिर भगवतश्चरणारविन्दम् ॥
>
> —भाग। ३। २८।२३

इति। यत्पादप्रक्षालनजलान्निस्सृताया सरित्प्रवराया भगवत्या भागीरथ्यास्तीर्थेन मूर्ध्नि धृतेन जलेन भगवान् शिव शिवो मङ्गलरूपो बभूव यच्च पादारविन्द स्मृत सत् ध्यातुर्मनसि विद्यमान पापपर्वत विदारयितु वज्ररूप तत् चिरकाल ध्यायेत् येन चित्त सर्वथा निर्मल सत् निर्वृतिक स्थिर च भवेत्।

यथा च पुन-

> यत्पादपङ्कजपलाशविलासभक्त्या कर्माशय ग्रथितमुद्ग्रथयन्ति सन्त ।
> तद्वन्न रिक्तमतयो यतयोऽपि रुद्धस्रोतोगणास्तमरण भज वासुदेवम् ॥

इति। यस्य पादयो सक्ता सन्त ग्रथित कर्माशय यद्वदुद्ग्रथयन्ति तद्वद् ऊर्ध्व- स्रोतसोऽपि भगवच्चरणस्मृतिशून्यत्वात् रिक्तचित्तायतनयो नैव कर्तुं समर्था, स सर्वेषामरण शरण्यो भगवान् वासुदेवो भजनीय । अपि च-

'ध्येय सदा परिभवघ्नमभीष्टदोह तीर्थास्पद शिवविरञ्चिनुत शरण्यम्।
भृत्यार्तिह प्रणतपालभवाब्धिपोत वन्दे महापुरुष! ते चरणारविन्दम्॥'

इति। यच्चरणारविन्द ध्येय स्मरणीय चोच्यते तद् भक्ताना सकलपरिभवनाशक सकलाभीष्टदायक, शिवविरञ्चिपूज्य, भक्ताना शरण्य तदार्तिनाशक भवसागरतरणे तरणिरूप चास्ति। एवविध सर्वगुणागार सर्वसिद्धिद भुक्तिद मुक्तिद च भगवच्चरणारविन्दमेव नित्य ध्यायेत् श्रेयस्काम इति साधूक्त–

'रे चित्त ! चिन्तय चिर चरणौ मुरारे., पार गमिष्यसि यतो भवसागरस्य।
पुत्रा कलत्रमितरे सुहृद सखाय, सर्वं विलोकय सखे मृगतृष्णिकेव॥'

□